लोकमान्य-बालगङ्गाधरतिलक-लालालजपतराय-बिपिनचन्द्रपाल-अरविन्दघोष-रासबिहारिघोषप्रभृतिदेशनायकैः प्रारब्धस्य स्वाराज्यान्दोलनस्य सहस्पन्दनं कुर्वाणाः यलत्तूरआचार्याः शताधिकान् श्लोकान् निर्माय आंग्लसर्वकारस्य दौष्ट्यं, कम्पनीशासनस्य स्वार्थान्धतां, इंग्लिष्राजकारणस्य शोषकतां च परिणामकारिसरण्या आविरकुर्वन्। विजयपुरमण्डले सर्वजनानां हृदयक्षेत्रेषु स्वाभिमानज्योतिरुद्दीपयामासुश्च। उत्तरकाले महावृक्षात्मना परिणतस्य स्वातंत्र्यद्रुमस्य बीजावापनं कर्णाटक प्रदेशे गलगलीग्राम एव श्रीयलत्तुरकृष्टाचार्यैरेव कृतम्।

तेषामेव प्रेरणया रामाचार्यैरपि स्वराज्यरत्नाकरनामकं खण्डकाव्यमपि लिखितम्। पुरस्तात् कतिपयवर्षानन्तरं तस्य काव्यप्रबन्धस्य मुद्रणं पुण्यपत्तने विहितम्। तत्प्रकाशनं केसरीमराठापत्रिकालये महाराष्ट्र साहित्यसम्राट् नरसिंहचिन्तामणिकेळकरमहोदयैः सम्पन्नम्। एतदवधौ रामाचार्याः न्याय-व्याकरण-साहित्यदिषु प्रावीण्यं समपादयन्। तदनन्तरं भ्रातृकूर्माचार्याणां सविधे गलगलीग्रामस्थनागेशभट्ट केशवशर्मनामभ्यां सहाध्यायिभ्यां सह मीमांसाध्ययनमप्यकुर्वन्। अर्थसंग्रह, आपोदेवी, मीमांसान्यायप्रकाश, जैमिनीय न्यायमाला, भाट्टसंग्रह, शाबरभाष्य, तन्त्रवार्तिकादीनां सम्यगध्ययनेन मीमांसा-तत्त्व-वित्त्वावतंसित-शंसित-मांसलित-मति-मनीषितामभजन्।

तदनन्तरं उत्तरमीमांसां कुलगुरुश्रीश्रीसत्यध्यान तीर्थस्वामिपादेभ्य एव अध्येतुकामाः श्रीमठमुपाययुः। तदानीं सः श्रीमठः वेदान्तविद्यालयः नव्यतर्क-प्राचीनतर्क-ब्रह्मतर्कादि-विद्याध्यापन-केन्द्रं पूर्वमीमांसोत्तरमीमांसा-मनषि-मल्ल-मतल्लिका-निर्मापक-मन्दिरं असंख्य-सांख्य-संख्यावदुद्भावन-भवनं शास्त्रपारावर-पारीण-विद्वद्धुरीण- मौक्तिक-रत्न-समुद्गम-सिन्धुः अध्यात्मविद्या-लब्ध-वैदग्ध्य-विद्वन्मणि-खणीभूतः वैदिकवैष्णव-विद्या-विश्व-विद्यालयः इति प्रथितः आसीत्। तं उत्तरादिमठं ब्रह्मविद्या-रहस्य-विवित्सया भगवत्तत्व-जिज्ञासया सर्वज्ञ-शास्त्र-शिशिक्षिषया च समुपागच्छन् सत्तत्वबुभुत्सवः मुमुक्षु-श्रेणी-प्रविविक्षवः गुरु-प्रसाद-प्रासादमारुरुक्षवः ज्ञान-मेरु-संदिदृक्षवः रामाचार्याः।

उत्तरापथे धीमत्तरान् प्रत्यर्थि-बुधप्र-वरान् वादे निरुत्तरान् विधाय उत्तरनामक-भगवत्प्रस्थापितस्य उत्तरादिमठस्य मध्वमतस्य च उत्तरोत्तरमुत्कर्षं साधितवन्तम् सत्राजितमिव सूर्यानन्दार्पितससुवर्णमणिभूषणं, सूर्यमिव

निरस्तसमस्तदोषं, चन्द्रमिव सर्वज्ञ-मौलि-पीठ-प्रतिष्ठितं, चतुर्मुखमिव हंसकुलावतंसकेतुं, पार्वतीतपोयोगमिव वशीकृतविषमाक्षं, दामोदरमिव यशोदयालालितं, आदिशेषमिव परित्यक्तभोगं, अश्वत्थामानमिव सन्ततं कृपानुगतं, मरुस्थलमिव अपापं, संध्याकालमिव काषायकान्तिशोभितं, पर्यायमिव अर्यम्णः, प्रतिबिम्बमिव अम्बुजयोने; विकल्पमिव कल्पतरोः, वीप्सामिव सनत्कुमारस्य, पुनरुक्तिमिव चन्द्रिकाचार्याणां, अपरावतारमिव श्रीराघवेन्द्रस्वामिनां, द्विर्भावमिव भावबोधकाराणां, अदृष्टं कामेन, अस्पृष्टं क्रोधेन, अमुष्टं मोहेन, अनाकृष्टं विषयैः, अनाघ्रातं गर्वेण, अचुम्बितं दम्भेन, अलक्षितं स्वार्थेन, अविडम्बितम् अहंभावेन, अविकारितं ममकारेण, भास्वन्तमपि न कुवलयपीडकं, सुधाकरमपि न दोषाकरं, पावकमपि अकृष्णवर्त्मानं, गिरीशमपि अनुग्रं, चतुराननमपि न रजोमूर्तिं, विनतानन्दनमपि न पक्षपातिनं, विबुधाधिपमपि न गोत्रभेदकं, पुण्डरीकाक्षमपि न लक्ष्मीलोलं, श्रीराममपि न कनकमृगतृष्णाकुलं, समस्तदुर्मतध्वान्तदिवाकरं, वैदिक-वैष्णवेन्दीवर-विकासन-शीतकरं, सकल-सद्गुण-गणाकरं, शमसीमानं, दमधामानं, भक्तिभूमानं, महितमहिमानं, गुरूत्तम-घन-गौरव-गरिमाणं, श्रीसत्यध्यान तीर्थ-गुरु-सार्वभौममुपसृत्य भय-भक्ति-भरानताकृतिः धरणीपृष्ठ-स्पष्ट-स्पृष्टाष्टांगं दण्डप्रणामं विधाय विरचय्याञ्जलिं सगद्गदकण्ठं अकण्ठोत्कण्ठातुरः श्रीरामचन्द्रः गुरुणां छात्रतां अनुग्रहपात्रतां च अधिजिगमिषुः विज्ञापयामास –

'अधीहि भगवो ब्रह्मेति' 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इति।

तदा करुणाभरणाः सर्वदुर्मत-दुर्विचार-निराकरणाः अपसारिताऽविद्यावरणाः सकललोकोद्धरणाः समस्त-भक्त-दुरितापहरणाः सदा विहित-सदाचरणाः श्रीमूलराम-चारु-चरण-चारणाः श्रीसत्यध्यानतीर्थ-श्रीचरणाः वात्सल्यरसेनेव प्लावयन्तः, अनुग्रहधारयेव स्नपयंतः, तीर्थजलेनेव क्षालयन्तः, ज्ञानामृतमिव निषिञ्चन्तः, कृपाम्बुवृष्टिमिव किरंतः, सकरुणकटाक्षक्षेपेन निरीक्ष्य सानन्दं सोत्साहं सानुग्रहं च ओमित्युक्त्वा सद्य एव प्रारभन्त आध्यात्मिक-विद्याध्यापनम्।

प्रथमं परमशुद्धं प्रमाणानुबद्धं श्रुतिस्मृतिसंमतं सद्युक्ति-सदुक्ति-जालानुविद्धं विश्वप्रसिद्धं, माध्वाध्व-मूलभूत-प्रमाण-प्रमेय-परिचायकं प्रमाणपद्धतिनामकं

जयतीर्थ-मुनिमनीषि-ग्रथित-ग्रन्थं श्रियःपत्याचार्यरचितादर्श-टिप्पण्यादि-नैकव्याख्यानो-परकृतं प्रावोचन् रामचन्द्रं गुरुत्तमाः। तदनु विपक्षरुक्षकक्षदावावलीं वादावलीं पाठयन्तः चन्द्रिकाचार्यकृतं न्यायामृतमेव तर्कशाण-कषण-निशित-शेमुषीकं रामं पाययामासुः।

तदनन्तरं श्रुतिसम्मत-व्यासानुमत-सन्मत-परिज्ञानोपकरणानि, अज्ञान-सागर-सन्तरणानि, विहित-सुज्ञानामृतवितरणानि, बौद्ध-जैन-चार्वाक-सांख्य-वैशेषिक-मायावादादिदुर्वाद-पराकरणानि दशप्रकरणानि दशप्रमतिविरचितानि आचूलमूलं सम्यगेव समभ्यसीत् ज्ञानमेरोः शिष्यामरतरोः स्वकुलगुरोः आलस्यविरामः औदास्योपरामः तीक्ष्णतरप्रज्ञा-प्रतिभा- शास्त्रीय-व्युत्पत्ति-सम्प्रतिपत्ति-गुरुपसत्त्यादिसद्गुणारामः श्रीरामः।

तदनन्तरं इन्द्रावतारत्वेन विख्यातकीर्तेः जयतीर्थमुनेः सुमनसां कर्णपूरायमाणा, श्रीमदानन्दतीर्थविरचित-ब्रह्मसूत्रभाष्यव्याख्या अतिमुख्या सुज्ञानप्रकाशिका अज्ञानविनाशिका तत्त्वप्रकाशिका प्रारब्धा। धिषणापहसित-धिषणाः करतलामलकीकृत-सर्व-समयाः प्रतिभाञ्जलि-चुलकीकृत-वेदवेदान्त-वारिधयः सुज्ञाननिधयः वैराग्यशेवधयः मध्वमतवारिजपुष्पंधयाः गुरुवराः तत्त्वप्रकाशिका- व्याजेन श्रीव्यासराज-विरचित-समग्र-चन्द्रिकाग्रन्थमेव सरहस्यस्वारस्यं श्रीराघवेन्द्र-स्वामिकृत-प्रकाश-व्याख्यानसहितं प्रावोचन्। तत्त्वप्रकाशिका-चन्द्रिका-ग्रन्थद्वय-मङ्गलकरणानन्तरं श्रीचरणैः श्रीजयतीर्थश्रीमच्चरणानां मेरुकृतिरिति प्रसिद्धा विद्यारण्य-सदृगद्वैतमत-विद्वद्धौरेयैः गजांसारोपणगौरवेण संमानिता श्रीमन्न्यायसुधा वाक्यार्थचन्द्रिका, यादुपत्य, परिमळ, गुर्वर्थदीपिका, सत्यव्रतीय, चषकादि-व्याख्यागत-विशेषार्थ-विशदीकरणपूर्वकं समारब्धा पाठयितुम्।

शंकरभाष्य, भामती, कल्पतरु, विवरण, अद्वैतसिद्धि, ब्रह्मानन्दि, रत्नप्रभादिपरवादिग्रन्थोत्थापित-पूर्वपक्षनिराकरणपरतया सुधापंक्तीः योजयित्वा कूलंकष-विमर्शन-पूर्वकं सर्वंकषसुधापाठं प्रावोचन् स्फुरत्कारुण्याः गुरुवरेण्याः। एवं गुरुमुखात् प्रस्थानत्रयं, व्यासत्रयं, सर्वमूलं चाधीत्य आत्मसात् कृत्वा ज्ञानभाण्डारमेव सम्पादयित्वा वेदवेदान्त-सुधान्त-द्वैतग्रन्थान्तरंग-रहस्य-स्वारस्य-विज्ञो भूत्वा सुधामंगलोत्सवं सोत्साहं विधाय गलगलीं स्वग्राममुपाजगाम भू-सुरेन्द्र प्राप्त-वैदुष्य-सान्द्रः निरस्ततन्द्रः काव्यकुमुदचन्द्रः रामचन्द्रः।

ततो गालवक्षेत्रे वसद्भिः आचार्यैः सौदामिनीनाम्नी काचन संस्कृतपत्रिका कतिपयकालपर्यन्तं प्रचालिता। तत्र आचार्याणां कविताकौशलं लेखनकलाकोविदत्वं विषयनिरूपणनैपुण्यं च सुव्यक्तम्। ततो रामचार्याणां पाण्डित्य, कवित्व, सौजन्य, पाठ-प्रवचन-पटीयस्त्वादि-सद्गुण-लुब्धैः नैकशिष्यगृहस्थैः साग्रहं साञ्जलिबन्धं सनिर्बन्धं च प्रार्थिताः विद्वत्सहजदारिद्र्योपद्रुताः बेळगांवनगरमागच्छन्। तत्र च सरस-संस्कृत-भाषणावर्जित-सभिकैः गद्य-पद्य-निर्माण-कर्मालंकर्मीणैः सहृदयैः बुर्लीश्रीनिवासाचार्यैः सह संमंत्र्य संगत्य मधुरवाणीनाम्नीं संस्कृतपत्रिकां प्रारभंत।

अचिरेणैव कालेन मधुरवाणी हृद्यैः पद्यैः, निरवद्यैः गद्यैः, समाजोद्बोधकैः सम्पादकीयैः, सहृदयहृदयोल्लेखैः लेखैः, रसिक-विमर्शकाकृष्टान्तःकरणैः मंगलाचरणैः चमत्कृति-विशेषभूषितैः सुभाषितैः, रसकूपावतरणिकाभिः मासावतराणिकाभिः अन्योक्तिभिः अन्यान्यैश्च कवि-मनीषि-मूर्धन्योपवर्णितैः विविधवाङ्मयीन प्रकारैश्च समग्रसंस्कृतसंसारमेव समतर्पयत्। मधुरवाणी-पत्रिकायाः मुखपत्रे मुद्रितः

"सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञा मूर्छाभरमपहरन्ती सुरगिरः।
मनोज्ञालंकारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते॥

इति प्रारम्भिकश्लोक एव एकान्तमनोरमः लोकंपृण आसीत्।

तथा- "राधाधर-मधुस्यन्द- मिलिन्दाय मधुद्विषे।
कृष्णा-पट-कुविन्दाय गोविन्दाय नमोऽस्तु नः॥"

इति च पत्रिकायाः प्रत्यंकमुपरिष्टात् मुद्रितः श्लोकः रामाचार्याणां रससिद्धिं वाणीशुद्धिं प्रतिभासमृद्धिं च प्रत्याययति स्म।

एवं श्रीरामाचार्याणां जन-जागरण-जागरूकैः स्फूर्तिदायकैः संपादकीयैः, स्तोत्ररूप-मंगलाचरण-मासावतरणिकादिपद्यैः, चारु-चित्र-चमत्कृति-रचनैः सुभाषितविनोदवचनैश्च पण्डितानावर्जयन्ती, पामरानानन्दयन्ती, रसिकजनमूर्धानि आन्दोलयन्ती च मधुरवाणी भारतस्य दिक्षु विदिक्षु विलक्षणामेव प्रसिद्धिं प्रवृद्धिं च प्राप्नोत्। न केवलं भरतखण्डे किन्तु पाश्चात्यदेशेष्वपि प्रसृतिं

समादृतिं च सविशेषामेव समासादितवती। सर् राधाकृष्णन् महोदयाः रषिया देशे, बी.जि. खेर महोदयाः ब्रिटन् देशे अन्ये च महिनीयाः जर्मन् फ्रान्स् अमेरिकादिदेशेषु मधुरवाण्याःप्रसारकार्यं व्यदधुः। पं.. मदनमोहनमालवीय, कैलासनाथकाटजू, एन्. सी. केळकर, सी.डी. देशमुख, लोकनायक अणे, पं. क्षमाराव प्रभृतयः नेतारः मधुरवाण्याः ग्राहका अभिमानिनः प्रोत्साहकाश्च आसन्। तदेतत्सर्वं श्रीरामाचार्याणां सरसलेखनानां सुरभारती- प्रसारण- प्रचारण-दीक्षा-दाक्ष्यस्य च परिणाम एवेति निश्चप्रचम्।

श्रीरामाचार्यैः बाल्ये पौगण्डवयसि तरुणिम्नि वार्धक्ये च विविध-विषय-मणि-खनीभूत-स्वलेखनी-लिखितानि गद्य-पद्य-नाटक–सुभाषित, शतक, खण्डकाव्य-महाकाव्य- गीतकाव्यादीनि यद्यद्य उपलब्धानि अभविष्यन् तर्हि संस्कृत साहित्य भाण्डारं नैकसहस्र पत्रात्मकं सुसमृद्धं सुसंपन्नं च समभविष्यत्। प्राक् सहृदयादि पत्रिकासु एतेषां मुद्रिता अपि कविताः मुकुन्दमुरली गैर्वाणीनिर्वेदादयः, अभिषंगास्पदप्रसंगादिगद्यलेखा अपि अद्य नोपलभ्यन्त इति अहो दौर्भाग्यं संस्कृतसारस्वतलोकस्य।

श्रीयलत्तूरकृष्टाचार्यसदृशैः शिष्ट-विशिष्ट-प्रतिभा-प्रकृष्टैः कवि-पण्डित-सार्वभौमैः दृष्टाः सुपरितुष्टाभिष्टुताः, मयापि मद्रास अडयारलायब्ररी ग्रन्थागारे अवलोकिता अपि मुकुन्दमुरली अभिषंगास्पदप्रसंगादयः श्लोकाः लेखाश्च इदानीं न क्वापि लोचनगोचरीभवन्ति।

रामाचार्यैः प्रतिदिनं दश-द्वादश-पञ्चदश-पद्यानि भगवत्स्तोत्ररूपाणि नियतमेव विरच्यन्ते स्म।

कदाचित् अधिकमासप्रसंगे अहमपि पितृव्यपादानां रामाचार्याणां गृह एव बेळगांवनगरे आसम्। तदा बेळगांवकर, देवळे, मुतालिक, दातार, पोद्दार प्रभृतयः आचार्याणां शिष्या आगत्य "अधिकमास निमित्तं प्रतिदिनं त्रयस्त्रिंशद् अपूपाः अस्माभिः श्रीमद्भ्यो दीयन्ते। तत्प्रत्याम्नायतया भवद्भिरपि तावत्संख्याक भगवन्मंगल पद्यानि सद्य एव निबध्य अस्माकं पारायणाय प्रदीयन्ताम् "इति प्रार्थयन्त। तेषां याचनामंगीकृत्य पितृव्यपादाः "त्वयापि प्रतिदिनं त्रयस्त्रिशंत् श्लोकान् विरच्य श्रीहरिसेवा विधीयतां। अत्रत्या गृहस्थाः एकैकपद्यस्य एकैकरूप्यकं दक्षिणात्वेन प्रदास्यन्ति। त्वमपि प्रयतस्व" इति माम् आदिशन्।

आचार्यास्तु वरकवयः स्वयं प्रतिभातपरावराः प्रतिदिनं ३३ पद्यानि प्रासोल्लासभरितानि भाव-भाषा-सौन्दर्य-मधुरिम-मेदुराणि लीलालालित्येनैव रचयन्ति स्म। अहं तु महाप्रयत्नेन आत्मानं आयासयित्वा, मस्तिष्कं निष्पीड्य, कथमपि दशद्वादशनीरसपद्यानि वाग्देव्या सह मुष्टीमुष्टि कचाकचि नियुध्य व्यरचयम्। तदा पितृव्यपादा मदीयरचनाया मांद्यं अनुलक्ष्य स्वयमेव पुनर्भूयांसि पद्यानि विरच्य मन्न्यूनतामापूर्य मन्नाम्ना एव त्रयस्त्रिंशत्पद्यानि निर्माय तावत्संख्याकरूप्यकदक्षिणां मह्यं दापयन्ति स्म। एवं तस्मिन्नेकस्मिन्नेव अधिकमासे आहत्य सहस्राधिकान्येव भावबन्धुराणि अर्थसुंदराणि पद्यानि आचार्यैः सद्यःस्फूर्त्या कृतानि। परं तानि अन्यान्यपि तद्रचनानि बहुलतरं प्रणष्टान्येव।

## आचार्याणां कवन-कला-कौशल्यम्

श्रीरामाचार्यैः विरचितानि अद्य यावदुपलब्धानि श्रीरमानारायणस्तोत्र पराणि मङ्गलपद्यानि संस्कृत साहित्यक्षेत्रे हृदयङ्गममेव एकं अपूर्वं रसरङ्गमेव विनिर्ममिरे। संस्कृतचन्द्रिकायां, सहृदयायां, अमरभारत्यां, भवितव्ये, विद्योदये, संस्कृतरत्नाकरे, संस्कृतं नामके संस्कृत साप्ताहिक पत्रे तथा अन्यान्यासु च पत्रिकासु प्रतिमासं प्रत्यंकं च मङ्गलपद्यानि नियतं प्रकाश्यन्ते स्म। परंतु सर्वाण्यपि संस्कृतपत्रिकाप्रकाशितानि मङ्गलपद्यानि प्रायः नीरसान्येव। न रसः, न नावीन्यं, नार्थचमत्कृतिः न भाववैशिष्टयं, न ध्वनिः। केवलं कर्तृकर्मक्रियापदानां यांत्रिकविन्यासरुपा 'शुष्क दुष्कवनक्रीडा एव शिरःपीडावहाः शारदाया एव व्रीडामुत्पादयन्ति स्म। नाहं पितृव्यपक्षपातेन एवं वच्मि। किन्तु इयं वस्तुस्थितिरेव।

यदा मधुरवाणी प्रारब्धा तदा स्तोत्र-साहित्य एव क्रान्तिरेव कृता रामाचार्यैः। "कवयःक्रान्तदर्शिनः" इति वचनस्य याथार्थ्यमापादितम्।

रामाचार्यरचितेषु मधुरवाणीप्रकटितेषु मङ्गलाचरणपद्येषु शताधिकेषु एकोऽपि श्लोकः नीरसो वा रुक्षो वा विच्छित्तिविशेषाऽनाधायको वा शब्दालंकारवर्जितो वा अर्थालंकारविधुरो वा कल्पना-कौशलाऽप्रत्यायको वा न परिदृश्यते। एकैकस्मिन्नपि मंगलपद्ये नवनवीनभावानां आविर्भावं चमत्कारकारकया रीत्या कान्त-पद-किंकिणि-झंकार - युक्तालंकार-सरण्यामेव

वितन्वन्ति महाकवयः। अर्थेषु नावीन्यं, भावेषु चैतन्यं, भाषायां माधुर्यं, निरूपणे नैपुण्यं, नादे च माधुर्यं, रचनायां च चातुर्यं रामाचार्यपद्यानां वैशिष्ट्यम्। ईदृग्गुणविरहितः एकोऽपि नीरसः श्लोकः श्रीरामकृतःनोपलभ्यते। निर्भाव-निरलंकार–निरर्थक-नीरस-शुष्कश्लोकनिर्मितौ सर्वथा असमर्था एव रामाचार्याः।

नन्दनन्दनस्य गोविन्दस्य मन्दहासस्य सुभगताप्रभावं परिणामं परिणाहं च सुधानिष्यन्दिन्या सहृदयानन्दिन्या वचोवैखर्या कथं व्यावर्णयन्ति कविकुलकलाधराः आचार्याः! पश्यन्तु काव्यास्वादनरसिकाः

"राकोल्लासि-निशाकरामल-कर-न्यक्कार-पारंगमाः
नन्दं कन्दलयन्तु नन्दजनुषो मन्दस्मितस्यांशवः ॥
राधाया हरिचन्दनन्ति कुचयोर्हारन्ति कण्ठे कचे
मल्लीयन्ति रतावसानसमये क्षौमन्ति ये ह्रीजुषः ॥"

अत्र 'हारन्ति' 'मल्लीयन्ति' 'क्षौमन्ती' त्यादि प्रयोगेण रामाचार्याणां व्याकरणपाण्डित्यं, कवनकलापाटवं, स्तवनशरीरे रसपूरणप्रकारश्च अन्यादृश एव व्यक्तीभवति। तेषां महाकवित्वोचित-प्रतिभा-प्रकर्ष-प्रत्यायकाश्च कतिपयश्लोकाः मदीयनीरसरुक्ष विमर्शनविवरणे विनैव अत्र उदाह्रियन्ते। सुज्ञैःरसज्ञैर्वाचकैरेव तत्पद्यसौष्ठवमनुभूयताम आनन्द्यतां च राधा-माधव-संवादस्य रुचिरता रसरस्यता च गोचरीक्रियतां।

"राधे त्वं शरणं प्रयाहि न चिरात्, नाथ त्वमेवासि तत्
कान्ते शान्ततमं निशान्तमधुना, किं तेऽनभीष्टं परम् ॥
का वा वल्लभ-केलि-लालस-मना अन्तं निशाया लषेद्
एवं माधव-राधिका-रस-लसच्चाटूक्तयःश्रेयसे ॥"

यशोदां प्रति बालकृष्णस्य उक्तिः –

"राधानुषक्तमपि मामपराधिकं त्वं
जानासि मातरधुना न हि चित्रमेतत् ।
संतोषकारिणमपि स्मरतां जनानां
सन्तो वदन्ति सुधियोऽपि जनार्दनं माम् ॥"

"लक्ष्मीदारक गोपदारक कृपासंत्रातवृन्दारक
रक्षोदारक भूविदारकतनो भक्तावनोदारक ॥
दीनोद्धारक शैलधारक भवाम्भोधेः सतां तारक
पापोत्सारक तापहारक भव श्रीश श्रियां कारकः ॥"

श्रीहरेः मत्स्य कूर्म वराहाद्यवताराणां श्रृङ्गारमयमेव कारणं कल्पयति श्रीरामप्रतिभा–

"मीनाक्षी भवतीत्यहं प्रणयतो मीनोऽभवं वार्धिजे
त्वं कूर्माभकपोलिकेति कमले कूर्माकृतिश्चादृता ॥
भूदेवी त्वमिति प्रिये रसवशाद् भूदारतामाप्नुवं
नर्मोक्त्येति हरेः प्रसन्नहृदया श्रीर्मे श्रियै श्रेयसे ॥

एवं हनुमतोऽपि वैशिष्ट्यं विशिष्टया रसजुष्टया शैल्या कृतमाचार्यैरनुवाच्यताम्

"आजन्म ब्रह्मचारी स्वसुखमगणयन्नन्य-दाम्पत्य-सौख्ये
भूयः शान्तिं दधानः सकल निगमविद्, हन्त तिर्यक्षु जातः ॥
पक्षद्वन्द्वेन हीनोऽप्यमरपथमथोड्डीन उत्तीर्णसिन्धुः
पायान्नः कोऽपि कोपात् क्षपितरिपुकुलः सत्कृपालुः कपीशः ॥"

## "घटिकाशतश्लोकी"

प्राच्यविद्यापरिषदा आहूताः

श्री रामाचार्याः काशीक्षेत्रमयासिषुः। तत्र हिन्दूविश्वविद्यालये विज्ञान प्राध्यापकाः डॉ. अमुण्डी रंगरावमहोदयाः आचार्याणां पं. मदनमोहन मालवीमहोदयस्य च मिथो मेलनमकारयन्।

मालवीयानां आध्यक्ष्ये प्रचलितायां कविगोष्ठ्यां आचार्यैः पञ्चषनिमिषेष्वेव आशुकविभिः अध्यक्षाणामपेक्षानुसारं पञ्च पद्यानि सद्य एव निबध्य पठितानि

"पाञ्चालीसदने कुविन्द निगमे गोविन्द नन्दव्रजे
श्रीराधा-वदनारविन्द-मधुनः पाने मिलिन्द प्रभो ।
देवाद्विण्मृगाया-पुलिन्द हृदयालिन्देषु नृत्यन् सतां
पूर्णानन्द मुकुन्द मय्यपि दयामन्दाकिनीं स्यन्दय ॥

क्षीराम्भोधिशयः सतां भव-महा-कारान्धकारापहः
कारागार-जनुस्स नन्दतनयाकारो जगत्कारणम् ॥
क्रूराशेष-सुरारि-संहति-करोऽक्रूरादि-भक्तेष्ट ओं-
कारार्थः करुणाकरोऽस्तु शरणं श्रीराधिकाराधितः ॥ "

इत्यादि विष्णुस्तोत्रपरं पद्यपंचकं श्रुत्वा अतीव सन्तुष्टाः मदन मोहनमहोदयाः "वैष्णवकवयोऽत्रभवन्तः भवंतः काशीशं विश्वनाथं कदाचिदपि किं नैवोपश्लोकयन्ति? इति पृष्टवन्तः।

तदा रामाचार्याः "मनोनियामकं रुद्रदेवं वयं वैष्णवाः तदनुग्रहमाकांक्षमाणाः बहुवारं स्तुवीमः। वारंवारं स्मरामः। नमामश्च प्रतिदिनमप्रमादेन"। इति उक्त्वा पुनः पञ्चषनिमिषावकाशं लब्ध्वा महादेवमुद्दिश्य पञ्चश्लोकान् विरच्य पठितवन्तः –

"भवःसन् भूतानां भवभयहरो भासि भुवने
शिवःसन् साधुभ्यो दिशसि च शिवावल्लभ शिवम् ।
त्रिशूली लोकानां हरसि हर शूलं च सकलं
विषादी त्वं दत्वाऽमृतमिह विषादं तिरयसि ॥

"पातुं पाणिधृते सुदुर्जरविषे बाष्पाविलाक्षीं शिवां
षड्भिश्चीत्कृतिमाननै र्विदधतं षाण्मातरं चातुरम् ।
शुण्डाग्रेण कराभिकर्षणकरं स्तंबेरमास्यं भिया
निष्पन्दान् प्रमथांश्च वीक्ष्य विहसन्नीशोऽवतात्सांत्वयन् ॥"

इत्यादि पंच पद्यानि सद्यःस्फूर्त्या निबद्ध्य तदैवापठन्।

एवं दशश्लोकान् आहत्य पञ्चदशनिमेषावधौ एव कल्पनाकौशल्येन प्रासांनुप्रास-विलासोल्लासेन अर्थगाम्भीर्येण भावसौन्दर्येण भाषामाधुर्येण च मनोहरान् विरचितवत आचार्यान् अभिनन्द्य आनंद्य च अध्यक्ष मदनमोहन मालवीयाः काशी-कवि-पण्डित-मण्डल-समक्षमेव ऊर्णवस्त्र प्रदानपुरस्सरं सत्कृत्य "घटिका शतश्लोकीति" बिरुद-प्रदान-पूर्वकं मानयामासुः।

अस्मिन् लघुपरिणाहपरिमिते ग्रन्थे तेषां मंगलाचरण रूपाणि केवलं द्विशतपद्यानि प्रकाशितानि। प्रत्येकस्मिन्नपि श्लोके नवो नवो विचारः, अपूर्वा कथनरीतिः परिदृश्यते। रामाचार्याणां सर्वाण्यपि पद्यानि न केवलं

हृद्यानि न केवलं अनवद्यानि किन्तु वाचनक्षण एव हृदयाकाशे चेतश्चमत्कृति-विद्युदुन्मेषण-चणानीति अनुभवन्त्येव रसिकाः वाचकसहृदयाः। रामाचार्याणां साहित्ये कुत्रापि चर्वितचर्वणं वा पिष्टपेषणं वा न परिदृश्यते। नावीन्यमेव रामाभिरामसहित्यस्य चैतन्यशक्तिः।

श्रीरामाचार्यैः विरचितानि देवतास्तोत्ररुपाणि अष्टकानि राग-ताल-लय-संगतानि गेयतागुणेन रसरंगायमाणानि संगीत-भंग्या संगातुं अतीव हृदयंगमानि सभासम्मेलनादिषु वीणा-वेणु-मृदंग-स्वरपेटी-ध्वनिसाहित्येन तत्र तत्र गीयन्ते मधुर-कण्ठ- गायक- गायकीभिः। मुरलीधराष्टकगतं श्लोकत्रयमात्रमुदाह्रियते मुदात्र।

"श्रीमनोहर सोमसुन्दर सामगानविदां वर
प्रेमचुम्बितराधिकाधर पाहि मां मुरलीधर ॥
इन्दिरा-प्रिय-मन्दिरायित-वक्षसं हतरक्षसं
चन्दिरामल-सुन्दर- स्मित । भासुरं-प्रियभूसुरम् ॥
कन्दरायत-मन्दराचल-धारिणं शुभकारिणं
वन्दितोऽस्मि वधूजनांचितचन्दनं यदुनन्दनम् ॥
मञ्जु-वेणु-निनाद-मुग्ध-गवां गणैर्भरितांगणै –
रञ्जसा रसनावलीढ-सुधारसं जितसारसम् ॥
कञ्ज-दृक्कुच-कुंकुमीय-रुचारुणं हसितारुणं
कुंज-चारि-शिशोः सनूपुरमाश्रये चरणं श्रिये ॥
श्रोणि-भार-निरुद्ध-यान-नितम्बिनी-मणि-रुक्मिणी–
पाणि-पीडन-मङ्गलोत्सव-लालसं मदनालसम् ॥
क्षोणिपालमपास्त-संकट-पाण्डवं कृत-ताण्डवं
प्रीणयामि लघुस्तवेन हि केशवं धृत-शैशवम् ॥

आचार्यैः स्वकाव्यानां अन्ते स्वनामांकनं कियच्चेतश्चमत्कारकारकं क्रियत इत्येतत्परिशील्यतां रसज्ञैः प्राज्ञैः –

मुरलीधरस्तवनान्ते –
"क्षेमदं मुरलीधर-स्तव-पावनं रसजीवनं
कोमलोज्चल-भाव-षट्पद-भूषणं गतदूषणम् ॥

प्रेमतो दशकं पठन्तु कृपालवः श्रित-गालव –
ग्राम-धाम-विनीत-राम-बुधोदितं कविमोदितम् ।

एवमेव अश्वधाटीकाव्यस्य समापनपद्यम्

"अविदित-कवि-सीम्ना गालव-क्षेत्र-धाम्ना
नुत-यदुपति-भूम्ना प्रेरिता रामनाम्ना ॥
नलिन-भव-वधूटी-वाटिका-वाहि-चेटी
कवन-कुसुम-वाटीष्वश्वधाटी व्यनाटीत् ॥

श्रीनिवासाश्वधाट्याः अन्तिमं पद्यम्

क्षीराम्बुधेर्गिरिविहारागतस्य भुवि नारायणस्य भजना -
दारादुपासकहृदारामरम्यवसतेरागमैः कृतनुतेः ॥
श्रीरामनामकविनाराधकेन भवपारार्थिना सुखकरं
घोरापदालिपरिहारावहं प्रणुतिसाराष्टकं विरचितम् ॥ ९ ॥

एवं आचार्याणां प्रायःसर्व काव्यानां चरमपद्यानि परमरम्याणि भावगम्यानि स्तुतहरिपारम्याणि च सन्ति।

## श्रीरामाचार्याणां अश्वधाटीकाव्यस्य वैशिष्ट्यं औत्कृष्ट्यं च

संस्कृते अश्वधाटीकाव्यं अपरूपम् अतिविरळं च। प्रतिश्लोकस्य चतुर्ष्वपि चरणेषु त्रिस्थलेषु समानाक्षर- प्रासानुपात-नैयत्येन सविलासं चलद्राजाश्व-चरण-विन्यास-गति-धाटीं शब्दावपातेन अनुकुर्वदश्व-धाटी-काव्य-रचना बहुकष्टसाध्या। साधारणकविभिः साधयितुं रचयितुं च अशक्या एव। अत एव समग्रेऽपि संस्कृतवाङ्मये द्वित्रिचतुरा एव चतुरकवयः अश्वधाटीकाव्यं व्यरीरचन्। श्रीमदादिशंकराचार्याः शर्वाणीमभिलक्ष्य अष्टपद्यानि अश्वधाटी शैल्या इदं प्रथमतयां निबबन्धुः। ततो पण्डितराज जगन्नाथः "रामनाम्नः स्वपौत्रस्य कामनापूरणोत्सुकः। "पण्डितेन्द्रो विश्वहृद्यामश्वधाटीं व्यरीरचत् ॥ " इति स्वयमुक्त्वा हरि-हर- पार्वती-वर्णनापरं अश्वधाटी काव्यं निर्ममे। तदनंतरं गुरुसार्वभौम- श्रीवादिराज-श्रीचरणैः विष्णोः दशावतार-चरितानि कौतुक-भरितानि इतरासाधारणेन चातुर्येण अश्वधाटीसरण्यामेव मनोहारिण्यां वर्णितानि।

जगन्नाथपण्डितेन तु 'ककार'मारभ्य' क्षकार'पर्यंतेषु कतिपयानामेव अक्षराणां प्रासःस्वकीयायां अश्वधाट्यां साधितः। पण्डितराजेन वर्गीयव्यंजनेषु अवर्गीयव्यंजनेषु च पौनःपुन्येन प्रासानुपातसुलभानि कानिचिदेव आकार अनुस्वार सहितानि अश्वधाटी-गति-सुलभयोजनोपयुक्तानि एव अक्षराणि उद्‌धृत्य पद्यानि रचितानि। क वर्गे 'का' 'गा' इति द्वे एव सानुस्वारे साकारे अक्षरे आदाय "अंकादृतक्षितिजमङ्कानभिज्ञशशिशङ्काकरास्यसुपुमम्" इति, तथा

"मा गा मनस्त्वमनुरागातिभूमिमुपभोगानवाप्तुमनसा" इति च श्लोकद्वयमेव रचितम्।

रामाचार्यैस्तु कवर्गे क, ख, ग, घ, ङ. इति पञ्चानामपि अनुस्वार आकारयुक्त वर्णानां श्रवणसुभगं यतिप्रासानां नियतानुपातं संसाध्य पञ्चामृतरसप्रपञ्चनमेव पंचपद्येषु कृतम्।

एवं 'च' वर्गेऽपि पण्डितराजेन द्वे एव अक्षरे 'च' 'ज' इति गृहीत्वा द्वौ एव रचितौ श्लोकौ

"वाचा मरन्दमधुमोचा ... इति

खञ्जायितोऽधिमति गञ्जापरोऽपि इत्यादि ॥

तथा ट त वर्ग गत ठ 'थ' वर्णघटित शब्दानां वैरल्यमेवेति तौ हित्वा द्वित्रा एव तद्वर्गाक्षर श्लोकाः विरचिताः पण्डितराजेन। परं आचार्यास्तु 'ट' वर्गान्तःपातिनां पञ्चानां, तथा 'त' वर्गीयानां पञ्चानामपि मधुराक्षराणां प्रासोल्लासेन अन्तर्भावं कृत्वा दशश्लोकान् लीलालालित्येन साहित्यसौहित्येन कवित्वपाण्डित्येन च कथं मधुरमधुरं न्यबध्नन्निति वाचका एव पश्यन्तु स्वयमेव अस्मिन् ग्रन्थे।

लेखपरिणाहभिया क वर्गीयाः पंचश्लोका एवात्र उदाह्रियन्ते।

श्रीकण्ठ-संस्तुतमभीकं श्रियो लवलिपाकं जयच्छुचितम –
श्री-कम्र-हास-मधुरा-कन्यका-दृगवलोकं यदूत्तम-शिशुम् ॥
साकं व्रजे मृगदृशा कञ्ज-मुग्ध-करया कन्दुकोत्सवरतं
स्तोकं स्तवीमि शिर आकम्पकोल्लसित-माकन्द-सौरभपदैः ॥ १ ॥

राका-निशाकर-समाकार-रम्य-वदना कामिनीति कुमते
नैका वहन्हृदि वृथा कामनाः किमिति शोकाकुलो भवसि रे ॥
नाकादि-दिव्यतम-लोकाधिपाल-नुत-मेकान्ततोऽघहतये
श्रीकान्तमिन्दुरुचि-नीकाश-हास-मुखमाकारयस्व हृदये ॥ २ ॥

आखादितैस्त्वमुदराखातपूर्तिमनु वैखानसीयसि मृषा
शाखामृगीयसि विशाखापुरे खल विशाखादिभान्गणयसि ॥
भूखादिकेषु विधि-लेखान्तराल-गत-रेखां प्रमार्जयति को
लेखाधिपं निगम-शाखा-नुतं हिममयूखाननं स्मर हरिम् ॥ ३ ॥

आघार्मबिन्दुगणमोघादिनृत्यरचनौघावमग्नमनसा
हा घातुकाऽदयजनौघानुपैषि परितो घासमुग्धमृगवत् ॥
मोघाशया घनतमाघांस्तनोषि विविधाघावहानपि कुतो
मेघाभमस्तनरकाघातभीर्भवनिदाघापहं भज विभुम् ॥ ४ ॥

भृङ्गालकां वन-कुरङ्गार्भकायतदृशं गाढ यौवनभरां
किं गाहसे भृशमनङ्गातुरस्सरसश्रृङ्गारमुग्धहृदयः ॥
अङ्गारभासमभिषङ्गावलेपविधुरं गायमान-कमला-
पाङ्गावलोकिततुरङ्गाननं दुरित-भङ्गाय संश्रय विभुम् ॥ ५ ॥

नूनं 'ण'कारानुप्राणिताश्वधाटीपद्यानि तु संस्कृतसाहित्ये वैरल्येनैव उपलभ्यन्ते। परं रामाचार्यास्तु सारल्येनैव कौशल्येन चातुल्येन 'णा'क्षर घटितमश्वधाटीपद्यं हृद्यमेव न्यबध्नन्। आस्वाद्यतां तत्पद्यसौरस्यं

"प्राणाधिकं प्रणय-कोणाहतोऽविरतमेणाङ्कसोदरमुखीं
प्रीणासि रे कुसुमबाणाज्ञया सुखपरीणामितां किमगमः॥
क्षीणान्तरोऽसि यदि रीणामृतोल्लसित-शोणाधरे मुररिपौ
क्वाणावरीणतम-वीणादि-वाद्य-वर-वेणावुपेहि शरणम्॥

एवं 'ज्ञ' इति संयुक्ताक्षर घटित प्रासोल्लासभरितानि अश्वधाटीपद्यानि शंकराचार्यैर्वा जगन्नाथपण्डितेन वा 'नान्येन येनकेनापि कविना निर्मितान्यद्य यावदुपलब्धानि। परं रामाचार्यास्तु स्वोपज्ञप्रज्ञावैभवेन 'ज्ञा'क्षर घटित प्रासबद्ध-सुन्दर-पद्यप्रणयनेऽपि यशस्वीभवन्ति। चक्षुर्गोचरीक्रियतामदसीयमसदृशं सुन्दरतरं हृद्यतमं निरवद्यं पद्यं तदीयाश्वधाटी-काव्यस्य चरमं चरमाक्षर-प्रास-विलास-मनोहरं स्वप्रज्ञोपज्ञं सुज्ञैः।

"प्रज्ञादृगाचरितमज्ञासिषं न जपयज्ञादिकं यदुपते ।
राज्ञां नितान्तमसदाज्ञाकृतामपि समज्ञा-स्तवैकधिषणः ॥
विज्ञापयामि भृशमज्ञानिनं त्वमनवज्ञाय मां श्रुतिगणो –
पज्ञाकृते मम रसज्ञां गुणामृत-रसज्ञां कुरुष्व भगवन्।

असाधारणमेधापाटवेन रचनाकौशलेन कविताचातुर्येण च विरचित मश्वधाटी काव्यं सरसमनुवाचयतां स्फुटमवगम्येत आचार्याणां शब्द-प्रपञ्च-प्रभुत्वं ललित्य-युक्तसाहित्य-निर्माण-कर्मण्यलंकर्मीणत्वं च।

ईदृश्यामेव असदृश्यां अश्वधाटी-परिपाट्यां भूवैकुण्ठायमान-तिरुपतिक्षेत्र-परदेवतायाःसच्चिदानन्द-सुन्दर-वपुषः भक्तजन-मौक्तिकामोदपुषः भगवतःश्री निवासस्य समग्रमेव विचित्रं पवित्रं चारुचरित्रं चेताहारिण्या सुधा-मधुमधुरिम-मदापहारिण्या जयदेव-जगन्नाथादि-वाग्वैभवावधीरिण्या सरस-सुन्दर-सरण्या कवयन्ति कवि-कुल-तिलकायमानाः रामाचार्याः। कवि-काव्य-परिचायकस्य एतल्लेखस्य परिणाह-दैर्घ्यमनुलक्षयन्नपि तत्रत्य-पंचाश्वधाटी हृद्य-पद्यास्वाद्यता-प्रदर्शनाकांक्षां नियंत्रितुं नैव शक्नोमि

श्रीवासुदेव-दयिता वासवादि-विनुता वाडवेन सहसा
स्वावासवक्षसि पदावाप्त-ताडनरुषाऽवार्यहार्दकलहा ॥
सेवानुरक्त-जनभावानुरूप-फलदैवावनिं गतवती
देवाधिपोऽपि विरहीवाहिनायकगिरावाश्रितोऽवतु गुहाम् ॥ १ ॥

गोपालकेन बहुकोपाकुलेन परशोः पातनात्सरभसं
गोपालनार्थमयमापात-दर्शित-शिरःपाटनस्सुखतनुः ॥
भूपाय संगदितशापाक्षरो भवजतापापहो निजरुजो
लोपाय तीव्रमगदोपायवाञ्जयति सोऽपार-दिव्य-महिमा ॥ २ ॥

रामाकृतेऽयमभिरामाकृतिर्भुवनधामा सुमैरसुरभिता-
रामावनौ प्रबल-कामातुरश्चतुर-वामाश्ववाहन-गतः ॥
सोमाननामुपजगामाशु संकुपित-भामाजनेन दृषदां
ग्रामाहतः कमनधामा स पूरयतु कामान्रमासहचरः ॥ ३ ॥

आकाशराज-तनया-कामुकोऽखिल-हृदाकाशगो वनचरी-
नीकाश-कासिजरदाकारतः पटुतया कार्य-साधन-यशाः ॥
नाकाङ्गना-स्मित-विलोकास्पद-प्रकट-लोकातिशायि-चरित
श्शोकापहो भवतु मे कांक्षितं दिशतु पाकारि-पूर्व-विनुतः ॥ ४ ॥

वैवाहिकेन विधिना वांछित-क्षितिप-भूवारिजाक्ष्युपयम -
श्श्री-वायु-वारिभवभू-वामदेववनिता-वारुणीविहसनः ॥
भूवासिनां खलकलावागतोरुविपदो वारको यदुपति-
र्जैवातृकाभवदनोऽवाप्नुतां मम सदा वाङ्मनो-विषयताम् ॥ ५ ॥

ईदृश वैचित्र्य-वैशिष्टय-वैदुष्य-चातुर्य-चारुतर-श्रीराम-साहित्यमनुवाचयितुः गुणज्ञस्य, भवभूतेः "यं ब्रह्माणमियं देवी वाग् वश्येवानुवर्तते" इति उक्तिः स्मरणसरणिमधिरोहति।

रामाचार्याणां पद्यवदेव अथवा ततोप्यतिशयेनैव गद्यानि आस्वाद्यानि एकान्तत एव मनोहराणि। आचार्याणां शिरःपिण्डे परिवर्तमानान् विवर्तमानांश्च सूक्ष्मविचारान् आविर्भावयितुं पद्यापेक्षया विस्रतशब्दाऽयामविशिष्टगद्यशरीरमेव उपयुक्ततममिति विचार्य स्वहृदयकुहरे विवर्तमानान् देशभक्ति, धर्मश्रद्धा, संस्कृतप्रेम, अधर्मासहिष्णुता, सुधारकावज्ञादिज्वलत्तीक्ष्णविचारान् संपादकीय स्फुटलेखमुखान्तरं गद्यपद्धत्यामेव आविरकुर्वन् सामाजिकधार्मिक भावना-सहस्पन्दन-शील-वाक्शक्तिमन्तः आचार्याः।

"कोऽहं" इति सुधारकदम्पत्योः, तयोः पापपिण्डस्य च आत्मकथनात्मकः गद्यप्रबन्धःनूनं सुधारणाप्रणयिनां दृगुन्मीलकः वर्तते। तत्र भावानुगुणं भाषापि ओजस्विनी दण्डिशैलीवत् हितमित-प्रासानुप्रास-परिधि-परिवेषिता तीव्रतरभावावेशवैवश्येऽपि वैचारिक-जागरूकतामनुज्जिहाना तरुणतरुणीनां स्वच्छन्द-स्वैराचार-घोरपरिणामं स्पष्टं निदर्शयति।

नव्यसुधारणाप्रणयिनी लतिकानाम्नी तरुणी ललना उद्दामेन्द्रियलौल्येन मधुकराभिधतरुणेन संगता दधार गर्भम्। तदनु नवनव-युवती-संग-लोलुपेन तेन मधुकरेण परित्यक्ता स्वगर्भं पातयित्वा पुनर्विवाहं पतंगरायेण मुग्धस्वभावेन अकरोत्। ततो तेनापि विदित-तत्पूर्व-दुश्चारित्र्येण परित्यक्ता पश्चात्तापतप्ता स्वीय-दयनीय-शोचनीय-दशां सानुशयं निदर्शयति शोकोद्गारैः। दृश्यतां वश्यवाचां गद्य-वाचो-वीची-लहरी-समीचीनता।

"लतिका - पुनरपि प्रविष्टास्मि व्यसनरंगस्थले। प्रथमं कुमारी-भूमिकां अंगीकृत्य नवमतोन्माद-मथि-तमानसा भद्र-कृति-दरिद्रा क्षुद्र-कर्म-समुद्रा धिक्कृत-कुला न्यक्कृतशीला पराकृत-परलोक-भया निराकृत-कुल-नारी-सत्पथा परित्यक्तव्रीडा समादृत-विविध-क्रीडा समुदित-गुरुजन-मनःपीडा स्वभाव-परुषा विभावन-वशीकृत-पर-पुरुषा रुषावधीरित-धर्मा धर्मराज-भवने पुरस्तादनुभवनीय-यातना-शत-कल्पना-लेशविकला कला-विद्याधिगम-कुशलाऽप्यकुशलानुबन्धा अवधीरित-नीति-निर्बन्धा बान्धवावहेलिनी दुर्गुणशालिनी मलिनीकृतवंशकीर्तिः दुष्कृतमूर्तिः जनित-पितृ-जनार्तिः समुत्सिक्तस्वच्छन्द-विहारस्फूर्तिः साध्वीजन-दूरवर्तिनी वानरीव नरीनृत्यमाना गतमाना नितरामुद्दाम-वर्तनेन छिन्न-सखीजन-मर्माणि, बहुलाशर्माणि दुष्कर्माणि व्यतनवम्" इति परितप्यति। अस्मिन् कोऽहम् इति प्रबन्धे कवेःगद्यशैली अतीव मनोहरा।

मधुरवाण्याः प्राथमिक आदर्शसंचिकायां प्रकटितं 'आत्मनिवेदनं' नाम संपादकीयलेखनं संस्कृत साहित्ये गद्यलेखनस्य नूतन-क्षितिज-दर्शनमेवाकार्षीत्। तत् गद्यरूपं काव्यमेवेति वक्तुं शक्यते। अर्वाचीन संस्कृतप्रपञ्चे ईदृश समर्थशैल्या गद्यवाङ्मयं स्वीयविविधविचारवाहनं विधाय उपयोजितवन्तः धीमन्तः कवयः विरलतरा एव विरलतमाश्च। संस्कृतचन्द्रिका संपादक अप्पाशास्त्रि राशिवडेकर महोदयस्य वा, शिवराजविजयप्रणेतुःअंबिकादत्त व्यास महोदयस्य, भवितव्य, विद्योदय, सहृदया, अमरभारती, संस्कृतं, संस्कृत रत्नाकरादिविविध संस्कृत पत्रिकासंपादकेषु कस्यापि पद्यलेखन-कवनशैली श्रीरामाचार्याणां लेखनशैलीवत् ओजस्विनी तेजस्विनी हृदयाकर्षिणी च नासीत्। अतएव जयपूरात् भट्टश्रीमथुरानाथ शास्त्रिभिः संस्कृतरत्नाकर पत्रिकायां मधुरवाणी एव संस्कृत पत्रिकासु महाराज्ञीपट्टे अभिषिक्ता आसीत्। अर्थात् कविसार्वभौमपट्टे रामाचार्या एव अभिषिक्ताः इति ध्वनितं ध्वन्यध्वन्यध्वनीनैः मथुरानाथ शास्त्रिभिः।

गद्यं कवीनां निकषं वदन्तीति उक्त्यनुसारं रामाचार्याणां शैलीं गद्यनिकषे कषित्वा परीक्षन्तां प्रेक्षावन्तः। दृश्यतां आत्मनिवेदननामके मधुरवाणीप्रथमाङ्के आचार्याणां गद्यलेखनपद्धत्याः सारस्यं सौरस्यं स्वारस्यं माधुरी चातुरी वैखरी च।

"सरस-पद-विन्यास-मनोहरा शय्या-समारूढा समुज्ज्वल-गुणगणा हृदय-ङ्गमालङ्कारा मधुर-ध्वनिरसदृश-रस-निर्झर-परिस्राव-वशीकृत-रसिकावतंसा नववधूरिव विबुधवागियं कस्य वा सहृदयस्य न हृदयमावर्जयेद्बलादेव। परं पुरा किल कवि-कोकिल-वाल्मीकिगीता गीता-प्रसव-भाग्य-भाजनीभूता श्रीव्यास-महामुनि-विहित-महिम-व्यासा कविकुलतिलक-कालिदास-कलित-ललित-विलासा भासोद्भासिता भवभूति-विहित-नव-रस-विभूतिः भारवि-संभावित-भाग्यरविः बाणकवि-प्रथित-गुण-गणा श्रीहर्ष-समासादित-हर्षा क्षेमेन्द्र-संपादिताक्षाम-क्षेमा कैलासभूमिरिव कालिदाससेविता, भवानीव भवभूतिभासुरा, गगनस्थलीव विततभारविः, शिशिरश्रीरिव समाश्रितमाघा, तपस्विमूर्तिरिव भासोल्लासिनी चातुर्वर्ण्यव्यवस्थेव समादृतशूद्रका, वैकुण्ठपदश्रीरिव मुरारिपदरञ्जिता, सुरसभेव कविराजिता, दिविषद्द्वेषि-परिषदिव काव्यतोषिता, कुम्भसंभव-शासनपरिपाटीव भूभृदादृता, सुरादराऽपि परमपावना, पदाश्रयाऽपि शिरोमान्या, बाणभासुराऽपि सौम्या, वैराग्योपदेशिन्यपि अर्थाभिलाषिणी, सर्वभाषाणामुपकारिणी पोषणी तोषणी सततमुपजीव्यमाना दिव्या वाणी नूनमिदानीं दीनतमां दशामनुभवन्ती कस्य वा न दुःखाकरोति चेतस्सचेतसः।

या किल पुरा अङ्गेषु रिङ्गन्ती, वङ्गेषु त्वङ्गन्ती, कलिङ्गेषु भङ्गानभिज्ञा कुरुषु गुरुसन्माना, कोसलेषु कौशलसंपादितकुशला, काश्मीरेषु हर्षस्मेरवदना, नेपालेषु क्षितिपाललालिता, पांचालेषु समुदंचितमोदप्रपंचा, गौडेषु प्रगाढप्रचारा विदर्भेष्वर्भकमारभ्यावृद्धमनुवृद्धप्रगतिसंदर्भा, गुर्जरेषु समूर्जितसिंहगर्जना, महाराष्ट्र-सौराष्ट्रे-षुपुष्टि-तुष्टिमावहन्ती, कर्णाटकेषु पटुचटुलमटन्ती, आन्ध्रेषु नीरन्ध्रसान्द्रानन्दभरा, पाण्ड्येष्वखंडताण्डवक्रीडा, केरलेष्वविरलविहारा, कुन्तलेषु निरन्तरसंतोषभरा, सिंहलेषु भृशं हासोल्लासा, नितान्तं परिभवानास्पदवै-भवशिखरमारुढा प्रमोदस्य चरमसीमानमविन्दत, तामेतामिदानीं करणविकलामिव समापन्नदुरवस्थामवलोक्य सहजतयैव

वदनकुहरान्निस्सरेदेव हाहेति दुःखावेग-परिस्फुटितश्शब्दो दीर्घतरोर्ध्वनिश्श्वास-सहचरो भावुकानां नयनारविन्दादमंदनिष्यंददश्रुबिन्दु-संदोह-पुरस्कृतः"।

देवीवासन्ती (कादंबरी) कथा मैसूरराज कुलसंबन्धिनी रामाचार्याणां कलशकृतिरिति सर्वैरपि विमर्शकैः संस्कृत प्रेमिभिराद्दृता आस्वादिता अभिनन्दिता च। देवी वासन्तीकृतौ मधुर-कोमल-कान्त-पदावली-किङ्किणि-नादयुक्ता शब्दार्थालंकार-झंकार-सुभगा रामवाणी बाणभट्टमपि विस्मापयति। गद्यगीर्वाणगुरुं दण्डिनमपि विस्मारयति। बाण-सुबन्धु-दण्डि-त्रिविक्रम-भोजाद्यनन्तरं ईदृशीनां सुधा-मधु-मोचा-मधुरिमाचामन-दक्ष-वाचामाचार्यता-पदवीं रामाचार्यान् अंतरा कोऽनुभवितुमर्हति?

अनुभूयतां देवीवासन्ती गतगद्य-गदन-सौरस्यं स्वारस्यं रसिकावतंसैः "विस्मय-विकसित-लोचनस्तपोनिधिस्सुकृततीर्थो नाम महात्मा सिद्धपुरुषोऽकस्मादु-पगतस्य वृत्तान्तमखिलं दिव्येन चक्षुषा विज्ञाय विनत-मौलि-मार्जित-धूलि-भूतलं मुकुलीकृत-करकमलं विवर्ण-वदनाभिव्यज्यमान-विविधवेदनं मेदिनीनाथं क्षरत्करुणारसेन कटाक्षेण निरीक्ष्याचचक्षे गभीरस्वरेण। 'महाराज अलं खेदेन। अनियतसुख-दुःखाः खलु संसारिणः। प्रतिकूलदैवतया समनुप्राप्ता तवेयं दशा। मन्त्रिर्देशानुवर्तिना भवता पुष्कलं समरकुतूहलावेगं प्रतिबद्धवता समुचितमनुष्ठितम्। नचेन्महती एवानर्थपरम्पराऽनुभूयते स्म। अस्तु अपसारय, पराभवकातरतां हृदयात्। विधूनयाधिम्। दूरीकुरु दारदारिकानिष्टशङ्काम्। उत्सारयानुत्साहम्। निस्सारय पुनाराज्याधिग-माशङ्काम्। अचिरादेव कस्यचन महावीरस्य साहाय्येनाधिरोहिष्यसि सिंहासनम्। मानवत्या मानवत्या महिष्या वत्सया वासन्त्या च संगतः पुनरुत्कर्षमवाप्स्यसि। परं प्रतीपो विधिर्नैव देवतानुग्रहमन्तरा भजेदनुकूलतामिति मा विस्मर। देवताश्च धर्मकृत्यसापेक्षप्रसादाः। तद् धर्मे आधीयतां धीः। परिचर्यन्तां गुरवः। सेव्यन्तां साधवः। समाद्रियन्तां भूसुराः। विधीयन्तां नियमविधयः। तप्यतां तपः। जप्यंन्तां सद्यःफलदायिनो मन्त्राः। लुप्यतामश्रद्धा। लिप्यतां भक्तिरसेन मनः। उप्यन्तां सुखबीजानि सत्कर्माणि। ध्यानगोचरीक्रियतां भगवान्भूतभावनः

पूतभावनया। अर्चय कुल देवताः। प्रार्थय चाभीष्टदानायेष्टदेवताः। नास्ति खल्वसाध्यं नाम जपादिसत्कर्म-समासादितसुकृतानां समाराधितदेवता-प्रसादभाजनीभूतानाम्" इति।

अपरंच आलोक्यतां गद्य वैभवम् आचार्याणां –

"मिथस्सखीभावेन विशालतर-तरङ्ग-बाहुलता-समाश्लेषाभिरामं संगतयोः कपिला-कुण्डला-कल्लोलिनी-विलासिन्योः कर्णमण्डन-कुण्डलायमानो विशाल-शालिपुञ्ज-मञ्जुलो नञ्जनगुडग्रामो हालाहल-तापापनोद-कामस्य कामरिपोः शैलाधिक-कैलासतोऽपि वेलातिग-विलास-सदनतामयासीत्। नवसस्य-हरिद्वसनं वसाना वसुन्धरा विविधाराम-मनोहरा भगवन्तमम्बिकाकान्तं मृत्युञ्जयं नञ्जुण्डेश्वरं शीतलेन नदी-स्रोतो-द्वयेन सर्वतः प्रसृतेन सान्द्रतरतरु-वृन्द-च्छाया-संतानेन शिशिरयतीव शशिकला-धारणेनाप्यनुपशान्तसंतापम्। कृत-दुरित-भङ्गैर्भङ्गैर्मङ्गलमयीभ्यां तरंङ्गिणीभ्यामालिङ्गितस्स ग्रामपुंगवः समुत्सृष्ट-सापत्न-मत्सराभ्यामनुकूलकलत्राभ्यां बाढमुपगूढस्य सुकृतगाढस्य पुरुषपरिवृढस्य शोभामाढौकत इव। अनवरतं समेधमान-क्रोधावेशयोःपुरुष-मेधा-विप्लवकर-कठोरवचःकुठारयोः परस्पर-सवेगकर-प्रहार-जर्जर-बालसुधाकरयोः सुरधुनी-भवान्योः कलह-त्रास-जनित-शिरश्शूलेन शूलीति विश्रुतो महेश्वरो जगत्यदृष्टाश्रुत-पूर्वसौभाग्य-भाजं नञ्जनगुडग्रामराजमभिनन्दयितुमुपागतस्तत्रैव स्थिर-सुख-संभावनया वासमकरोदिव कृत्तिवासाः। नदीसंगम-वैचित्र्य-विशेषेण स्थूलतरोङ्कारवर्णाकारधारिणा वारिणा स ग्रामाग्रणीः प्रणवप्रणयिनो दाक्षायणी-प्राणवल्लभस्य विशेषतो वल्लभतया प्रथितक्षेत्रमतल्लिकासु परिगण्यते। निर्वाण-द्वारायमाणेन विशालेन द्वारेण समुत्तुङ्गतया परामृष्टपुरन्दरपुरेण सविधे श्रूयमाण-सुररमणी-रमणीय-नूपुररवेण गोपुरेण, सुधर्मसभा-शोभाविडम्बिना मण्डपेन, शिल्पकला-सौन्दर्यैकाकरेण गर्भागारेण च स देवालयो हेवाकमुत्पादयति देवानामपि"।

केचन गद्य-पद्धति-विस्तरणे कुशलाः। अपरे पद्यमात्र-प्रणयन-प्रवीणाः। गद्ये पद्ये उभयत्रापि सरससुन्दर-रचना-पटीयांसः रामाचार्यसदृशाः सव्यसाचि-कवि विद्वांसः भूमण्डले एव विरळाः विरळतराः विरळतमाश्चेति उक्तिः नातिशयोक्तिसीमानमुपस्पृशेत्।

# यदुवंशमहाकाव्यविषये यत्किंचित्

अत्यूर्जित-प्रतिभा-निर्जित-निर्जरगुरवः आचार्या 'जराजर्जर-शरीरावस्थायामपि निर्जरभाषासेवां यावदायु:पर्यन्तं कुर्वन्तः सहृदय-भक्तहृदयान्यावर्जयन्तः वार्धक्य-सहजौदास्यालस्यानि वर्जयन्तः पुण्यश्लोकोपश्लोकनेन अगण्यं च पुण्यं समुपार्जयन्त एवासन्।

तरुणवयसि रामाचार्यैः मधुरवाण्यां विलिख्य प्रकटितं देवी वासन्तीति रसरम्यं कथानकं तद्गुरुभिः श्रीश्रीसत्यध्यानतीर्थश्रीचरणैः अकस्मादवलोकितम्। वाग्देवी-पादमञ्जीर-मञ्जुळ-तत्रत्य पदपुञ्ज-कञ्ज-किञ्जल्कायित-भावाभिव्यञ्जन-रसरञ्जनानन्दिता अपि विरागि योगिनः नातिप्रीताः मनागिव विमनायमाना एव आसन् स्वामिपादाः।

कतिपयकालानन्तरं रामाचार्याणां मधुरवाण्यामेव प्रकटितः एकः श्लोकः श्रीपादानां नयनसरणिमधिरुढः तदीयाश्वधाटीकाव्यगतः

"आभासरम्यमुखलोभात् स्तुवन् द्रविणलाभाशया नरपशून्
स्वाभाविक-म्रदिम-शोभां कवीश्वर कुतो भारतीं छलयसि?
सौभाग्यदं व्रजवनी-भामिनी-विटमये भाव-गर्भित-गिरा।
श्रीभागधेयममलाभान्वितं स्तुहि सदा भाल-लोचन-नुतम्॥

अमुं श्लोकमनुवाच्य गुरवः रामाचार्यान् अपृच्छन्

"अयि राम, तव परोपदेशमात्र एव पाण्डित्यं कवित्वं च। द्रविणलाभाशया वा लोभाशयेन वा "देवी वासन्ती" "कोऽहं" "मदिराभक्तस्य प्रलापः" इत्यादिलौकिक विषयकलेखान् विलिख्य "स्वाभाविक-म्रदिम-शोभां कवीश्वर कुतो भारतीं छलयसि? श्रीरामं श्रीकृष्णं वा उद्दिश्य महाकाव्यमेकं लिख। तेन ते काव्यकलाकौशलं सार्थकं भवेत्" इति आदिशन्। तस्मिन्नेव दिने "देवीवासन्ती" लेखनं परित्यज्य "रामं कृष्णं वा" इति गुर्वाज्ञाया 'वा'कारं चकारार्थकं परिगृह्य, श्रीरामस्य श्रीकृष्णस्य च कौतुकभरितं पावनचरितं लिखितुं समकल्पयन्। यदुवंशनामकं महाकाव्यं नवरसोल्लसितं लिखितुमुपाक्रमन्त। परंतु पाठ, प्रवचन, मधुरवाणी प्रचालन, विद्या संपादन, प्राचीन माध्वग्रथ संशोधन, व्याख्यान, ताडपत्राली-ग्रंथगत-ग्रंथिलाक्षर-वाचन शुद्धप्रतिसंपादन-मुद्रणादिकार्य-कलाप-वैयग्रयां चिकीर्षितमपि यदुवंशमहाकाव्यं

विरचयितुं अवकाश एव न लब्धः आचार्यैः। अथापि गुरुवराणां आदेशं मनसि निधाय तन्महाकाव्यं तदा तदा लिखन्त एवं आसन्। पंचाशीतिवर्षानन्तरं जरसाऽक्रान्ता इतर लौकिकव्यवहारान् सर्वानपि परित्यज्य केवल यदुवंश महाकाव्य-प्रणयन एव स्व लेखनीं व्यापारयामासुः। श्रवणपाटवं मन्दीभूतम्। स्मरण शक्तिः कुण्ठिता। चरणयोः संचरण सामर्थ्यं अवरुद्धम्। अथापि ईदृश्यां जराजीर्ण, क्लेशपूर्ण-वेदना-विदीर्ण-वार्धक्यावस्थायामपि श्रीरामाचार्याः श्रीकान्तस्य एकान्तभक्त्याकृष्टाः यदुवंश महाकाव्यं दशसर्गपर्यन्तं विरचितवन्तः। संस्कृतसंसारस्य दुर्दैवेन तन्महाकाव्यं न पूर्तिमगात्। श्रीकृष्णस्य चरित्रं लिलिखिषन्तः भगवतः दशावतारवर्णनाक्रमेण रामावतार-चारु- चरित्र-चित्रण-काल एव वैकुण्ठसन्निधानमयासिषुरिति अर्धावसन्नमभूत् तन्महाकाव्यम् (संस्कृते प्रायः महाकवीनां कृतयः न पूर्तिमगमन्। कालिदासस्य कुमारसंभवं बाणभट्टस्य कादंम्बरी हर्षचरितं च जगन्नाथपंडितस्य रसगंगाधरग्रन्थश्च न समाप्तिमगमन्।

परमद्य विद्यमाने ऐदंप्राथम्येन प्रकाश्यमाने श्रीरामाचार्य-कृतिसंग्रह-रुपे अस्मिन् ग्रन्थे मुद्रितं दशसर्गात्मकं यदुवंशमहाकाव्यमालोकयतां तद्रस-सौरस्यमास्वादयतां च रसिकानां आचार्याणां कल्पनावैभवः कवित्वं विद्वत्वं दार्शनिकत्वं वाक्प्रभुत्वं च सुविदितं भवेत्। तथा शब्दार्थस्वामित्वादि तदीयेतरा-साधारणगुणानां च सम्यग्दर्शनं सुष्ठु भवेदेव। समग्रेऽपि यदुवंश-महाकाव्ये नीरसः चमत्कृतिरहितः अलंकारशून्यः विच्छित्तिविशेषानाधायकः व्यर्थशब्दप्रयोगविरसः एकोऽपि श्लोकः दशसर्गेषु नोपलभ्यते।

स्वभावसरलानामपि आचार्याणामत्र वक्रोक्तिविक्रमः दर्शनीयः श्रवणीयः स्मरणीयश्च विद्यते। आचार्याः सदा उन्निद्रदारिद्र्योपद्रुताः कदाचिदपि भार्यापुत्राणां शरीराणि सुवर्णालंकारभूषितानि नाकलयन्। परमेतत्काव्यं, काव्य-नायक-नायिकाश्च सु-वर्ण-मणिमयासंख्यालंकारालंकृता व्यदधुः।

काव्यस्य द्वितीये एव सर्गे आचार्या अद्वितीयां स्व-काव्य-निर्माण-नैपुणीं अनुष्टुप्छन्दस्यपि सुधानिष्यन्दिन्या शैल्या स्वच्छन्दानुगुणमाविष्कुर्वन्ति। स्वभावत एव विनीताः प्रतिश्लोकप्रसरन्नवनवभावनवनीता आचार्याः सर्वमहाकविवत् स्वाहंकारखण्डनं स्वकाव्यमण्डनं च इतरासाधारणमेव कलयन्ति।

"न रङ्कस्येव मे सन्ति महोच्चपदसंपदः
न शब्दागमविज्ञानं जलमग्ननृणामिव ॥

नालंकारपरिज्ञानं मासत्रयशिशोरिव
गुणदोषविचारो मे मदान्धस्येव भूपतेः ॥

जन्मतो बधिरस्येव ध्वनेरध्वनि नो गतिः
नैकादशीजागरायामिव शय्यावचः क्रमः ॥
सदा-शय्याश्रितस्यापि वार्धक्यात् क्लिन्न-चेतसः
पद-संपदभावेऽपि सर्व-संपत्पदं सतां
पद्मा-प्रणयि-पद्माभपदं जागर्ति मे हृदि ॥

ईदृशपद्यानां सुभगतास्वादं वाचका एव कुर्युरिति विश्वस्य तृतीयसर्गगतमेकं एव चमत्कृतिजनकं पद्यमुदाहरामि।

नहुषमहाराजस्य षट्पुत्रा आसन्निति कथनं कियत्कौशलेनाकलयन्ति कविकोकिला इति पश्यंतु।

"तस्याभवन् शास्त्रमहास्त्रशूराः संख्याद्वयं शास्त्रगतं दधानाः ॥
कुमारकल्पाः सुकुमाररुपास्तदाननाब्जा इव षट्कुमाराः ॥

नहुषराजस्य स्कन्दवत्सुन्दराः, तन्मुखवत् षट्संख्याकाः शास्त्रगतं संख्याद्वयं दधानाः अभूवन् पुत्राः इति वर्णयन्ति। अत्र शास्त्रगतं संख्याद्वयं नाम षट्संख्या, ज्ञानं च। शास्त्राणि षट्संख्याकानीति प्रसिद्धं। "संख्यावान् पण्डितः कविः" इति अमरः। नहुषकुमाराः शास्त्रगत षट्त्वं, ज्ञानं च अधारयन्निति वर्णयित्वा चमत्कुर्वन्ति सचेतसां चेतांसि आचार्याः।

यदुवंश-काव्य-गतानि सर्वाण्यपि पद्यानि मधु-मधुर-रसश्च्युन्ति सुकोमल-भाव-भृन्ति सुधा-सार-स्रुन्ति शब्दार्थ-सौष्ठव-धृन्ति हृदयहृन्ति मोदकृन्ति चमत्कुर्वन्ति एव सन्ति। यादववंश-मूलपुरुषस्य ययातेः देवयान्याश्च प्रथममिलनसन्दर्भः श्रीरामवाण्यामेव श्रूयतां अनुभूयतां प्रीयतां पीयतां च रसधारा यथा...

"सोपानमालामधिरुह्य मन्दं भूपाल उद्यानभुवं प्रयातः।
प्रेमोदयोद्यत्सहकारमूले तया न्यषीदत्सहकारमूले"॥

"तदावदत्तां निगृहीतचित्तः साद्यन्त-वृत्तान्तमिहाभिधेहि।
राज्ञेवमुक्ता मनसानुरक्ता प्रास्नावयत्सा मधुरोक्तिमुक्ताः"॥

"वर्णेषु विप्राः सकलाग्रगण्यास्तत्रापि वर्या भृगवो महात्मा।
तत्रापि तातो मम शुक्रनामा शक्रद्विषां स्वीयदशां दधानः"॥

"संजीविनीमन्त्रबलाद् गतासोः संजीवनाद् दैत्यबलस्य युद्धे।
तुष्टासुरेशेन पुरो हितार्थे पुरोहितत्वेन वृतः पिता मे"॥

इत्यादि देवयानी ययातिसंवादः मृदु-मधुर-कान्त-पदावलिभिः रोचकया सुधा-रस-सेचकया मोचा-माक्षिका-दिमद-मोचकया च सरण्या विलिखितः। श्रीकृष्णस्य पितुः वसुदेवस्य आनकदुन्दुभिरिति नामप्राप्तये कारणमुत्प्रेक्षन्ते प्रेक्षावन्त आचार्याः स्वसहजशैल्या–

"यस्मादस्य गृहे हरिः सुकृतिनः प्रादुर्भविष्यन् प्रभुः
दुष्टान् नष्टतमान् विधास्यति मुदा शिष्टान् विशिष्टानिति॥
स्वौकस्यानकदुन्दुभीन् सुरगणा आनन्दतोऽवादयन्
तस्मादानकदुन्दुभिं जगदिरे लोका इमं शूरजम्॥

वराहवपुषः हरे रसिकता भार्याप्रेम च कौतुकभरितं कल्पनाकौशलेन व्यावर्णितम्।

"अंके वहन्नपि रमामवितृप्तचेता लक्ष्मीं दधच्च निजवक्षसि पुष्कराक्षः।
भूदारमूर्तिरनलंधिषणः पुनातु भूदार-धारि-सित-दंष्ट्र-मुखो हरिर्माम्॥

आचार्याणां श्रवणशक्तिमान्द्येन न कोऽपि तैः ध्वनिःश्रूयते स्म। परं तेषां काव्ये तु ते महाकवयः ध्वनिदुन्दुभिमेव वादयन्ति। जरसा पदे पदे

स्खालित्यं अनुभवन्तोऽपि अस्मिन् काव्ये अस्खलित-पद-विन्यास-पाटवमपि-दर्शयन्ति। आयुषः उत्तरायणे लौकिक-रसानुभव-विमुखा अपि आचार्याः अत्र वाचकान् विविध-रसावगाहन-निर्वृतान् आकलयन्ति। अजातशत्रवः कवयः जीवने केनापि विग्रहं नैव वितेनुः। परं अस्यां तु कृतौ सर्वत्रापि मृदुनापि कविना वाग्विग्रहः आरचितो दृश्यते।

इयमाचार्याणामन्तिमा, रसोत्कटा, भावोज्वला, शब्दसुन्दरा, अर्थबन्धुरा, रामाभिरामा कृतिः तेषां कलशकृतिरिति वक्तुं शक्यते। प्रत्यक्षरं क्षरत्सुधारसं अक्षरपुरुषवर्णनेन स्वयमक्षरतामुपपन्नं महाकाव्यमिदं शैली, रीति, रस, ध्वनि, वक्रोक्ति, शब्दालंकारार्थालंकारादिकाव्य-झंकारसुभगं सर्वाण्यपि प्राचीनानि रसभावसमीचीनानि अर्वाचीनान्यपि काव्यानि अतिशेते इति

उक्तिः अभिमानोक्तिः इति प्रतिभायात्।

किन्तु तादृशात्युत्तम-महाकाव्यश्रेण्यां प्रवेशमर्हतीति तुनिश्चप्रचं।

"यावन्तः सन्ति काव्य प्रणयनपटवः ते विशंकं वदन्तु।

मृद्वीका-मध्य-निर्यन्मसृण-मधुझरी-माधुरी-भाग्यभाजां
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः॥

इति पण्डितराजकृतस्य साहंकार-हुंकार-गर्भप्रश्नस्य

"वाचामाचार्यतायाः पदमनुभवितुं रामनामास्ति धन्यः"

इत्यपि उत्तरप्रदानं समुचितमिति मितमतेः मे प्रतिभाति। रसिकविद्वत्सहृदया एवात्र प्रमाणम्।

एतल्लेखदैर्घ्यभिया कतिपयश्लोका एव स्थालीपुलाकन्यायेन मयात्र उदाहृताः। तेषां अर्थस्वारस्यं भावभूमानं रसस्वादिमानं काव्यसाधिमानं च विमर्शका एव स्वयं जानन्तु। नात्र मया विमर्शनं वा प्रशंसनं वा क्रियते।

सुरभाषा-प्रसारण-प्रचारणैक-दत्तदीक्षैः सुरगुरु-सदृक्ष-प्रेक्षैः संस्कृत-संस्कृति सनातनधर्मोन्नयनैकलक्षैः आचार्यैः देवभाषायाः सार्वत्रिक प्रसरणोद्देशेन बेळगांव नगरे गीर्वाणवाग्वर्धिनी नाम्नी काचन सभा बुर्ली, दातार, डा. सवणूर श्रीब्राक्रे, वाली पोद्दार प्रभृति लौकिक वैदिकगृहस्थानां सहकारेण स्थापिता। भिन्नभिन्नविषयानधिकृत्य गीर्वाणगिरा विद्यार्थिनांः विदुषां शालाकालेजाध्यापकानां

च प्रवचनानि नियतं विधीयन्ते स्म प्रतिवारं। अनया च सभया शताधिका एव वेणुग्रामगताः सहृदयाः सुरभाषाप्रणयिनः अस्खलित-देवभाषा-भाषण-प्रावीण्य-मलभन्त।

आचार्याणां निरलस प्रयत्नेन कर्तृत्त्वशक्त्या संघटनाचातुर्येण च तेषां कर्णाटक-वासि-नैक-श्रीमद्-धीमत्प्रभावशालि-शिष्य-स्नेहित-हिंतचिन्तक जन-सक्रिय-सहकारेण अखिलद-क्षिणभारत-संस्कृतसंमेलनं बेळगाव नगरे पण्डित क्षमाराव महोदयायाः दक्षाध्यक्ष्ये अत्यन्तं यशस्वितया सुसंपन्नम्। तत्संमेलनार्थं धारवाड, विजापूर, बेंगलोर, मैसूर, पुणे, उडुपी, बागलकोट प्रभृति कर्णाटक महाराष्ट्र प्रान्तगतपट्टणेभ्यः संस्कृतभाषण, प्रबन्धमण्डन, आशुकाव्य-निर्माण-कर्मसु पटीयांसः भूयांस एव कवयः विद्वांसश्च सम्मिलिता आसन्। विशेषतश्च पुण्यपत्तनात् साहित्य सम्राट् नरसिंह चिन्तामणिकेळकर, के.ना. वाटवे, सुब्रहमण्य शास्त्रिपाटणकर, पुरुषोत्तम शास्त्रि रानडे, गणेश शास्त्रि शेंडे प्रभृतयः नैक एव संस्कृतज्ञाः प्राज्ञाः ससंभ्रमादरातिशयमागत्य सोत्साहं भागमगृण्हन्। तस्मिन्नेव सम्मेलने मया "मदीय लधुकथायाः गुरुकथा" इति प्रबन्धो मण्डितः। मया तदर्थं बालकविरिति पदवीप्रशस्तिः पदकः सुवर्णमयश्च प्राप्ताः। पुण्यपत्तनादागताः प्रतिनिधयः

"आगामिवत्सरे पुणेनगर एव द्वितीय सम्मेलनंभवतु" इति उपनिमन्त्रयांचक्रुः। पुरस्तनहायने पुणे पत्तने द्वितीयसंस्कृतसाहित्य संम्मेलनं काशीसांगवेद विद्यालयाध्यक्ष पं. राजराजेश्वर शास्त्रिणां आध्यक्ष्ये अद्वितीयतया यशस्वितया च समपद्यत।

तदनन्तर वर्षेषु सोलापूर, विजापुर, हावेरी, प्रभृति पट्टणेषु दक्षिण-भारतीय-संस्कृत-साहित्य-सम्मेलनाधिवेशनानि समायोजितानि।

वेणुग्रामनगरेऽपि रामाचार्यैः उपनिषद्भाष्य, मध्वमुनिलिखित गीताभाष्य, सूत्रभाष्य, दशप्रकरण, तत्वप्रकाशिका, न्यायसुधादिवेदान्तग्रन्थ पाठ प्रवचनादिकं अविच्छिन्नतया नित्यनिरन्तरं निरन्तरायं च क्रियते स्म। शताधिका एव छात्राः गृहस्थाश्च आचार्यैः निरलसतया अध्यापिताः पण्डितीकृताः पाठप्रवचन पटीयांस एव संबभूवुः।

आचार्यैः कर्णाटके ज्ञानसत्रं प्रप्रथमतया प्रारब्धम्। द्वैतवेदान्त-लब्ध-वैदग्ध्यान् वेद-शास्त्र-पुराण-पाठ-प्रवचन-व्याख्यानादि-समधिगत-वैशारद्यान्

शारदानुग्रहभाजनीभूतान् बहूनेव पण्डित-मण्डल-मार्तण्डान् सबहुमानमाकार्य पञ्चदशदिनपर्यन्तं विविधवेदांन्तग्रन्थानधिकृत्य तेषां भाषणं प्रवचनं पुराणं अनुवादं व्याख्यानानि च प्रातर्मध्यान्हसायंकालरात्रिकालेष्वपि आयोजयामासुः। तेन प्रतिदिनं सहस्राधिका एव भावुकाः श्रावकाः भक्ताः तत्वजिज्ञासवः सद्ग्रन्थशुश्रूषवश्च तत्वज्ञानं सम्यगासाद्य तृप्ताः ज्ञानिनश्च समभवन्।

श्रीरामाचार्यैः तदा ऐदंप्राथम्येन समारब्धो ज्ञानसत्रसंप्रदायः अद्यापि कर्णाटके, महाराष्ट्रे, तेलगु, तमिळ देशेष्वपि ससम्भ्रमसमारंभ-विजृम्भणं प्रवर्तते।

संस्कृत साहित्य इव वेदे, वेद इव वेदान्ते वेदान्त इव तर्के, तर्के इव व्याकरणे, व्याकरण इव पूर्वोत्तरमीमांसासमययोः, तत्रापि विशिष्य समीरसमये प्रावीण्यं, पाण्डित्यं, प्रभुत्वं, पारदर्शित्वं, पारंगमत्वं च रामाचार्या इव अधिजग्मिवांसः चतुः शास्त्रविद्वांसः अतीव विरळाः। क्वचित् सन्तोऽपि प्रायः सरसकाव्यनाटकगद्यपद्यप्रणयनपटीयांसो न भवन्ति। परमेषु च रामाचार्येषु "सौभाग्योपचयादयं समुदितः सर्वो गुणानां गणः"।

श्रीरामाचार्यमणां ईदृशं असदृशं अन्यादृशं च संस्कृतसेवां, सनातन धर्मजागरणं, संस्कृतिसेवां, संस्कृतपत्रिका प्रचालनं, संशोधनक्षेत्रे विहितमत्यद्भुतं कार्यं, शताधिकप्राचीन-शास्त्रीय-साहित्यिक-लाक्षणिक-सैद्धान्तिकोद्ग्रन्थ-मुद्रणप्रकाशन-साहसं, संस्कृतोत्कर्षार्थं च समर्पितं समग्रजीवनं च अनुलक्ष्य भारतसर्वकारेण राष्ट्रपतिप्रशस्तिःराष्ट्रिय पुरस्काररुपेण ससंभावन वार्षिकवेतनप्रदान पुरस्सरं देहलीभारत केंद्रशासनद्वारा प्रदत्ता। तथा कर्णाटक सर्वकारेणापि आजीवनमासिकगौरववेतनप्रदानेन सत्कृताः पुरस्कृताः आदृताश्च रामाचार्याः।

अलहाबाद (प्रयाग)गत भारतीय-संस्कृत-संस्थान-परिषदापि "महामहिमोपाध्याय"इतिबिरुदेन, 'संस्कृतं' दैनिकपत्रस्य संपादकमण्डल्या "साहित्यरत्नमिति" पदवीप्रदानेन, उडुपी श्रीकृष्णापूजापर्यायपीठाधिपतिभिः 'अभिनव कालिदास' इति, सनातनधर्ममण्डलसंस्थया 'अभिनवबाणभट्ट' इति, अखिल भारत संस्कृतसाहित्यसम्मेलनसंस्थया "कविकुलतिलक" इति, काशीस्थ मदनमोहन मालवीय महोदयैश्च 'घटिकाशतश्लोकी'ति च अनेकानेकैः अप्रार्थितोपनतैः बिरुदप्रशस्तिसंभावनादिभिः आचार्याः सर्वत्रापि दक्षिणोत्तरदेशेषु

मानिताः सत्कृताः आदृताः पूजिताः, सभाजिताश्च। तथापि सर्वत्रापि अनुत्सेकिनः आचार्याःतदेतत्सकलं अस्मत्स्वरूपोद्धारक गुरुवरेण्यानां श्रीसत्यध्यानतीर्थ श्रीचरणानां निरवग्रहानुग्रहोपनतमिति गुरुवरचरणारविन्दयोरेव सकार्तज्ञ्यं सभक्तिश्रद्धं च सर्वसत्कार-पुरस्कार-गौरवसंभावना-प्रशस्ति सन्मानश्रेयः समार्पिपन्।

पं. श्रीबुर्ली श्रीनिवासाचार्याणां निधनानन्तरं निजदक्षिणबाहुच्छेदादिव अतिविषादं निरतिशयखेदं च अनुभवन्तः आचार्याः वार्धक्यात् तापत्रयाधिक्याच्च. एकाकितया मधुरवाणीपत्रिकासंपादनभारं वोढुं अशक्नुवानाः स्वशिष्यं भ्रार्तृपुत्रं पण्ढरीनाथनामानमाहूय "त्वमेव पत्रिकां इतःपरं प्रचालय" इति उपदिश्य भारं सर्वथा अक्षमस्यापि मम शिरसिं सानुग्रहं न्यक्षिपन्! ज्ञानलवदुर्विदग्धःअहमपि तेषामेव आचार्याणां शुभपुषा आशिषा यथाकथंचित् मधुरवाणीं द्वादशवत्सरान् यावत् प्राचालयम्।

## विद्याप्रकाशनोद्यमः

तदनंन्तरं वर्षिष्ठा अपि विद्वद्वृन्दवृन्दिष्ठाः बुधश्रेष्ठाः विपश्चिद्वरिष्ठाः आचार्याः दिगन्तविश्रान्तयशसां पण्डित-परिव्राजक-मण्डल-मुकुट-मण्डन मणीयमानानां उत्तरादिमठाधीशश्री श्रीसत्यप्रमोदतीर्थश्रीचरणानामाज्ञयानुग्रहेण साहाय्येन च विद्यानाम्नीं आध्यात्मिकीं विचारप्रचुरां संस्कृतमासपत्रिकां पं.श्री. नरसिंहाचार्यवरखेड पं. गोपालाचार्यमाहुलीतिविद्वरेण्यद्वयसहकारेण समर्थरीत्या प्रावर्तयन् प्राचालयन् प्राचारयंश्च। विद्यापत्रिकायाः मुख्यतो रामाचार्यैरेव प्रकाश्यमानायाः एकैकांकोऽपि विषयगांभीर्येण तात्विकविचारेण गूढगहन-ब्रह्ममीमांसा-शास्त्रीय-समस्या-परिहारक-समुचित-सैद्धान्तिक समाधानसूत्रोपन्यासेन च ग्रन्थगौरवं विद्वत्प्रपञ्चे अत्याश्चर्यकररीत्या समासादयत्। अत एव सर्वेऽपि प्रायः माध्वविद्वांसः विद्यासंचिकाः सर्वा अपि संपाद्य संगृह्य सुरक्षितं स्वदेवपूजामन्दिर एव प्रास्थापयन्। बहवश्च छात्रा अद्यापि माध्वमतीय-मुख्यमुख्य-तत्व-प्रमाण-प्रमेय-परिज्ञा-पक-प्राचीनातिसमीचीन-विद्यासञ्चिका-पारायणं समीर-समय-दिव्यज्ञान-दाढ्यापा दकमिति अनुदिनं कुर्वन्ति।

# अपूर्वग्रन्थानां संशोधनं प्रकाशनं च

प्राचीन समीचीनोद्ग्रन्थ, सद्ग्रन्थग्रंथि, मन्थन, चिन्तन, संशोधन, व्याख्यान, विवरण मुद्रणादिनैकसुधीशेखरैकसाध्यानि लोकोद्बोधककार्याणि वार्धक्येऽपि अतियशस्वितया श्रीरामाचार्याः श्रीपण्डितनरसिंहाचार्य वरखेडी, विद्वत्सार्वभौम माहुलीगोपालाचार्याणांच सहयोगेन समर्थरीत्या आकलयामासुः। श्रीनरहरि-कृपाकटाक्षाभिलक्षितानां श्रीमूलराम-सीता-प्रतिमानयन-परितुष्ट-सर्वज्ञाचार्य-साक्षाच्छिष्याणां कर्णाटक-हरिदास-पथ-प्रवर्तकानां श्रीनरहरितीर्थानां यमकभारत-टीकादयःचत्वारिंशदुद्ग्रन्थाः सद्ग्रन्थाश्च आचार्यैःशोधिताः बोधिताः प्रकटिताश्च।

भारतस्य कोणे कोणे क्रिमिकीटकवलीक्रियमाणान् जीर्ण शीर्णताडपत्र-लिखितान् वेदान्त साहित्यालंकारग्रन्थान् संगृह्य, असुवाच्यान् संशोध्य, अपूर्णान् पूर्णान् विधाय, क्लिष्टग्रन्थानां सुलभसंस्कृतव्याख्यान विवरणादीन् विलिख्य, पाठान्तराणि परिशील्य, अक्षर स्ख्यालित्यानि अपवाह्य, प्रस्तावनं विलिख्य, अनुक्रमणिका विरच्य, ग्रन्थकारपरिचयमपि प्रदाय, मुद्रणाय शुद्धहस्तप्रतिं सिद्धां कृत्वा, मुद्रणाय दत्वा, अक्षरयोजकानां प्रमादान् अपमृज्य, ग्रन्थानां प्रकाश पदवीप्रापण, प्रचारणादीनि नैकपण्डितमण्डलमहाप्रयत्नैकसाध्यानि बहुलतरकार्याणि श्रीरामाचार्याः एकैकवीराः अनारोग्येऽपि वार्धक्येऽपि असहाया अपि यशस्वितया समाकलयन्। रामाचार्यैः संपादित संशोधित प्रकटित ग्रन्थानां नामान्यनुवाच्यैव तेषां पाण्डित्यस्य प्रयत्नस्य परिश्रमस्य च कल्पना भवेदेव सुधियां इति तन्नाम निर्देशः क्रियते कतिपयेषाम्।

१) **अलंकार मुक्तावली**
(कृष्णकविविरचिता श्रीमत्सत्यसंध श्रीपादमहिमावर्णनपरा)

२) **प्रचण्ड राहूदयम्**
घनश्यामकवि विरचितम्-श्रीमत्सत्यप्रियतीर्थमहिमावर्णनपरनाटकम्

३) **श्रीसत्यसंध विजय काव्यम्-**
सप्तसर्गपर्यंतमानन्दतीर्थाचार्य विरचितम्

अवशिष्टत्रयं श्रीनिवासाचार्य विरचितम्
श्रीमत्सत्यसंधश्रीपादविरचित पीयूषवर्षिणी.
भक्तिरसतरंगिणी, विष्णुस्तुति (सटीक) सहितं

४) **ऋग्भाष्यटीका प्रकाशः रूपावतारनामा**
श्रीसत्यनाथतीर्थ विरचितः

५) **श्री सत्यनिधि विलासः**
श्रीनिवास कवि विरचितः

६) **कर्मनिर्णय टीका टिप्पण्यात्मकः**
कर्मप्रकाशः श्रीमत्सत्यनाथतीर्थ विरचितः

७) **द्वैतद्युमणिः**
तत्वोद्योत व्याख्यानम्
पण्डितपञ्चानन, हुलगीश्रियःपत्याचार्य
विरचितम्

८) **यमक भारत टीका**
श्रीनरहरितीर्थ विरचिता

९) **गुरुचंद्र कलोदयः** - श्री, श्रीसत्यवरसंजात
श्रीमत्सत्यधर्मतीर्थ विजयः (श्रीकल्लापूर रामचंद्राचार्य विरचितः
सुबोधिनीटीका, टिप्पणी समेतः)

१०) **श्रीमदनुव्याख्यान न्यायमाला -**

११) **सूत्रसम्बन्धप्रदीपः श्रीमद्रघूत्तमतीर्थकृतः** (दुष्प्राप्य)

१२) **सत्यसंध विजय काव्यम्** (सटीक)
(सूद्बोधक, सुललित, बालबोधिनी टीकासमेतं)

१३) **श्रीमन्न्यायसुधा विवृत्तिः**
श्रीमत्सत्यव्रततीर्थ व्रतिवर्यविरचिता
(श्रीमत्सत्यपराक्रमतीर्थ प्रणीतप्रमेयमालिकासहिता)

१४) **श्रीपूर्णबोधवंशकथाकल्पतरुः**
सुन्दरतम, सारगर्भ, भावगंभीर, प्रामाणिक
श्रीमदुत्तरादिमठचरित्र विभूषितः कविकुञ्जर, दैवज्ञ भीमाचार्यविरचितः
(श्री मोकाशि रामाचार्य शूर्पालय, प्रकाशितः)

१५) **पूजा कल्पलता-श्रीमज्जयतीर्थ विरचित**
पद्यमालायाः विस्तृतटिप्पणी । श्रीजयराम पण्डित विरचिता

१६) **श्री गीतातात्पर्य निर्णय प्रकाशिका**
श्रीपद्मनाभतीर्थ विरचिता

१७) **प्रमेयदीपिका भावबोधः**
श्रीमद्रघूत्तमतीर्थ विरचितः

१८) **आन्हिक कौस्तुभः श्रीमदानंदतीर्थ**
विरचित सदाचारस्मृति व्याख्यानरूपः
(परमोपयोगि श्रीनिवासचरितामृतंच)

नैक सुभाषित, अन्योक्ति, देवमन्दिराक्रन्दन, स्वराज्यरत्नाकर, मुनिमेनकासंवादादि पद्येषु आचार्याणां पद्यप्रणयनपाटवं विशिष्य च यदुवंश महाकाव्ये तेषां परिपक्व-साहित्य-पाण्डित्य-कवित्वादीनां पराकाष्ठा एव गोचरीभवति। तथा देवीवासन्ती, कोऽहं, अपूर्वस्तत्वान्वेषः आत्मनिवेदनं सरस्वतीसन्देशः सतीचिन्तादेवी इत्यादि प्रबन्धेषु च गद्यलेखनविद्यावैशारद्यवैशद्यं च स्फुटीभवति।

मम पितृव्यपादानां वरकवीनां श्रीरामाचार्याणां आबाल्यादनुकरणं अनुसरणं, अनुरणनं, अनुचरणं, तेषां लेखश्लोकानां पठनं, पुरश्चरणं, पुनःपुनरुच्चारणं च कारं कारं, तामेव शैलीं ता एव पदपंक्तीः तान्येव च चमत्काररचनानि विविधवचनानि स्मारं स्मारं, तद्वदेव मोचा-सुधादि-नीचीकरण-चण-वाचो-वीची-प्रवाहनाय प्रयत्य प्रयस्य च मयापि नरकवित्वं किञ्चिदिव आसादितम्। तादृशं रसोत्कट-कविप्रतिभा-प्रभावैकसाध्य-मधुमधुर-सुधास्वादु-रसरस्य काव्यनिर्माणं मन्दान्मन्दतरमतिमता मया एतस्मिन् जन्मन्येव न शक्यं। तथापि तान् आचार्यान् संस्मृत्य, तद्रचनां अनुकृत्य, तामेव गद्यपद्य प्रणालिकां अनुसृत्य मयापि लक्ष्मीशतकं, विश्वेश शतकं, राघवेंद्र काव्यपञ्चकं, दासोल्लास महाकाव्यं, रामरसायनं, कृष्णकंठाभरणं, कृष्णालहरी, यमुनालहरी, वेतण्डतुण्डस्तवः जानकीनाथनाथनादिखण्डकाव्य, महाकाव्य, स्फुटश्लोकादि कतिपयप्रबन्धाःविनिर्मिताः। तथा पवनपावन चम्पू, शंभुलिंगेश्वर विजयचम्पू श्रीसत्यध्यानविजयचम्पू, प्रभृतयः कृतयः यथाकथंचिद् विरचिता

एव। तानि सर्वाण्यपि मदीयानि गद्यानि पद्यानि रामाचार्यसदृशशिष्टोच्छिष्टानि तेषां प्रसादकवीनां साहित्यदृष्ट्या अत्यंतं निकृष्टानि एव। तथापि "निरस्तपादपे देशे एरण्डोऽपि द्रुमायते" इतिवचनवत् रामाचार्याणां अभावे नीरसानां मदीयकाव्यानामेव तत्र तत्र लक्ष्यते प्राशस्त्यम्। मम विजयचम्पूकाव्यस्य ईसवीये १९८३तमे वर्षे केन्द्रसाहित्यअक्याडमीद्वारा राष्ट्रिय पुरस्कारः लब्धः। राज्यसर्वकारेणापि, द्विवारं केन्द्र सर्वकारेणापि द्विवारं राष्ट्रिय प्रशस्ति राष्ट्रपति पुरस्कारादिप्रदानेन अहमनर्हः अपि श्रीरामाचार्याणां कृपाशीर्वादेन सत्कृतःसंभावितः आदृतश्चाभवम्। मम लोकमान्यतिलकचरितं, भारतस्वातन्त्र्यसंग्रामस्य इतिहासः इति पुस्तकद्वयं निरीक्ष्य समीक्ष्य च भूतपूर्वाभूतपूर्व राष्ट्रपतित्व प्राशस्त्योपेतश्रीराजेन्द्रप्रसाद महोदयाः राष्ट्रिय प्रशस्ति पुरस्कारं प्रदाय मां समभावयन्। तथैव गुरु वरेण्यश्रीश्रीसत्यप्रमोदतीर्थ, विद्यामान्य, विश्वेश, सुयमीन्द्रादि वैष्णवपीठाधिपतिभिःतथा श्रृंङ्गेरी शंकराचार्य, कंचीकाम कोटिपीठाधीश्वर शारदापीठाधिपति प्रभृति नैकसंस्थानाधिपतिभिः पदवी-प्रशस्ति-मानपत्र-प्रभूतदक्षिणा दानादिभिरहमनुगृहीतः। लोकेऽपि बहुभिः संघसंस्थासभासंमेलनादिषु आदृतः पुरस्कृतश्च समभूवम्। सर्वमप्येतद, श्रीरामाचार्याणां काव्यकृति-पठन-पाठन-स्मरणानुकरणानुसरणफलमेवेति सविनयं सभक्तिश्रद्धं सप्रतिज्ञं च विनिवेदयामि।

चि. परिमळाचार्यः श्रीरामाचार्याणां पुत्रः मामुपसृत्य "आचार्याणां समग्रकृतिप्रकाशनं क्रियते। भवान् आचार्याणां जीवन चरित्रं काव्यजीवनं चाधिकृत्य कमपि परिचय परामर्शात्मकं लेखं विलिखतु इति व्यज्ञापयत्। आचार्याणां विषये यत्किञ्चिल्लेखलेखनावकाशः मम पूर्वपुण्योपनतः-मत्सौभाग्यफलितः कश्चन सुवर्णसन्धिरेव इति भावयित्वा तेषां बाल्यादारभ्यैव यावदन्तजीवनचरितं कौतुकभरितं काव्यजीवनं शास्त्रजीवनं च अधिकृत्य यथाबुद्धिबलोदयं यत्किञ्चिद् व्यलिखम्। कार्यबाहुल्यात्समयवैरल्यात् अज्ञानपौष्कल्यात् आलस्यवैपुल्यात् वाग्विस्तरणचापल्याच्च कृलप्त-पुट-परिमितिमतिमात्रमतिशयानेऽपि अस्मिन् प्रदीर्घतरेऽपि लेखे मितंपचमतिमता मया आचार्याणां काव्यजीवनस्य जीवन काव्यस्य वा परिचयो न सम्यक्तया कारितः। जरसा विगतसरससुन्दर लेखनसामर्थ्यवता मया आचार्याणां

सम्यग्दर्शनं. नैव कारितमिति जानाम्येव। "बहुव्याहरतानेन न किंचिदपि बोधित" मिति व्याहरणस्य लक्ष्यो भवामीति संकुचति चेतः। तथापि आचार्याणां समग्रकृतीनां संरक्षणकारणीभूताः मुंबैभारतीय विद्याभवने, श्रीरवीन्द्रनाथ ठाकूर स्थापिते विश्व भारतीविश्वविद्यालये, तथा अन्यान्येषु विश्वविद्यालयेषु तथा 'हिन्दु' प्रभृति आंग्लपत्रिकासु च रामाचार्याणां कवित्वविद्वत्तादिविषये व्याख्यान लेखनादिभिः तेषां बेंगळूर नगरे सत्कार समारम्भयोजनादिभिश्च तान् कविकुंजरान् प्रसिद्धि, प्रतिष्ठा प्रशस्ति, प्रशंसाभिः समाज-सर्वकारादि पुरस्कार-गौरव-गिरिशिखरमारोपितवतां, पंडित सार्वभौम श्री के.टी. पाण्डुरंगीमहोदयानां स्वल्पीयसापि स्वरसेन आचार्याणां संपूर्णस्वरूपदिग्दर्शकेन लेखेन मदीयलेखनस्य प्रदीर्घस्य न्यूनता आपूरिता भवेदिति विश्वसिति मच्चेतः। अवसर लिखितेऽस्मिन् लेखे यदि स्युःप्रमादाः स्ख्यालित्यं दोषा वा तदा वाचका आचार्याणां विषये गौरवादरभूम्ना क्षाम्यन्तु हन्त महान्त इति विज्ञाप्य विरम्यते।

# ॥पाहि मां मुरलीधर॥

## मुरलीधराष्टकम्

श्रीमनोहर सोमसुन्दर सामगानविदां वर
प्रेमचुम्बितराधिकाधर पाहि मां मुरलीधर॥

इन्दिरा-प्रिय-मन्दिरायित-वक्षसं हतरक्षसं
चन्दिरामल-सुन्दर-स्मित-भासुरं प्रियभूसुरम्॥
कन्दरायत-मन्दराचल-धारिणं सुखकारिणं।
वन्दितोऽस्मि वधू-जनाञ्चित-चन्दनं यदुनन्दनम् ॥१॥

देव-दानव-मानवैरभिवन्दितं तमनिन्दितम्
भाव-मुग्ध-विलासिनी-चल-वीक्षणं श्रित-रक्षणम्॥
पावनात्म-मुनीश्वरार्थित-पूरकं भव-तारकं
देवकी-सुतमानतोऽस्मि निरन्तरं विमलान्तरम् ॥२॥

मञ्जु-वेणु-निनाद-मुग्ध-गवांगणैर्भरिताङ्गणै
रञ्जसा रसनावलीढ सुधारसं जितसारसम् ॥
कञ्ज-दृक्कुच-कुंकुमीय-रुचारुणं हसितारुणं
कुञ्ज-चारि-शिशोः स्सनूपुरमाश्रये चरणं श्रिये ॥३॥

वासर-द्युति-कन्यका-पुलिनेऽमले सुमकोमले
रास-लालस-मानसं सह राधया स्मरबाधया ॥
वासनावश-कामिनी-कुच-पीडितं जलताडितं
वासयामि हृदन्तरे व्रजबालकं भ्रमरालकम् ॥४॥

पीत-वाससमच्युतं बलसोदरं सुजनादरं
प्रीतचित्त-यशोदया कृतदोलनं बहुलालनम् ॥

पूतना-यमयातना-शतदायिनं दधिपायिनं
पूतनामपरास्तपाप-मयेऽन्वहं सुगुणं न्वहम् ॥ ५ ॥

गोपिकानवनीत चौर्यविशारदं सुखसारदं
कोपिकंस-करालदर्प-विभेदनं मधूसूदनम् ॥
व्यापिविश्व-विशुद्धवैभव-शालिनं वनमालिनं
प्रापितात्मपदं भजेऽहमनाकुलं श्रितगोकुलम् ॥ ६ ॥

चक्रशङ्ख सनाथपाणि कुशेशयं विमलाशयं
शक्र-शङ्कर-शारदापति-सन्नुतं महिमोन्नतम् ॥
विक्रमानल-दग्धदानव-काननं कमलाननं
नक्रमोचित-वारणेन्द्रमुपैमि तं सुगुणामितम् ॥ ७ ॥

श्रोणिभार-निरुद्धयान-नितम्बिनीमणिरुक्मिणी
पाणिपीडन-मङ्गलोत्सवलालसं मदनालसम् ॥
क्षोणिपाल-मपास्तसंकट पाण्डवं कृतताण्डवं
प्रीणयामि लघुस्तवेन हि केशवं धृतशैशवम् ॥ ८ ॥

क्षेमदं मुरलीधरस्तव-पावनं रसजीवनं
कोमलोज्ज्वल-भावषट्पद-भूषणं गतदूषणम् ॥
प्रेमतो दशकं पठन्तु कृपालवः श्रितगालव -
ग्रामधाम-विनीतराम-बुधोदितं हरिमोदितम् ॥ १० ॥

# १. मङ्गलपद्यानि

वंशीनादविमुग्धगोकुलवनी हंसव्रजामोदिनी
हेमाभव्रजकामिनीस्थिरलसत्सौदामिनी योषिताम् ॥
गण्डेषु प्रतिबिम्बिनी क्षितिभृतो मूलस्थलालम्बिनी
चित्रा चित्तखचुम्बिनी भवतु मे सा काऽपि कादम्बिनी ॥१॥

विश्वव्यापि विपद्विलोपि जलभृद्रोचिःप्रतिक्षेपि त-
न्मुग्धालापि विमुग्धगोपि तरसा संदग्धपापिव्रजम् ॥
कर्णोत्तंसकलापि लोलकमलावक्षोजकस्तूरिकाऽऽ
लेपि स्यात्किमपि प्रसादगरिमप्रापीह दिव्यं महः ॥२॥

धर्मस्थापि विधर्मलोपि दनुजस्तोमोपतापि स्रव
द्वाष्पैश्शापिविलापिवैरिसुदृशां प्रौढप्रतापि ज्वलत् ॥
श्रेयोऽवापि निजेषु दुष्कृतभरस्योद्वापि दोषाङ्कुरा-
नारोपि प्रसृताऽ प्रबोधशयनादुत्थापि भूयान्महः ॥३॥

बाले याहि गृहान्तराशु बहुलं भाण्डध्वनिश्श्रूयते
प्रायश्चोरशिखामणिर्नन्नु पिबेद्दुग्धं स नन्दात्मजः॥
श्वश्रूवाक्यमिदं निशम्य सहसा प्राप्ता मुरारातिना
भुक्ता दीनबिडालताडनपरा राधाऽस्तु मे श्रेयसे ॥४॥

दारिद्र्यान्मम दारयन्ति हृदयं दारा दुरुक्तैरलं
निन्दन्त्येव निरन्तरं बत विना हेतुं च मां बान्धवाः ॥
पूज्या अप्यवहेलयन्ति नितरां सन्मानहेतावपि
स्वामिन्श्रीरमण प्रसीद भगवन्नो मे त्वदन्या गतिः ॥५॥

श्वश्रूस्स्रावयतेऽश्रु तीक्ष्णवचनैः कान्तः कशैर्हन्ति मां
देवा दानवधीर्ननान्दर इमा नन्दन्ति निन्दाशतैः ॥
माता वा यमयातनां वितनुते कुर्वे किमित्याकुलां
मामेकं शरणं व्रजेति स मुदे राधां हरिस्सान्त्वयन् ॥ ६ ॥

नक्रः पीडयते सुधां हरति हा दैत्यालिरेषा पिता
पापीयांश्च हिनस्ति मां सुररिपू राज्यं बलादाहरत् ॥
साधूंस्त्रासयते सदा दशशिरा वासः खलः कर्षती -
त्यार्तानां भयहृद्वचोऽस्तु "शरणं मामेहि" शौरे श्रिश्रये ॥ ७ ॥

नश्यद्गर्वभरेण नम्रफणिना सोढास्समुद्वेगतः
पत्युः प्राणपरीप्सया प्रणतिभिर्नागाङ्गनाभिष्टुताः ॥
सर्वापद्धरणेऽखिलेष्टकरणे बद्धादरास्सर्वदा
कल्याणं कलयन्तु कालियफणाभृच्छासिनः केलयः ॥ ८ ॥

तालं वादयता शचीप्रणयिना रम्यं मृदङ्गध्वनिं
कुर्वाणेन समीरणेन डमरुं संध्वानयच्छम्भुना ॥
वैपंचीनवकाकलीं कलयता देवर्षिणाऽभ्यर्हिताः
कल्याणं कलयन्तु कालियफणाभृच्छासिनः केलयः ॥ ९ ॥

तत्कालं विरचय्य दर्भफणिनं विन्यस्य तस्मिन्पदा -
म्भोजं तन्मयतामुपेत्य तरसा प्रेमान्धया राधया ॥
औत्सुक्येन विडम्बिताः स्मितमुखं तद्भावहावैरसात्
कल्याणं कलयन्तु कालियफणाभृच्छासिनः केलयः ॥ १० ॥

केल्यासक्तहरिप्रियस्तुतिरियं कल्याणकृत्सर्वदा
कल्यादौ पठतां नृणां किल मनश्शल्याभिनिर्मूलिनी ॥
कल्यावेशवशात्कृताघदलनेऽतुल्यप्रभावा सुधा-
कुल्याक्रीडनसौख्यदा च विपदावल्यास्समुत्सारिणी ॥ ११ ॥

राधे शारदचन्द्रिकाच्छपुलिने कृष्णः कलिन्दात्मजा -
कूले खेलति तन्मयस्स्मरति नाहारं तमाश्वानय ॥
इत्थं नन्दसतीनिदेशवशतस्सानन्दराधागमे
ज्योत्स्नायामतसीय- चम्पक सुमच्छायायुतिश्श्रेयसे ॥ १२ ॥

सद्वंशप्रभवास्स्वभावसरला अन्यैर्बलापादित-
च्छिद्राः कृष्णतमाश्च सन्निधिमिता वन्या अपि स्त्रीरहम् ॥
धृत्वा पाणितलेन सुस्वरवतीः कृत्वाऽमृतं पायया -
म्येवं ख्यापनचेतसेव मुरलीं चुम्बन्हरिश्श्रेयसे ॥ १३ ॥

कालिन्दीं कलयामि चेतसि जलक्रीडानुकूलं रसो
ल्लासां विभ्रमशालिनीं सरसितां श्यामां च रम्योर्मिकाम् ॥
इत्याकर्ण्य हरेर्वचः प्रकुपितां भामां समाल्हादयन् -
स्वं वाक्यं यमुनानदीपरतया व्याख्यन्स सौख्याय मे ॥ १४ ॥

वामोत्सङ्गनिषण्णवारिधिभुवो वामाननाम्भोरुहं
व्रीडा-विस्मय. भीति-कौतुकवशान्नानाविभावोज्ज्वलम् ॥
आचुम्बन्स्फुरदोष्ठमुन्नतनसो निष्यन्दिलालारसः
सद्वेषो निभृतोर्ध्वकर्ण उदयद्धास्यो हयास्योऽवतु ॥ १५ ॥

रोषाविष्टरमासमुत्सुकमनस्तोषाशया तत्कला -
योषापाणिनिपीडनाय जरठावेषादि लीलाकरः ॥
दोषान्दुर्विषहान्स शोषयतु मे दोषाकराभाननोऽ
शेषाभीष्टवरप्रदाननिरतश्शेषाद्रिभूषामणिः ॥ १६ ॥

प्रेमासारभरार्द्रसारसदृशा क्षेमाणि विस्तारयन्
प्रल्हादं गुरुशोकविव्हलतमं प्राल्हादयामास यः॥
लक्ष्मीलेलकटाक्षपातबहुलामोदोत्थरोमोद्गमः
पर्याप्तं भगवान्प्रसन्ननृहरिः कुर्यात्सदा मङ्गलम् ॥ १७ ॥

राकोल्लासिसुधाकरामलकरन्यक्कारिणस्ते सदाऽऽ
नन्दं कन्दलयन्तु नन्दजनुषो मन्दस्मितस्यांशवः ॥
राधाया हरिचन्दनन्ति कुचयोर्हारन्ति कण्ठे कचे
मल्लीयन्ति रतावसानसमये क्षौमन्ति ये ह्रीजुषः ॥१८॥

कदा वा कालिन्दीतटविकसदिन्दीवरवने
समाखेलद्भृङ्गीकुलमधुरसंगीतमुखरे ॥
हरिःकेलीकुंजे सुरभिसुमपुंजे परिसरन्
स्मराबाधां राधां मम दृढसमाधाववतरेत् ॥१९॥

राधे त्वं शरणं प्रयाहि नचिरात्, नाथ त्वमेवासि तत्,
कान्ते शान्ततमं निशान्तमधुना किं तेऽनभीष्टं परम् ॥
का वा वल्लभकेलिलालसमना अन्तं निशाया लषे -
देवं माधव-राधिकारसलसच्चाटूक्तयश्श्रेयसे ॥२०॥

राधानुषक्तमपि मामपराधिकं त्वं
जानासि मातरधुना न हि चित्रमेतत् ॥
संतोषकारिणमपि स्मरतां जनानां
सन्तो वदन्ति सुधियोऽपि जनार्दनं माम् ॥२१॥

चौर्यं भूरि कृतं त्वयैव भगवन् भुक्ताः परा योषितो
मण्डं वा नवनीतमेवमशितं दुग्धं च पीतं बहु ॥
बन्धूनां निवहोऽपि निर्दयतया भूयो मया हिंसितः
त्वं लोकैरभिपूज्यसेऽच्युत कुतो निन्द्ये च कस्मादहम् ॥२२॥

पाथोधिं विश पर्वतं वह शितां दंष्ट्रां तथाऽऽविष्कुरु
वक्त्रं दर्शय भीकरं यदुपते स्वैरं च भिक्षां चर ॥
पाणौ धारय वा परश्वधमथारण्यं प्रयाहि प्रभो
चोरो वाऽपि दिगम्बरो भव हयं चारोह न त्यज्यसे ॥२३॥

दीनं मां न यदीक्षसे तदिह ते लक्ष्मीपते शोभते
यद्वा धिक्कुरुषे च दोषनिलयं निर्दोष ते युज्यते ॥
मन्दं नाद्रियसे च यत्तदुचितं सर्वज्ञचूडामणे
भक्तं मां यदुपेक्षसे कथमिदं भक्तप्रिये भासताम् ॥ २४ ॥

लक्ष्मीलोलतमान्तरापि नितरां गोपाङ्गनासंगिनी
वैकुण्ठे विलसन्त्यपि प्रणयतो वृन्दावनोल्लासिनी ॥
क्षीराम्भोधिशयाऽप्यहो व्रजभुवि क्षीरादिचौर्ये रता
चित्रा काऽपि चिरं चकास्तु रुचिरा चित्तेऽब्दतुल्या रुचिः ॥ २५ ॥

राधाया मधुराधरामृतरुचिर्भक्ताय दत्तामृता
मुग्धाभीरवधूविलासरसिका वैराग्यभाग्यप्रिया ॥
गीतोन्मोहितमानिनीशतवशा गीतोपदेशोद्यता
चित्रा काऽपि चिरं चकास्तु रुचिरा चित्तेऽम्बुदाभा रुचिः ॥ २६ ॥

भक्ताभीष्टफलप्रदा द्विजसतीभक्ताभिलाषिण्यहो
स्वर्गङ्गाजननी दिनेशतनयानीरे विहारातुरा ॥
कामं कामसवित्र्यहो विदधती निष्कामलोकादरं
चित्रा कापि चिरं चकास्तु रुचिरा चित्ते घनाभा रुचिः ॥ २७ ॥

पतङ्गगामी च पतङ्गभास्वान्
तन्वन्पतङ्गानसुरान्रणाग्नौ ॥
भुजङ्गशायी च भुजङ्गशासी
व्रजाङ्गनानां स मुदे भुजङ्गः ॥ २८ ॥

लब्धं त्वन्मुरलीरवेण भगवन्, माधुर्यमीदृक्कुतो
मुग्धेऽयं मधुराधरस्य महिमा जागर्ति राधे तव ॥
यन्निष्यंन्दिसुधारसं नु पिबतश्श्वासानिलैः पूरिता-
संसक्तामृतशीकरैर्मधुरिमोदीर्णो हि वेणुक्वणः ॥ २९ ॥

त्वय्यारोप्य मयाऽनुभूतमखिलं श्रृङ्गारचेष्टादिकं
स्तावं स्तावमहं मनोहरपदैर्यूनां समुन्मादकम् ॥
निर्विण्णो नितरां हरे तव गुणांस्तानेव संवर्णये
ये स्फूर्तिं जनयन्ति चेतसि नृणां नव्यां च भव्यावहाम् ॥ ३० ॥

क्षीरोदन्वति फेनपुंजबहुलीभूतावदातप्रभे
भास्वन्मौक्तिकमण्डले मरकतोऽदारद्युतीनां चयैः ॥
मन्दस्मेररुचा दिशो धवलयन्नानन्दलीनेन्दिरो -
त्सङ्गोल्लासिपदाम्बुजो दिशतु मे देवः परां संपदम् ॥ ३१ ॥

व्यावल्गत्कुचभारमाकुलकचं स्रंसद्दुकूलं पुन -
स्सस्वेदोदकबिन्दुसुंदरमुखं कान्ते क्वणत्कङ्कणम् ॥
मच्चित्तेन समं दधिप्रमथने वीरायितं स्मारय -
स्येवं चाटुवचा हरिर्व्रजवधूसाकूतदृष्टो मुदे ॥ ३२ ॥

क्षीराब्धिस्तव केलिसद्म रुचिरं भोगीन्द्रभोगो मृदु -
श्शय्या भोगकृते रमा भगवती साक्षाद्विलासोन्मुखी ॥
वैकुण्ठाधिपते तथाऽपि भवतः कारागृहे जन्म त -
त्कारुण्यं शरणागतेषु नितरां शौरे व्यनक्ति प्रभो ॥ ३३ ॥

नानारत्नचयोऽज्वलद्युतिभरैर्विद्योतमानो भृशं
व्यालोलल्लहरीचलाहिपलसन्मंचाधिकस्फूर्तिदः ॥
क्षीराब्धिः क्व च दन्दशूकनिकरा काराऽन्धकारावृता
क्वासौ केशव सौख्य-दुःखगणनानार्तावनैकस्पृहाम् ॥ ३४ ॥

लक्ष्मीकेलिकलाकलापकुशलो यो वा बटुत्वं गतो
यो वा कैतवतः पदत्रयमितां गां याचमानस्स्वयम् ॥
त्रैलोक्याधिपतां शचीप्रणयिने पातालराज्यश्रियं
प्रेम्णाऽदाद्बलये स वामनतनुर्दयाच्छ्रियोऽवामनीः ॥ ३५ ॥

श्रियः प्रेयान् श्रियं देयात्परां श्रेयःपरम्पराम् ॥
दासीकृतमहेशानः पुत्रीभूतपितामहः ॥ ३६ ॥

संसक्तोपनिषत्स्वादुसुधारसपिपासया ॥
गोभिरालीढपादाब्जं भजे बल्लवतल्लजम् ॥ ३७ ॥

स्वोक्तानुक्ततमाखिलार्थनिचयं गाधान्यमेधाबलं
मूर्धान्तः प्रविशद्भिराकलयितुं बाढं निराशैः पुनः ॥
भास्वद्दीर्घजटाकलापमिषतः प्रादुर्भवद्भिश्श्रुति-
–व्रातैरावृत सुन्दरास्यकमलं व्यासं रमेशं श्रये ॥ ३८ ॥

अश्रान्तं शतकल्पतीव्रतपसा यस्य द्युनद्याः पितुः
पादक्षालनयोग्यतामलभत ब्रह्मा स्वयम्भूरपि ॥
चत्वारिंशदनल्पकल्पसुकृतैर्यत्पादतीर्थाम्भस. -
श्शम्भुर्धारणभाग्यमाप शिरसा तं भार्गवीशं भजे ॥ ३९ ॥

सहस्रेणाक्ष्णां यश्शतसवनसंदृश्यमहिमा
रसज्ञासाहस्रद्वयनुतगुणांशोऽहिपतिना ॥
रमा यं संश्लिष्टा परिहृत सहस्रच्छदगुहा
तमासेवे देवं नतमुत सहस्रष्ट्रविबुधैः ॥ ४० ॥

स्तेयं स्वादुतमं नवोद्धृतमथो मंण्डं मुहुर्भक्षयं -
स्तृप्त्युद्यन्मुखनिस्स्वनस्सरभसं गोपीभिरापीडितः ॥
राधाया अधरं निषेधमधुरं चास्वाद्य रोमांचित -
स्स्वानन्दानुभवो भुवि व्रजगवां सेवी शिवायास्तु नः ॥ ४१ ॥

तादात्म्यं यदिहावयो रसवशाद्गाढं समाश्लिष्टयो -
र्नाप्तुं शक्यमहो तदल्पगुणवज्जीवान्मयि ब्रह्मणि ॥
मिथ्यात्वं जगतश्च जल्पति जडो मामेति ते वाक्यगं
राधेत्यच्युतनर्मसूनृतगिरा सव्रीडहासाऽवतु ॥ ४२ ॥

स्वयं काराजन्मा प्रणतभवकारार्तिशमनो
रमानाथो लोके त्रिपदधरणीभिक्षुकबटुः ॥
अहो मृत्स्नास्वादी सुरगणसुधावर्षणचण -
स्सदा गोपायेन्मां निगमनुतगोपालतनयः ॥ ४३ ॥

अलेशोत्प्रकाशोऽखिलाशोरुपूरः
परेशोऽलिकेशो व्रजे शोभमानः ॥
यशोदोऽघशोषी स शोकापहारी
यशोदाकिशोरो दृशोर्गोचरस्स्यात् ॥ ४४ ॥

मुदा रासे लोलं कचविजितरोलम्बरुचिकं
दृगब्जेनालोलं प्रणमदमरालम्बनमलम् ॥
कृपाप्रेक्षाशीलं नवजलदनीलं दितिभुवां
महाकालं बालं रुचिरवनमालं स्मर मनः ॥ ४५ ॥

गोपस्त्रीतनयाय विश्वजननीशृङ्गारलीलाजुषे
राधाराधनतत्पराय धरणीभारापहाराय च ॥
नद्या नूपुरिणेऽब्धिना निलयिने नागारिणा यानिने
नागेन्द्रेण च तल्पिने नयनिने नाथेन चान्हां नमः ॥ ४६ ॥

श्यामाश्लिष्टश्शमितशमलश्श्यामजीमूतधामा
श्रीमान्सीमातिगगुणगणश्श्रीरमाप्रेमधामा ॥
सोमाभास्यस्सुमसमतनुस्सोमपूर्वामरेड्य -
स्सामोद्गीतस्स मम दिशतु क्षेममक्षाममीशः ॥ ४७ ॥

संपत्तिं दिश वेङ्कटेश भगवंस्त्वं दीनबन्धो दया -
सिन्धो द्रागिति नाथितोऽपि कमलानाथ प्रसन्नो न मे॥
नायाता कलहात्स्थलान्तरगता किं भाग्यदेवी रमा
द्वैतीयीकविवाहजादृणभरान्मुक्तोऽसि नाद्यापि किम् ॥ ४८ ॥

मानावलीप्रथममानार्हवेदनिवहानाहरन्तमसुरं
यो नामशेषमकृतानामयो द्रुहिणगानादृतो मनुनुतः ॥
ज्ञानाय भक्तसुखदानाय वार्धितनयानायनप्रणयतो
मीनाकृतिस्स भगवानातनोतु दृशमेनांसि मे परिहरन् ॥ ४९ ॥

दाम्ना बद्धो दमितदनुजश्श्रीरमाप्रेमधामा
भास्वद्धामा विहितविपुलश्रीसुदामोरुकामः ॥
दोषाद्दूरो दुरितदलनो दारितारिर्दरारी
देवाधीशो दिशतु सुदृशं दीनबन्धुर्दयालुः ॥ ५० ॥

सुखमयसुशरीरे सर्वदोषातिदूरे
व्रजयुवतिविहारे भक्तबुद्धेरदूरे ॥
दलितदनुजवीरे मध्वसिद्धान्तसारे
विहरतु मम चेतो सर्वदा निर्विकारे ॥ ५१ ॥

सदा मे चित्ताब्धौ विहरतु झषात्मा श्रुतिधर -
स्तथाधत्तां कूर्मो गुरुसुकृतशैलं मम विभुः ॥
मतिक्षोणीं मग्नां विषयविषपाथोधिसलिला -
त्समुद्धृत्य श्रीशश्शमिह कुरुतां मे किरिवपुः ॥ ५२ ॥

माता मेऽस्ति रमा त्रिलोकजननी त्राताऽस्ति तातो भवा -
न्नाथस्त्वं जगदीश्वरश्च भगवन्भ्राताऽपि जीवोत्तमः ॥
त्वं मातापितृपूर्वबन्धुरहितश्चैकोऽस्यनाथोऽप्यसि
त्वत्तोऽहं बहुबन्धुमानपि तवाधीनस्स्वतन्त्रात्मनः ॥ ५३ ॥

पाथोधिं विश भूधरं वह भुवं संदारयोग्रान्नखा -
न्दंष्ट्रां दर्शय याचको भव करे घोरं कुठारं धर ॥
कान्तारे चर चौर्यमाचर दिशावासो वसानोऽथवा
द्रागारोह तुरङ्गमं व्रजशिशो त्यक्ष्यामि न त्वामहम् ॥ ५४ ॥

क्षीराब्धौ मथ्यमाने प्रथमसमुदिते कालकूटे विषण्णां-
स्त्रस्तानस्ताखिलाशान्परमकरुणया सर्वगीर्वाणसंघान् ॥
मा भैष्टेति ब्रुवाणोऽमृतकलशकरो योऽम्बुधेराविरासी -
त्स स्वान्तक्षोभहालाहलविषमविषात्पातु धन्वन्तरिर्नः ॥ ५५ ॥

भ्रंशत्कर्णतटावतंसकुसुमं विस्रंस्यरुद्धांशुकं
संसक्तान्तरयौवतेन विचलद्योगं च हंसैश्श्रुतः ॥
कंसारेश्शिशिरांशुवंशजनुषस्संसारतापावली -
ध्वंसी स्यान्मम संस्मृतः परसुखाशंसी स वंशीरवः ॥ ५६ ॥

कस्तूरीतिलकायते जनकजाभालस्थले योऽमले
धातुर्मौलिचतुष्टये मरकतच्छायां बिभर्त्युज्ज्वलाम् ॥
शम्भोरम्बरसिन्धुशैवलजटाजूटे च यः कैरव -
भ्रान्तिं संजनयत्ययं रघुपतेः पादाब्जरेणुश्श्रिये ॥ ५७ ॥

यस्संजीवनमौषधं मृतमहीदेवात्मजोज्जीवनं
पाषाणं नवचेतनावहतया योषामणिं यो व्यधात् ॥
सुग्रीवस्य विभीषणस्य मुकुटं योऽस्थापयन्मूर्ध्नि सः
श्रीमद्रामपदाब्जरेणुरनणुक्षेमाय भूयान्मम ॥ ५८ ॥

सद्यस्संकटवारणान्निरुपमाचिन्त्याद्भुताश्वैर्यतो
भक्ताभीप्सितपूरणान्मृतिजुषोऽप्युज्जीव्य संदर्शनात् ॥
ध्येयश्श्रीयदुनाथ एव तदलं दृष्टान्तभूता इमे
नन्दो नन्दसती च विप्रवनितास्सान्दीपनिर्देवकी ॥ ५९ ॥

द्वाःश्यामरुणोदयभ्रमवशाज्ज्योत्स्नानिशीथे द्रुतं
कालिन्दीसलिलावगाढमसुरैर्नीतं प्रचेतोगृहम् ॥
नन्दं वीक्ष्य शुचाकुले व्रजजने तत्र प्रयान्पाशिनः
पूजां प्राप्य समागतस्सहपिता पीताम्बरः पातु नः ॥ ६० ॥

जृम्भारम्भविजृम्भणायतमुखे शम्भु-स्वयम्भू-मरु
ज्जम्भाराति पुरस्सरान्सुरवरानम्भोधराम्भोनिधीन् ॥
गम्भीरारवकुम्भिशात्रवगिरीन्कुम्भोद्भवादीन्मुनी -
न्दृष्टवा संभ्रममुग्धमातृमहितो डिम्भोऽस्त्वलं भाग्यदः ॥ ६१ ॥

मध्यान्हे क्षुधितव्रजार्भकजनं प्राग्याच्यमानाशनं
यज्ञे दीक्षितविप्रमौनजशुचं विज्ञातवार्तोत्सुकाः ॥
भक्त्या स्वार्पितषड्रसान्नविसरैस्संदर्शनैर्वाक्सुधा -
स्यन्दैश्च द्विजसुंदरीः प्रमदयन्नन्दाय नन्दात्मजः ॥ ६२ ॥

विद्या द्राक्समधीत्य यो लघुचतुष्षष्ठिं कलानां सकृ -
त्संप्राप्य द्विजपुङ्गवेन गुरुणा संप्रार्थितो दक्षिणाम् ॥
पारावारहृतं कृतान्तसदनातिथ्यं भजन्तं गुरो -
र्दत्वा पुत्रमतोषयत्स भगवान्भव्याय भूयात्प्रभुः ॥ ६३ ॥

संप्रेतं गुरुदक्षिणात्मकतया प्रादाः पुरा पुत्रकं
सूनून्मे तव मातुलेन निहतानानीय संदर्शय ॥
इत्थं मातृनिदेशतस्सुतलगो भक्त्या बलिक्ष्माभृता -
दत्तैस्संगमयन्सुतैस्स्वजननीं कृष्णस्स पुष्णातु नः ॥ ६४ ॥

वक्त्राब्जाज्जनिदायकोऽयमिति यो वैश्वानरेणार्चित -
स्तस्मादेव निमित्ततो द्विजवरैस्संप्रार्थितश्चाध्वरे ॥
पूर्वापूर्ववशात्सुपर्वपटलीपूर्वोऽप्यपूर्वोऽ तिथि -
र्लब्धोऽसाविति मानितश्च बलिना क्षेमाय मे वामनः ॥ ६५ ॥

मेने कुमारं सुकुमारमम्बा मारं विदुश्चामरयोषितो यम् ।
दैत्या व्यजानन्निजमारकं च स वामनो मेऽस्तु मनोविहारी ॥ ६६ ॥

वात्सल्योच्छलदच्छदुग्धहृदयं सानन्दचिन्ताम्बया
प्रेमोद्रेकवशात्स्वयं नु विगलन्नीव्यम्बुजाक्षीजनैः ॥
व्रीडानम्र - मृदुस्मितोन्मुखमुखं दृष्टोऽम्बुधेः कन्यया
पायात्कोऽपि कृपाकरो विधिपिता कौपीनशोभी बटुः ॥ ६७ ॥

गर्भे हेमधरो विधिस्स भसितं धत्ते महेशस्तनौ
देवेन्द्रश्शतमन्युरेव दहनो यस्स्वर्णरेता अपि ॥
श्रीदश्शूलिसखस्सुखाय न हि ते दातुं श्रियं सेविनां
लक्ष्मीं वक्षसि धारयन्स भगवान्स्याच्छ्रीकरश्श्रीधरः ॥ ६८ ॥

इन्द्रेणेन्द्रियलौल्यतः कलुषिता साध्वी मुनेः प्रेयसी
मोहं प्राप च मोहिनीं स्मरहरोऽप्यालोक्य लोलान्तरः ॥
कामादेव पितामहो दुहितरं वामामहोऽभावय -
त्त्वत्तोऽन्योऽम्बरकेशवन्दित हृषीकेशोऽस्ति कः केशव ॥ ६९ ॥

आस्याद्वासवपावकप्रसविनी चित्तेन माता विधो -
र्मार्तण्डप्रभवो दृशाऽसुवशिनो वायोः प्रसूः प्राणतः ॥
स्रष्ट्री नाभिसरोरुहाच्च जगतीस्रष्टुर्विधेरिष्टदा
स्त्रीलीला पुरुषाभिधा दिशतु शं सा काऽपि मे देवता ॥ ७० ॥

रोषाविष्टरमासमुत्सुकमनस्तोषाशया तत्कला -
योषापाणिपरिग्रहाय जरठावेषादिलीलाकरः ॥
दोषान्दुर्विषहान्स शोषयतु मे दोषाकराभाननोऽ
शेषाभीष्टवरप्रदाननिरतश्शेषाद्रिभूषामणिः ॥ ७१ ॥

लक्ष्मीवल्लभ मा मुषाण भगवन्हैय्यङ्गवीनं न वा
भिन्धि त्वं दधिभाजनं च कुपिता बध्नाति पाशैः प्रसूः ॥
तेनानन्दतनो व्यथा न भवतः पीड्यामहेऽन्तर्वयं
कुक्ष्यन्तर्गतलोकलोकविनुतो मोक्षाय दामोदरः ॥ ७२ ॥

भक्तानां भवबन्धमोचनचणो बद्धोऽपि पाशैस्स्वयं
पद्माप्रार्थितसंगमस्स्वरमणो गोपीविहारोत्सुकः ॥
पूर्णानन्दतनुर्व्रजे दधि-पयःपायी च चौर्येण य-
स्सोऽयं चित्रपवित्रचारुचरितो गोपालबालश्श्रिये ॥ ७३ ॥

कं ब्रह्माणमथेशमिन्दुशिरसं यो वर्तयत्याज्ञया
तस्माद्यं निगदन्ति सर्वनिगमास्सर्वोत्तमं केशवम् ॥
पार्थानां गृहदूतमर्जुनरथे शुल्कोज्झितं सारथिं
पांचाली पटवायने पटुतमं गोपार्भकं तं नुमः ॥ ७४ ॥

दूरीकृत्य तुरीं तुरीयपदभाक्संदर्शयंश्चातुरीं
वेमं व्योमपथे क्षिपन्परिहरंस्तन्तून्समन्तूनिव ॥
पांचालीं पतिपंचकप्रणयिनीं वासःप्रपंचेन यो
गोपीवस्त्रहरो जुगोप कृपया पायात्स मां वायकः ॥ ७५ ॥

दोषानास्पदमित्यथो गुणततेरेकाश्रयश्चेत्यहो
वेदानां निकरैरवेद्य 'इति' च ज्ञेयश्च सुज्ञानिभिः ॥
मुक्तैर्गम्य इति श्रुति-स्मृतिशतै र्नारायण स्तूयसे
तेन त्वां वृणुयामिहेत्युदधिजाश्लिश्टोऽस्तु तुष्टो मम ॥ ७६ ॥

देव त्वं भवदावपावकभवज्वालावलीसाध्वसा -
त्किं पाथोधिमवीविशः किमथवा भार्यात्रयोपद्रवात् ॥
दुर्मार्गेषु जनप्रवर्तकसुतप्रोद्दामतोद्वेगतः
किं वेति प्रियभक्तपृष्ट उदयद्धासो हरि श्श्रेयसे ॥ ७७ ॥

अष्टाभिः परिपश्यतीह नयनैस्स्रष्टा मुहुर्नाभिज -
श्शेषोऽयं सविशेषमेव परितः प्रोद्यत्फणो वीक्षते ॥
दूरान्नाभिसरोरुहं परिहर द्राङ्मुञ्च मञ्चं तथा
नो चेन्नैष्ठिकवर्णितास्तु त इति श्रीवाक्स्मितः स्याच्छ्रियै ॥ ७८ ॥

हं हो माधव माधवेति वचनं प्रोक्तं त्वयार्धं ह्रिया
तस्यार्थं तु विना क्रियापदमहं जाने रहस्यं प्रिये ॥
दूरे माधव तिष्ठ तत्पतिरहं प्राप्तोऽस्मि ते सन्निधा -
वित्याश्लिष्य सखीं सुखी स्मितमुखीं हृत्खे हरिः खेलतु ॥७९॥

मधुवंशजोऽपि मधुपायियादव-
प्रियबान्धवोऽपि मधुमित्रसत्पिता ॥
व्रजयौवताधरमधूत्सुकान्तरो
मधुसूदनः किमिति माधवाभवः ॥८०॥

पांचालीसदने कुविन्द निगमे गोविन्द नन्दव्रजे
श्रीराधावदनारविन्दमधुनः पाने मिलिन्द प्रभो ॥
देवद्विण्मृगयापुलिन्द हृदयालिन्देषु नृत्यन्सतां
पूर्णानंन्द मुकुन्द मय्यपि दयामन्दाकिनीं स्यन्दय ॥८१॥

कान्ते क्लान्तमुखी कुतोऽसि भगवन्विष्णो त्वया विश्वतो
विश्वं व्याप्नुवता समागमसुखं क्षुद्रे स्थिताया व्रजे ॥
भूयान्मे कथमित्ययेे प्रियतमे देशाच्च कालत्सम -
व्याप्ताऽसि त्वमपीति शौरिवचनस्मेरास्यराधाऽवतु ॥८२॥

विश्वाख्यविष्णो ननु विश्वविश्वं व्याप्नोषि विष्वक्त्वमितिप्रतीतः ॥
वेदे पुराणेषु तथाऽपि चित्ते कुतो न मे भाति भवान्शुभात्मा
॥८३॥

कृष्णः कामयते नवं नवमहो भृङ्गःपरं चंचल -
श्चेतो रंजयते भृशं रसविदां मंजुस्वनेनांजसा ॥
सर्वा वां समताऽस्ति कृष्ण मधुसंप्रीतिस्तु कीटो भवान्
कूटात्मा मधुसूदनस्त्विति हरी राधोक्तिहासो मुदे ॥८४॥

पादन्यासवशादपि त्रिभुवने यन्नाम लब्धं मया
सायासं सुदति त्रिविक्रम 'इति' प्राक्सौम्यमार्गाद्दृजोः ॥
वक्रापाङ्गदृशश्च वक्रवचसो वक्रभ्रुवो विक्रमै -
राक्रान्तोऽस्मि जगत्ततोऽपि तव हीत्युक्तिर्हरेश्श्रेयसे ॥८५॥

हृदाऽऽकृष्टो भक्तैः प्रणयरसवृष्टो युवतिभिः
परामृष्टो वेदै श्रुतिमननदृष्टोमुनिगणैः ॥
सदाऽस्पृष्टो दोषैस्सतत परिपुष्टोऽखिलगुणै -
श्श्रियाऽऽश्लिष्टश्श्रेयो दिशतु मम तुष्टो यदुशिशुः ॥८६॥

दिव्यानन्तदुकूलसृष्टिवशतः कस्याश्चिदार्तिं हर -
न्कासांचिद्वसनापहाररसिकोऽव्रीडं वितन्वन्सुखम् ॥
निर्मथ्नन्स्वकुलं परानथ मृतानाजीवयामास य -
स्सोऽयं कोऽपि पवित्रचित्रमहिमा सर्वत्र मां त्रायताम् ॥८७॥

अमन्दोच्चानन्दो विपदवितनन्दो द्रुपदजा -
कुविन्दो गोविन्दो विकसदरविन्दोपममुखः ॥
मुकुन्दोऽयं छन्दोविनुतगुणवृन्दोऽ ब्जपदसन्
मिलिन्दोऽघस्कन्दो दिशतु सुखसंदोहमनिशम् ॥८८॥

यांचा वामनतां नयेन्महोन्नतमपि द्राक् प्रापयेल्लाघवं
स्वल्पादेव यदृच्छया द्विजवरस्तुष्येच्च लब्धादपि ॥
वर्चःस्वं बलिनां वशीकृतिचणं संपाद्यमित्यादिश -
न्भूत्यर्थं भवतात्स वामनबटुश्श्रीभामिनीवल्लभः ॥८९॥

सिन्धौ मा क्षिप मां मनो गिरिवरं पृष्ठे वहाम्यंजसा
पीयूषं परिवेषयामि भवतां देवास्तथा दानवाः ॥
दंष्ट्रायां स्थिरमास्व मेदिनि न भीस्ते वत्स रक्षाम्यहं
तार्तीयीकपदं क्व दानवपते न्यस्याम्यहं हे बले ॥९०॥

मातस्तातनिदेशतः कृतमिमं मन्तुं क्षमस्वाद्य मे
पार्थान्पालयिताऽस्मि दैत्यकुहनाकारी पुनर्म्लेंछहा ॥
इत्युत्स्वप्नवचो निशम्य भयसंभ्रान्तां यशोदां महाऽऽ -
नन्दो नन्दशिशुस्समन्दहसितैस्सम्मोहयन्पातु नः ॥ ९१ ॥

वंशीमंजुलनादमोहविवशे निर्बन्धिबन्धुव्रज -
स्नेहोद्बन्धनमप्यपास्य रभसादाभीरभामाजने ॥
आयाते निजसन्निधिं करुणया भाव्यापदप्राप्तये
गोपीरूपहरिस्स तत्पतिपरीचर्यापरः पातु नः ॥ ९२ ॥

पाकः प्रीतिकरो मयाऽद्य रचितः पादौ तव क्षालये
पीठेऽस्मिंश्च निषीद भुङ्क्ष्व रुचिकृद्भक्ष्यं सहव्यंजनम् ॥
ताम्बूलं च गृहाण केलिसदने शय्या च सज्जीकृता
नाथेति स्वविहारिगोपललनावेषस्य वाचो मुदे ॥ ९३ ॥

शीर्षं मे बहुवेदनं प्रिय ततस्स्वस्थं न मे मानसं
श्वश्रूरद्य रुजाऽऽकुला च जरती, त्वत्पादसंवाहनम् ॥
कृत्वा तत्सन्निधे शयेऽत्र विरसो मा भूरिति प्रेयसी -
रूपस्स्वापतदक्रमं परिहरन्पायात्स मायी हरिः ॥ ९४ ॥

कान्ते कोमलपाणिपल्लवतलस्पर्शेन नित्याधिकं
सौख्यं मे जनितं नितान्तमृदुता दिव्यानुभूता तनौ ॥
वक्त्रे लोकविलक्षणद्युतिरहो ते भासते मानिनी -
त्येवं गोपवचस्स्मितो व्रजसतीरुपोऽवतान्माधवः ॥ ९५ ॥

पाकस्तेऽद्य रुचेः सुधारसपरीपाकस्य धिक्कार्ययं
सेवा स्मारयतीह चात्रिसुदतीं साध्वीं तथाऽरुन्धतीम् ॥
अन्योऽयं वचनक्रमोऽमृतरसोल्लासी स्वरो मंजुल
स्स्वंजो वासु तवेति गोपवचनैश्शौरिर्हसन्श्रेयसे ॥ ९६ ॥

स्मर स्मरहरार्चितं दुरितघस्मरं स्मेरस -
न्मुखामृतकरं सदा सुखकरं गुणौघाकरम् ॥
रमारमणमर्चितं विधृतचामरै श्चामरै-
स्स्फुरन्मरकतप्रभाभिरभिरामरामं सदा ॥ ९७ ॥

क्षीराम्भोधिशयस्सतां भवमहाकारान्धकारापहः
कारागारजनुस्स नन्दतनयाकारो जगत्कारणम् ॥
क्रूराशेषसुरारिसंहृतिपरोऽक्रूरादिभक्तेष्ट ओङ्-
कारार्थः करुणाकरोऽस्तु शरणं श्रीराधिकाराधकः ॥ ९८ ॥

लक्ष्मीदारक गोपदारक कृपासंत्रातवृन्दारक
रक्षोदारक भूविदारकतनो भक्तावनोदारक ॥
दीनोद्धारक शैलधारक भवाम्भोधेस्सतां तारक
पापोत्सारक तापहारक भव श्रीश श्रियां कारकः ॥ ९९ ॥

कंसध्वंसक हंसहिंसक बकप्राणान्तकोद्यद्बली -
वर्दोन्मर्दक केशिनाशक हरे त्वं पूतनाघातक ॥
नागे नर्तक नागकर्तक तृणावर्तान्तनिर्वर्तक
दुष्टोन्मूलक शिष्टपालक ममानिष्टं विनष्टं कुरु ॥ १०० ॥

विहङ्गपतिवाहनो मृदुभुजङ्गशय्याशयो
निरङ्गजनको हरिर्वरकुरङ्गलक्ष्माननः ॥
पतङ्गशतसप्रभस्सुरतरङ्गिणीवल्लभ -
स्तुरङ्गवदनो दिशेदलमभङ्गुरं मङ्गलम् ॥ १०१ ॥

देवकीर्तितकीर्तिश्रीदेवकीनन्दन प्रभो ॥
तावकीनं शावकं मां स्तावकीकुरु ते सदा ॥ १०२ ॥

भैम्या गले कनकमङ्गलसूत्रबन्ध -
प्रोद्यत्करे सपुलके सहसा सहासम् ॥
स्विन्ने स्फुरन्मुखसखीपरिहासलक्ष्यः
शौरिस्स मेऽस्तु शरणं करुणाकरोऽलम् ॥ १०३ ॥

लक्ष्मीकोमलपाणिपल्लवतलेनामर्शरोमोल्लस -
त्पादाम्भोरुह गोपतल्लज हरे श्रीबल्लवीवल्लभ ॥
माद्यत्क्षुल्लकमल्लमर्दक नवोत्फुल्लारविन्दाक्ष मां
वेल्लत्कुण्डलकर्ण तेऽङ्घ्रिकमले संल्लग्नचित्तं कुरु ॥ १०४ ॥

जगन्नियन्ताऽर्जुनयानयन्ता सुरारिहन्ताऽखिल विश्वमन्ता ॥
भक्तानुगन्ता व्रजवासिकान्तारन्ताऽऽधिचिन्ता हरताद्दुरन्ताः ॥ १०५ ॥

राधोपगूढश्श्रुतिराशिगूढो गुणौघगाढो दृढभाववश्यः ॥
विश्वस्य वोढाश्रितमन्तुसोढा व्यूढात्मकस्स्याद्हृदयाधिरूढः ॥ १०६ ॥

हेमन्ते हिममारुतेन नितरां वत्सोऽयमावेपते
राधे स्वीकुरु सत्वरं तव रसादौर्णोत्तरीयान्तरे ॥
इत्यादेशवशेन नन्दसुदृशः प्रेम्णाऽऽददाना हरिं
कादम्बक्षतकोशरम्यनलिनीशोभाऽस्तु राधामुदे ॥ १०७ ॥

घोषे यस्य मुखारविन्दगलितं गीतामृतं कामिनी -
प्रेमाम्भोनिधिवर्धनाय समभूद्वंशीरवोल्लासितम् ॥
घोरेऽथो समराङ्गणे रिपुगणाकूपारसंशोषकं
शङ्खध्वानविजृम्भितं च भगवान्स स्यान्मुकुन्दो मुदे ॥ १०८ ॥

वन्देऽरविन्दनयनं शरदिन्दुवक्त्रं
मन्देरितस्मितमनोहरमिन्दिरेशम् ॥
नन्देन नन्दनधिया कलितानुबन्धं
तं देवदेवमघवृन्दहरं मुकुन्दम् ॥ १०९ ॥

कल्याणकारी कमलाविहारी
कलिन्दकन्यापुलिनाधिचारी ॥
कान्तानुसारी कलुषापहारी
करोतु शौरिः करुणां मुरारिः ॥११०॥

बालोऽयंऽ चपलस्सुषुप्सति बहुश्रान्तश्चिरं क्रीडया
पर्यङ्के मृदुहंसतूलशयने राधे शनैश्शायय ॥
इत्याकर्ण्य यशोदयोदितवचश्शय्यागृहाविष्टयो -
र्गाढाश्लिष्टवतोस्तयोस्सरभसक्रीडारसश्श्रेयसे ॥१११॥

धूलीधूसरताच्छलेन यमुनास्रोतस्सु धूर्तस्स्वयं
सिष्णासत्ययमेक एव तदिमं राधेऽनुयाहि द्रुतम् ॥
इत्थं नन्दसतीनिदेशवशतस्संप्राप्तया राधया
स्वैरं शौरिशिशोर्दिशन्तु सलिले नर्माणि शर्माणि नः ॥११२॥

चौर्ये वेगगृहीतकेशवकरामर्शातिचापल्यतो
राधाया नवनीतलेपधवलत्रुट्यन्निचोलीजुषः॥
आनन्दस्तिमिता भिया तरलिता मन्दस्मितोल्लासिता
व्रीडासंकुचिता दृगंचलतटी मोदप्रपंचाय नः ॥११३॥

कारुण्यामृतवर्षिणी व्रजवधूविद्युल्लताश्लेषिणी
सौख्याम्बून्मुखभक्त चातकगणप्रोल्लासिनी संततम् ॥
संसारातपतीव्रतापशमनी श्यामावदातद्युति -
श्चित्ताकाशविहारिणी भवतु मे सा काऽपि कादम्बिनी
॥११४॥

मीनाक्षी भवतीत्यहं प्रणयतो मीनोऽभवं वार्धिजे
त्वं कूर्माभकपोलिकेति कमले कूर्माकृतिश्चादृता ॥
भूदेवी त्वमिति प्रिये रसवशाद्भूदारतामाप्नुवं
नर्मोक्त्येति हरेः प्रसन्नहृदया श्रीर्मे श्रियै श्रेयसे ॥११५॥

वृन्दारण्यविहायसे विहरणव्यापारलोला मुदा
संसारातपतापलोपनपटुस्सद्बर्हिणानन्दिनी ॥
श्यामा या कनकाभगोपललनासौदामिनी भासुरा
क्षेमासारमनारतं विकिरतात्सा काऽपि कादम्बिनी ॥ ११६ ॥

श्रद्धाबालतृणावलीप्रणयिनी शुद्धात्मनोऽनारतं
वत्सान्पाययितुं मनोज्ञममृतं सोत्साहमुत्कण्ठिनी ॥
वृन्दारण्यचरी वधूसहचरीवृन्दा नवाम्भोधर -
श्यामा कामधुगस्तु काऽपि कमना क्षेमाय नस्सर्वदा ॥ ११७ ॥

श्रीगीताप्रसवालयोऽम्बुदरुचेस्सज्ज्योतिषो मन्दिरं
विद्यासद्म विनेयपाण्डुजनुषो विद्वेषिसूनासदः ॥
लीलानर्तनरङ्गभूर्हनुमतो हैमोऽपि हीरप्रभो
भास्वान्कोऽपि रथो मनोरथपथे मे संचरत्वन्वहम् ॥ ११८ ॥

उद्यद्भास्करमण्डलं फलमभूद्बालस्य सद्योजनेः
विस्तीर्णश्शतयोजनं जलनिधिर्यूनो हि कुल्याऽभवत् ॥
हस्ते यस्य च गन्धमादनगिरेः कूटोऽप्यभूत्कन्दुक -
स्सोऽयं शं तनुतां समीरणतनूजन्मा हनूमान्मम ॥ ११९ ॥

वर्णी पुण्यजनानपुण्यभुवनातिथ्येन योऽयोजयद् -
गेहीं प्रापयदासुरीं गतिमहो यः पूर्वदेवांस्तथा ॥
पूर्णज्योतिरभिन्नताग्रहजुषो भिक्षुस्तमोगान्व्यधा -
त्सोऽयं वेदगणाभिवर्णितगुणो दिश्यात्समीरो दृशम् ॥ १२० ॥

यस्यावतारत्रयमूलरूपनामस्थितो ज्ञानपरो म वर्णः ॥
सर्वज्ञतां साधयते हनूमान्भीमस्स मध्वोऽवतु मां समीरः
॥ १२१ ॥

रक्षांसि क्षपयन्क्षणात्क्षितिरुहे रक्षां सतां यो व्यधा
त्क्रूरानुग्रकृतान्तकिङ्करवशान्त्राज्ञः कुरून्योऽकरोत् ॥
दुर्वादाभ्रनिरासतश्च विदधे द्वैतार्कमत्युज्ज्वलं
सोऽयं कीश-नरेश-मस्करिवपुर्दद्यात्समीरो दृशम् ॥ १२२ ॥

आजन्मब्रह्मचारी स्वसुखमगणयन्नन्यदाम्पत्यसौख्ये
भूयश्श्रान्तिं दधानस्सकलनिगमविद्धन्त तिर्यक्षु जातः ॥
पक्षद्वन्द्वेन हीनोऽप्यमरपथमहोड्डीन उत्तीर्णसिन्धुः
पायान्नः कोऽपि कोपात्क्षपितरिपुकुलस्सत्कृपालुः कपीशः
॥ १२३ ॥

भवस्सन्भूतानां भवभयहरो भासि भुवने
शिवस्सन्साधुभ्यो दिशसि च शिवावल्लभ शिवम् ॥
त्रिशूली लोकानां हरसि हर शूलं च सकलं
विषादी त्वं दत्वाऽमृतमिह विषादं तिरयसि ॥ १२४ ॥

पातुं पाणिधृते सुदुर्जरविषे बाष्पाविलाक्षीं शिवां
षड्भिश्चीत्कृतिमाननैर्विदधतं षाण्मातुरं चातुरम् ॥
शुण्डाग्रेण कराभिकर्षणपरं स्तम्बेरमास्यं भिया
निष्पन्दान्प्रमथांश्च वीक्ष्य विहसन्नीशोऽवतात्सान्त्वयन्
॥ १२५ ॥

अवलम्बितवेदकिंशुको विधिकान्ताविजयध्वजांशुकः ॥
प्रतिभेन्दुकलोज्ज्वलांशुकः कविताचूतलताशुकश्शुकः ॥ १२६ ॥

औदार्यादिगुणाकरोऽभयकरो दाने सदोद्यत्करो
मिथ्यावाद्यविभीकरोग्रमकरो दोषाकरो यस्सताम् ॥
दोषाङ्कूरमरुश्श्रितामरतरुर्दुर्वादकण्ठत्सरु -
स्सत्यध्यानगुरुर्धिया जितगुरुः पुण्यैर्गुरुः पातु नः ॥ १२७ ॥



# २. अश्वधाटी श्रीवेङ्कटेशाष्टकम्

श्रीवासुदेवदयिता वासवादिविनुता वाडवेन सहसा
स्वावासवक्षसि पदावाप्तताडनरुषाऽवार्यहार्दकलहा ॥
सेवानुरक्तजनभावानुरूपफलदैवावनिं गतवती
देवाधिपोऽपि विरहीवाहिनायकगिरावाश्रितोऽवतु गुहाम् ॥१॥

गोपालकेन बहुकोपाकुलेन परशोः पातनात्सरभसं
गोपालनार्थमयमापातदर्शितशिरःपाटनस्सुखतनुः ॥
भूपाय संगदितशापाक्षरो भवजतापापहो निजरुजो
लोपाय तीव्रमगदोपायवाञ्जयति सोऽपारदिव्यमहिमा ॥२॥

रामाकृतेऽयमभिरामाकृतिर्भुवनधामा सुमैस्सुरभिता-
रामावनौ प्रबलकामातुरश्चतुरवामाश्ववाहनगतः ॥
सोमाननामुपजगामाशु संकुपितभामाजनेन दृषदां
ग्रामाहतः कमनधामा स पूरयतु कामान्रमासहचरः ॥३॥

आकाशराजतनयाकामुकोऽखिलहृदाकाशगो वनचरी-
नीकाशकासिजरदाकारतः पटुतया कार्यसाधनयशाः ॥
नाकाङ्गनास्मितविलोकास्पदप्रकटलोकातिशायिचरित
श्शोकापहो भवतु मे कांक्षितं दिशतु पाकारिपूर्वविनुतः ॥४॥

वैवाहिकेन विधिना वांछितक्षितिपभूवारिजाक्ष्युपयम -
श्श्री-वायु-वारिभवभू-वामदेववनिता-वारुणीविहसनः ॥
भूवासिनां खलकलावागतोरुविपदो वारको यदुपति-
जैवातृकाभवदनोऽवाप्नुतां मम सदा वाङ्मनोविषयताम् ॥५॥

दोषातिदूरमघशोषावहं सकलदोषाकराभवदनं
शेषाधिशय्यमरिशेषासहं स्वजनतोषाय भूमिवसतिम् ॥
शेषाचलालयमशेषामरस्तुतिविशेषाभितुष्टहृदयं
कोषायितं सुगुणभूषागणस्य सुखपोषार्थमेमि शरणम् ॥ ६ ॥

लीलाकरो जलदनीलाकृतिस्सरसनीलाविलासरसिक-
श्शैलालयो विनयशीलात्मभक्तभवजालापदावलिहरः ॥
कोलात्मकेन हरिणा लाघवेन कलितालापतुष्टहृदयो
हेलाजितारिरनुकूलं श्रियं सुवनमालाधरो दिशतु मे ॥ ७ ॥

जानामि नैव गुणगानादिकर्म भवतो नामदिव्यमहिम -
ध्यानादहं दुरितहानावहात्सुखनिदानादिहास्मि धृतिमान् ॥
श्रीनाथ वेङ्कटपते नाकिलोकपटलीनायकस्तुतयशा
दीनातिघोरभवदूनात्मपालनपरानारतं त्वमव माम् ॥ ८ ॥

क्षीराम्बुधेर्गिरिविहारागतस्य भुवि नारायणस्य भजना-
दारादुपासकहृदारामरम्यवसतेरागमैः कृतनुतेः ॥
श्रीरामनामकविनाराधकेन भवपारार्थिना सुखकरं
घोरापदालिपरिहारावहं प्रणुतिसाराष्टकं विरचितम् ॥ ९ ॥

❑❑

# ३. मासावतरणिकाः

**चैत्र :**

कामं कामसखस्सुखानि परभृन्मंजुस्वनैरावह -
न्नामोदैः कुसुमावलेर्वितनुषे चामोदभूमोदयम् ॥
भूयस्तापयसे खरातपवशाद्धाताम्बुशैत्यं हरं -
श्चैत्र त्वच्चरितं विचित्रमिह किं नन्दाम निन्दाम वा ॥ १ ॥

त्वय्येवाविरभूद्धिताय जगतश्श्रीरामनामा हरि -
स्तद्भक्तो हनुमानवातरदहो त्वय्येव देवेश्वरः ॥
सत्यध्यानदिवाकरोऽस्तमगमज्ज्ञानप्रकाशप्रद -
श्चित्रं चैत्र चरित्रमत्र किमु ते नन्दाम निन्दाम वा ॥ २ ॥

**वैशाख :**

राधाभिधोऽपि न हि गोकुलतोषकस्त्वं
लोकांश्च तापयसि माधवनामधारी ॥
वैशाख नेदमतिविस्मयकारि लोके
नामानि नैव गुणगौरवसस्पृहाणि ॥ ३ ॥

यस्मिन्देवहिताय मन्दरगिरिं कूर्मो दधौ श्रीपति -
र्ज्ञानोल्लासमथातनोत्करुणया व्यासावतारात्मना ॥
भक्तं पालयितुं दधार भगवान्श्श्रीनारसिंहाकृतिं
मासो माधवसाधुवादमहितो धन्यः परं माधवः ॥ ४ ॥

शीर्णान्पर्णचयानपास्य कुरुषे पूर्णा दलैः कोमलै -
र्माद्यत्कोकिलरङ्गमङ्गलभुवो वैशाख शाखास्तरोः ॥

कान्ताऽसह्यवियोगदावदहनक्लान्तांश्च पान्थान् वृथा
किं सन्तापयसे खरातपभरात्त्वं माधवाख्यो हरेः ॥५॥

कठोरसूर्यद्युतिभिर्जनौघं
वैशाख संपीडयसे नितान्तम् ॥
वनस्पतींस्तोषयसे च पर्णैः
पुष्पोद्‌गमैं रीतिरियं विचित्रा ॥६॥

**ज्येष्ठ :**

जलासारैर्मासो जनयति जनानां सुखमयं
प्रमोदं प्राज्ञानां दिशति धनवृष्ट्या गुरुवरः ॥
परं नाम्ना ज्येष्ठः प्रथम उरुतेजोभिरपरो
गुणैरेव ज्येष्ठो न किल वयसा नापि पयसा ॥७॥

पक्वैराम्रफलैस्सुधारसभरैरत्यन्तमातर्पयं -
ल्लोकस्यातपतापमम्बरचरैरुत्सारयन्नम्बुदैः ॥
सायं शीत-सुगन्धमन्दपवनैरानन्दयन्मानवान् -
ज्येष्ठोऽयं न हि नाममात्रत उत श्रेष्ठो गुणैरप्यहो ॥८॥

वृष्टिं नैव करोति सस्यपटलीतुष्टिप्रदां संततं
तुष्टिं चातकमात्रकस्य तनुते चाल्पैः पयोबिन्दुभिः ॥
स्वच्छं विष्णुपदं विधाय मलिनं तेजस्विभान्विन्दुभा -
न्याच्छन्नानि चिकीर्षतीति न भवांज्येष्ठोऽश्नुते ज्येष्ठताम् ॥९॥

आकाशे जलदात्पतन्ति लवशो नो वारिधाराः परं
दूराद्वार्नयने घटत्रयभरश्रान्त्या सुमाङ्गीदृशः ॥
केदारेषु तथोप्तबीजकृषकश्वेताक्षितः पाथस -
स्संपातोऽविरतोऽधुना खलजने ज्येष्ठः कथं त्वं शुचिः ॥१०॥

सस्यानि पोषयसि वृष्टिकरः प्रशस्य
तापं च लोपयसि तोषयसीह लोकान् ॥
निष्कारणोरुकरुणार्यजनानुकारी
ज्येष्ठश्शुचिस्त्वमसि सार्थकनामधेयः ॥ ११ ॥

लोकानां वदनेषु नीलिमभरो नेत्रेषु धाराऽम्भसां
जाराणां रतिमन्दिरेषु चपलालीलाविलासोदयः ॥
मेघानागमनेऽपि तद्गुणगणस्तैन्येन नैच्यं वहन्
मासोऽयं जगतीतले भजति हा ज्येष्ठप्रतिष्ठां चिरात् ॥ १२ ॥

**आषाढ :**
मेघैः पङ्क्तिलमातनोषि गगनं ज्योतिर्मयान्तर्धितो
विक्रीणासि जडाय कृष्णवपुषे त्वं नीरदायात्मजाम् ॥
स्वर्णाभां चपलां वसून्यभिलषन्धत्से शुचित्वं वृथा
दुर्नीतिं तव वीक्ष्य नूनमधुना निद्राति नारायणः ॥ १३ ॥

आषाढेन विभूषितोऽपि सुफलक्षेत्रेऽल्पमल्पं वसु
वर्षन्हर्षविनाकृतं वितनुषे लोकं कृतानादरम् ॥
तेजस्वत्पटलीनिराकरणतश्चापादयन्दुर्दिनं
ग्रीष्मर्तो जनगर्हणां बत विना प्राप्नोर्विशिष्टं फलम् ॥ १४ ॥

गुणैकभूंषस्साषाढो वामनो महिमोन्नतः ॥
यन्नियामकतां धत्ते धन्य आषाढमासराट् ॥ १५ ॥

आकाशे न पयोधरस्स्फुरति वा साटोपमस्मिन्परं
दूराद्वारि समाहरन्मृगदृशां श्वासैश्श्रमोज्जृम्भितैः ॥
धारा नो वियतःपतन्ति च परं श्रान्ताङ्गनानेत्रतः
कर्मैतत्तव मर्मभेदि च कथं सोढव्यमाषाढ रे ॥ १६ ॥

जीमूताहितनीलिमा न गगने किन्त्वानने कर्षिणां
नो नाके परिदृश्यतेऽद्य चपलाश्लेषस्तु यूनां भुवि ॥
कूपेऽन्तर्हितमम्बु चाम्बुजदृशां नेत्रात्परिष्यन्दते
हन्ताऽऽषाढ तवेदृशं विनिमयं को वाऽभिनन्देत्सुधीः ॥ १७ ॥

**श्रावण :**

विभूषितात्मा मलिनाम्बरेण रजस्वलानां भृशमुद्धतानाम् ॥
नदीवधूनामनुषङ्गलोलो नभो न भात्येव विगर्ह्यदोषः ॥ १८ ॥

न वृष्टिपातश्रवणं गर्जनश्रवणं न च ॥
तथापि श्रावणो मासश्श्रावणश्रेयसे यतः ॥ १९ ॥

मेघश्रीर्गगने घने च सलिलश्रीस्सारसश्रीर्जले
पाथोजे च मधुश्रियामतिशयस्तस्माद्विरेफोत्सवः ॥
विद्याश्रीस्तदपेक्षिशिष्यनिवहश्रीस्सद्गुरोर्वामठे
सोऽयं मासनियामकस्य महिमा श्रीश्रीधरस्यातुलः ॥ २० ॥

सहस्रं विहगास्सन्तु मूका वा कटुरावकाः ॥
केकिनस्त्वेव धन्यास्ते केकाभिर्मदयन्ति ये ॥ २१ ॥

लोके पयोधरभरं ललना कुलीना
लज्जाभरेण पिदधाति निजाम्बरेण ॥
प्रावृङ्वधूः पुनरियं महदेव चित्रं
धत्ते पयोधरसमावृतमम्बरं यत् ॥ २२ ॥

**भाद्रपद :**

देवेऽवर्षति वासवे नयनयोः पानीयपूरो महा -
न्सान्द्राम्भोधरडम्बरेऽपि विकले गाढान्धकारश्शुचा ॥
एवं श्रावणवैशसार्तमनसां हर्षाय वर्षन्भृशं
मासो भाद्रपदो हि भद्रपदभाक्कस्याद्य न स्यादसौ ॥ २३ ॥

सस्यैश्श्यामलिमा भृशं क्षितितले द्राक्श्वेतिमाचाम्बरे
हंसैर्मानससम्मुखैररुणिमा प्रेमान्धभामानने ॥
पान्थस्त्रीवदनेऽविषह्यविरहप्राग्भारतः कालिमा
सैषी वर्णविभागपद्धतिरियं मोदाय खेदाय च ॥२४॥

वर्षाधिक्यवशात्क्वचिच्च महतीं सस्यादिहानिं व्यधा
निष्पारा विपदोऽतनोर्बत नदीपूरेण भूयः क्वचित् ॥
बिन्दून्कांश्चिदपातयंश्च पयसां दुःखार्णवेऽपातयो
व्यर्था भाद्रपदाऽधुना त्वदभिधा लोभाद्यथा न्यासिनाम् ॥२५॥

**आश्विन :**

कालाब्दैर्मलिनीकृते सुरपथे नैर्मल्यमापादय -
न्मार्तण्डेन्दुनवप्रकाशनसुखं लोके समुत्पादयन् ॥
गाढाज्ञानतमो निरस्य हृदयाकाशे च संवित्प्रभां
तन्वानाननुकर्तुमिच्छति गुरून्धन्यो भवानाश्विन ॥२६॥

आश्विनो गगने भास्वांन्हन्ति भूमिगतं तमः ॥
मासोऽयमाश्विनश्चाभ्रतिमिरं सुरवर्त्मनि ॥२७॥

त्वं जीवनं वितनुषे परिशुद्धमङ्ग
धत्से तथा विमलमम्बरमाश्विनाद्य ॥
भूम्यै समर्पयसि सस्यहरिद्दुकूल-
माचारपूत रसिकोऽसि नितान्तधन्यः ॥२८॥

**कार्तिक :**

कमलिनि किमु कार्तिकेऽतिमात्रं कलयसि वैभवयोगतोऽवलेपम् ॥
ननु सरभसमेत्य मत्तचित्तो मधुपगणोऽपहरत्ययं मरन्दम् ॥२९॥

धान्योद्भवेन कृषकान्परितोषयन्द्राक्
मध्यस्थितेर्बत महार्घतयाऽऽर्तिदस्त्वम् ॥

कृष्णापणांश्च वणिजस्सुखयस्यभीक्ष्णं
 सार्थाभिधस्तदसि कार्तिक काऽऽर्तिकैश्च ॥ ३० ॥

नीरं त्वं विमलं विधाय जगतीसौख्यं विधत्से परं
 द्राक्शैत्यातिशयेन दीनजनतां संपीडयस्यन्वहम् ॥
सस्यैस्साधुफलोन्मुखैस्सुखयसि प्राज्यैरुदारः पुनः
 त्वं किं भारतमन्त्रिणां गुरुरसि च्छात्रोऽथवा कार्तिक ॥ ३१ ॥

दोषाकरोऽपि विमलीभवति प्रकामं
 धत्ते प्रसादमतुलं च जलाशयोऽपि ॥
दामोदरप्रियतमे ननु कार्तिकेऽस्मि-
 न्सत्साहचर्यमहिमा वचसामगम्यः ॥ ३२ ॥

कान्तानुषक्तललनासुखदायकस्य
 पान्थाङ्गनाजनघनार्तिविवृद्धिहेतोः ॥
स्थाने वदन्ति तव "कार्तिक" नामधेयं
 वृद्धा यथार्थगुण-दोषविमर्शदक्षाः ॥ ३३ ॥

वर्षावामदृशाऽचिरेण चपलाचापल्यदोषस्पृशा
 कालाम्भोधरकर्दमैर्मलिनतामापादितामम्बरे ॥
ज्योत्स्नाचूर्णवशाद्विशोध्य रजकीभावं भवानाश्रितो
 युक्तं कार्तिक कामिनीपरवशः कुर्यान्नकामी किमु ॥ ३४ ॥

**मार्गशीर्ष :**

शैत्यात्कम्पयते जनं सुखयते सस्याभिसंपत्तितः
 कामं पीडयते वियोगिनमसौ संप्रीणयन्योगिनः ॥
वासो-वासगृहैश्च हीनजनतानिन्द्योऽपि गीतास्तुतः
 किं निन्दाम्यथवा स्तवीमि सदसत्कार्यं च मार्गस्यते ॥ ३५ ॥

शीतार्तप्रमदास्वयङ्ग्रहपरिष्वङ्गप्रमोदान्विना
यूनस्सर्वजनार्तिदोऽसि भुवने व्रात्येन शैत्येन च ॥
'मासानामहमस्मिमार्ग' इति च श्रीशौरिणास्तूयसे
विख्यातोऽस्यपि चाग्रहायणतया "पुण्यैर्यशोलभ्यते" ॥ ३६ ॥

यस्मिन्नाविरभूत्रिलोकमहिता गीता मुरारेर्मुखा -
न्मासानामहमस्मि मार्ग इति च श्री शौरिणा यस्स्तुतः ॥
मासस्सोऽयमहोऽधुनाऽम्बुजदृशां सीत्कारमुद्वेलय -
न्रोमांचं समुदंचयन्व्रणयते कामीव बिम्बाधरम् ॥ ३७ ॥

नीहारोग्रशरैश्शिरीषमृदुला मथ्नासि पान्थाङ्गना-
श्छायाशाखिचयानपाहतदलच्छायान्विधत्सेऽदयम् ॥
सर्वत्राप्रतिघं त्रयीतनुमहो तन्वंश्च मन्दप्रभं
को लोके सहते सहस्य भवतोऽसह्यामिमां दुष्कृतिम् ॥ ३८ ॥

त्वं शैत्यसाम्राज्यधुरन्धरोऽपि
हे मार्ग सर्वत्र जयोद्धतोऽपि ॥
कान्ताकुचक्ष्माधरमाश्रितेभ्यो
ददासि चित्रं जयपत्रमद्य ॥ ३९ ॥

**पुष्य :**

अम्भोदा विलयं गतास्सुविपुलां वृद्धिं विधायावनौ
सस्यानामभिवृद्धये निजरसं दत्वैव शुष्का अहो ॥
शूद्धां पूर्वपरम्परामनुसरन्धान्यैः परान्पोषय -
न्पुष्यः पुण्यपरोपकारिचरितो बाभाति सार्थाभिधः ॥ ४० ॥

कृत्वा चूतलता नवोत्थकलिकास्त्वं षट्पदांस्तोषयं -
स्तीव्रामुत्कलिकां हृदीह जनयन्पान्थाङ्गनाश्शोषयन् ॥
क्ष्मास्थैर्भूरिफलैश्च सर्वजनतां संप्रीणयन्पोषय -
न्पूर्णं नैव बिभर्ति सार्थकतया मासोऽद्य पुष्याभिधाम् ॥ ४१ ॥

**माघ :**

अत्युग्रता तापकरा मृदुत्वं परं परीभावसहान्वयीति ॥
नात्युष्ण-शीतप्रकृतिर्हि माघमासोऽयमाघोषयतीह लोके ॥ ४२ ॥

यत्रार्को वरसप्तसप्तिकरथस्सप्तार्कपर्णैः कृत -
स्नानं मानवमातनोति सुसुखोदर्कं कुतर्कोज्झितम् ॥
विभ्राजच्छिशिरर्तुकश्शिशिरतादुःखं हिनस्ति क्षणा-
त्सोयं पावनपावनः परिहरेन्माघो ममाघोदयम् ॥ ४३ ॥

प्रातस्स्नाहि दिनेशमण्डललसन्नारायणायार्घ्यदो
गायत्रीं जप तर्पयामरमुखान्श्रीमाधवं चार्चय ॥
भुङ्क्ष्वेशाय समर्पितान्नममलं सच्छास्त्रमावर्तय -
माऽघं संचिनुया इतीरयति नो माघस्स्वनाम्ना द्विजान् ॥ ४४ ॥

मा घस्रेशनवोदये स्वपिहि हे मा घर्षयेस्सज्जना -
न्पापं मा घटतां च ते स्वतपसो मा घस्मरो भूःक्रुधा ॥
व्यर्थं मा घटिकामपि क्षिणु विना मा घण्टयाऽर्चाच्युतं
मत्तो मा घटवित्ततो भव नयेर्माघं च सत्कर्मभिः ॥ ४५ ॥

सत्यं प्रातर्भजति शिशिरीभावमाश्लेषहार्यं
ताम्यच्चेतःपथिकसुदृशां पाणि-पादेन साकम् ॥
तासां श्वासैस्सह वहति चात्युष्णतां घस्रमध्ये
को वा स्तूयात्सदयहृदयो माघमाघोररूपम् ॥ ४६ ॥

**फाल्गुण :**

भीष्मस्तीव्रतरातपेन बहुलद्रौणैश्च धान्यैर्युतो
योऽश्वत्थामलसद्दलश्शकुनिभिर्युक्तस्समुद्यत्स्वनैः ॥
यो दुर्योधनपक्षपोषणपरो दुश्शासनैर्भीकरो
मासोऽयं हि वृथैव फाल्गुन इति ख्यातः सुभद्रोज्झितः ॥ ४७ ॥

कामं दाहयसे जनैः प्रतिपुरग्रामं प्रकामं जने
कामं वर्धयसे च चूतकलिकां प्रोल्लास्य तस्यायुधम् ॥
माघश्चाघ निषेधको मधुपुरस्कारेण पश्चात्कृत
कृत्यं फल्गु न किं तवेह नितरां चावल्गु वा फाल्गुन ॥४८॥

शब्दैः कर्णकठोरतामयति यस्स्वच्छन्दबालास्यगै-
र्धान्यानां परिपूरणेन जनतागेहे सुभद्रान्वितः ॥
लोकेऽस्मिन्द्रुपदप्रियश्च न कुलाचारप्रियोऽनारतं
मासः फाल्गुन एष फाल्गुनतुलां प्राप्तुं समाकाङ्क्षति ॥४९॥

धर्मबुद्धिसमुत्सारी वायुजामोदलोपकृत् ॥
अपास्तसहदेवश्च मासोऽयं फाल्गुनः कथम् ॥५०॥

लोकेऽभद्रतमोऽस्ति पाणि-मुखयोस्संयोगवाचैर्भवा-
न्कामं दाहयसे जनैस्सुखकरं पार्थस्सुभद्रान्वितः ॥
कामेनोदवहत्सुखी द्रुपदजा - चित्राङ्गदोलूपिका
नाम्ना केवलमत्र फाल्गुण भवान्पार्थेन धत्से तुलाम् ॥५१॥

अश्लील वाङ्मयविषेण दुनोषि साधून्-
जातिं च दूषयसि हन्त जगत्सुमान्याम् ॥
किं फाल्गुनाऽद्य कलिनाऽलमफल्गुनाऽये
सौधारकं मतमहो बहु शिक्षितोऽसि ॥५२॥

□□

# ४. आत्मनिवेदनम्

इह जगति जागर्ति किल सकलपुरुषार्थसाधने ज्ञानमेव परं निदानम्। नहि ज्ञानमन्तरा पावनतापादकं वस्तु विद्यते वसुधातले। यथोक्तं गीतासु भगवता श्रीकृष्णेन "नहि ज्ञानेन सदृशं पवित्रमिह विद्यते" इति। ज्ञानमेव व्यावर्तयति पशुभ्यो मानवान्। तदिदं ज्ञानमवगतेष्वागमेषु, स्मृतिपथमुपगतासु स्मृतिषु, समवलम्बितेषु पुराणनिकुरम्बेषु, मतिमन्दिरावासेष्वितिहासेषु तत्सहकारेण श्रुति-मतिगोचरीभूतासु श्रुतिततिषु, समया आत्मानं समादृतेषु सत्समयेषु, परिचितेषु शास्त्रेषु समुत्पत्तिसौलभ्यमावहति भृशम्। सर्वेषां अमीषामागमादीनामवगमे सुरवाणीचरणसारसपरिचरणमेव शरणीकरणीय मित्यत्र न कस्यापि हृदि पदमधिगच्छति संशयलेशोऽपि। सौपर्वाणी हि वाणी न केवलं पारलौकिकं फलमनुभावयति, परमैहिकमपि। इमामेव दैवीं वाचमवलम्ब्य भगवद्गुणाननुवर्णयन्तो यथा शुकवामदेवादयो मुनयो वशीकृतमनसोऽपि मुक्तिसीमन्तिनीसमागमसुखमन्वभवन् । तथा कविकुलतिलक कालिदासादयोऽपि दिगन्तसंचारचतुरकीर्तिकामिनीकलितकण्ठालिंगनप्रमोदपरवशा वसुमतीवल्लभवितीर्णविपुलैश्वर्यविलोला विस्मारितविबुधलोकामवापुरामोद-परम्पराम्।

एषैव सुरभाषा प्रायशोऽशेषदेशभाषाणां प्रसवभूमिः पोषणी तोषणी च विदुषाम्। गैर्वाण्या वाण्या अणीयांसमपि गरिमाणमासादयितुं न काऽपि भारती प्रबभूव प्रभवति प्रभविष्यति च।

एतामेव समुपजीवन्त्यो देशभाषाः सरसतामासादयन्ति नितराम्। सेयमाम्नायस्वरूपिणी साक्षात्कारयति परं ब्रह्म। स्मृतिविग्रहा ज्ञानवर्षावग्रहं समग्रमुन्मूल्य विमलमुपदिशति निश्रेयसपथम्। पुराणवपुष्मती विपुलमदूष्यं वैदुष्यमाविष्करोति समभ्यस्यताम्। शास्त्रशरीरिणी हितकरमादिशति शासनम्। काव्यकाया हि कल्याणकारिणी मतिकालुष्यहारिणी कलयति कल्पनापथातिगं तुलितनिर्वाणं शर्मातिशयम्।

सरसपदविन्यासमनोहरा शय्यासमारूढा समुज्ज्वलगुणगणा हृदयङ्गमालङ्कारा मधुरध्वनिरसदृशरसनिर्झरपरिस्राववशीकृतरसिकावतंगा नववधूरिव विबुधवागियं कस्य वा सहृदयस्य न हृदयमावर्जयेद्बलादेव। परंपुरा किल कविकोकिलवाल्मीकिगीता गीताप्रसवभाग्यभाजनीभूता श्रीव्यासमहामुनिविहितमहिमव्यासा कविकुलतिलककालिदासकलितललितविलासा भासोद्भासिता भवभूतिविहितनवरसविभूतिः भारविसंभावितभाग्यरविः बाणकविप्रथितगुणगणा श्रीहर्षसमासादितहर्षा क्षेमेन्द्रसंपादिताक्षामक्षेमा कैलासभूमिरिव कालिदाससेविता भवानीव भवभूतिभासुरा गगनस्थलीव विततभारविः शिशिरश्रीरिव समाश्रितमाघा तपस्विमूर्तिरिव भासोल्लासिनी चातुर्वर्ण्यव्यवस्थेव समादृतशूद्रका वैकुण्ठपदश्रीरिव मुरारिपदरञ्जिता सुरसभेव कविराजिता दिविषद्वेषिपरिषदिव काव्यतोषिता कुम्भसंभवशासनपरिपाटीव भूभृदादृता सुरादराऽपि परमपावना पदाश्रयाऽपि शिरोमान्या बाणभासुराऽपि सौम्या वैराग्योपदेशिन्यपि अर्थाभिलाषिणी सर्वभाषाणामुपकारिणी पोषणी तोषणी सततमुपजीव्यमाना दिव्या वाणी नूनमिदानीं दीनतमां दशामनुभवन्ती कस्य वा न दुःखाकरोति चेतस्सचेतसः।

या किल पुरा अङ्गेषु रिङ्गन्ती वङ्गेषु त्वङ्गन्ती कलिङ्गेषु भङ्गानभिज्ञा कुरुषु गुरुसन्माना कोसलेषु कौशलसंपादितकुशला काश्मीरेषु हर्षस्मेरवदना नेपालेषु क्षितिपाललालिता पांचालेषु समुदंचितमोदप्रपंचा गौडेषु प्रगाढप्रचारा विदर्भेष्वर्भकमारभ्याकृद्धमनुवृद्धप्रगतिसंदर्भा गुर्जरेषु समूर्जितसिंहगर्जना महाराष्ट्र-सौराष्ट्रेषु-पुष्टि-तुष्टिमावहन्ती कर्णाटकेषु पटुचटुलमटन्ती आन्ध्रेषु नीरन्ध्रसान्द्रानन्दभरा पाण्ड्येष्वखंडताण्डवक्रीडा केरलेष्वविरलविहारा कुन्तलेषु निरन्तरसंतोषभरा सिंहलेषु भृशंहासोल्लासा नितान्तं परिभवानास्पदवैभवशिखरमारुढा प्रमोदस्य चरमसीमानमविन्दत, तामेतामिदानीं करणविकलामिव समापन्नदुरवस्थामवलोक्य सहजतयैव वदनकुहरान्निस्सरेदेव हाहेति दुःखावेगपरिस्फुटितशब्दो दीर्घतरोर्ध्वनिश्श्वाससहचरो भावुकानां नयनारविन्दादमंदनिष्यंददश्रुबिन्दुसंदोहपुरस्कृतः।

हन्त करालः कालः कुटिलप्रभावेण सुरभारत्या अपजिहीर्षति सर्वस्वमेव। विलयैककुतूहलः कालः खण्डयति पण्डितान्। श्रुतिमात्रशेषां कलयितुमीहते श्रुतिततिम्। स्मृतिपथात्सुदूरमपसारयितुमपेक्षते स्मृतीः। पुराण-जीर्ण वसनानीव

वितनोति वैफल्यपात्राणि पुराणानि। सरसकवनान्यपि कवलीकरोति गुणभवनानि। सकलशास्त्राणि सकलनाशकानामस्त्राणां गोचरीभूतानि विधित्सति विधिवशात्। मांसमिव मीमांसाशास्त्रं स्पृहयति समास्वादयितुम्। कर्कशमपि तर्कसमयं कर्कन्धूफलमिवावकरसंपर्कदूषितमातनुते। वृन्ताकमिव वदनान्तर्निवेशयति वेदान्तम्। व्याकरणमपि वाजीकरणरसायनमिव सादरमुदरातिथिमाकलयति। किंबहुना। नूनममरभारतीमेव नामावशेषाम-भिलषति कर्तुम्। हन्त हन्त दुरात्मनोऽस्यैव जटिलकुटिलतया मुषितो मङ्गलतमो वेदघोषः। मूर्च्छिता शास्त्रचर्चा। विलीनः काव्यकल्पनाविहारः।

ईदृशेऽस्मिन्व्यतिकरे दुरन्तचिन्तासंततिसंततसंतापसमाक्रान्तस्वान्तायां रुग्णशय्यां समाश्रित्य सहनपथातिगवेदनाशतव्याकुलायां भगवत्यां देवभारत्यां भारतीयैः प्रतिभाप्रभाप्रभावभरितैरपि विहितामुपेक्षामवेक्ष्य दुनोतितरां नश्चेतः। मातृपरिपालनं नाम पुत्राणां परमपावनो नैसर्गिको धर्मः। तमपि धर्मं पाश्चात्यानुकृतिमदिराविकृतमस्तिष्काः यदि भारतीया विस्मरेयुर्जानन्तोऽपि तर्हि नूनमद्यैव विलुप्तास्यान्निःश्रेयसपद्धतिः। समासन्नप्रायैवाधोगतिरप्रतिहता। भोजमुखमहाराजसहस्रसमासादिताग्रपूजा प्रत्यक्षरं लक्षधनदानक्षमा नानार्थसंपन्नाऽपि दीना मोक्षादिगतिप्रदाऽपि गतिहीना दूनेयममरवाण्यपि मृतेति व्यपदिश्यमाना मानार्हाऽपि मानातिगावहेलनाभाजनीभूता सभाजनसभाजन-समुचितगुणगणगरिमसंपन्नाऽपि प्राज्ञम्मन्यजनकृतानादरविपन्ना संस्कृतभाषा दुर्विषहविषादविषोदधौ न केवलं स्वयं निमज्जति, परं मज्जयति चिरमुदासीनता-भाजो जनानचिरादिति निर्विशङ्कमाचक्ष्महे। यदि समुन्नतिः सर्वात्मनाऽपेक्ष्यते तर्हि सुरभारती सेयमवश्यमासेवनीया। विना सुरभारती प्रचारं नैव सुशकं सुखमैहिकमामुष्मिकं वा भारतीयानाम्। मुक्तिः ज्ञानपराधीना। ज्ञानं च वेदादिनैव संपादनीयम्। वेदादयोऽपि सुरभारतीमया इति तामनासेव्य नैव प्रभवन्ति भारतीया भव्यमधिगन्तुं कथमपि। नाद्यापि समतिक्रान्तोऽवसरः। यावद् धमनीस्पन्दनं, यावद्देहे रुधिराभिसरणं, यावत् श्वासानिलसंचारः तावदेव सुरभारतीशुश्रूषायां यतनीयं सत्वरम्। अतो विभूतिकामैः परिदृश्यमानदेशभाषासमुन्नतिसाधनान्यवलोक्य यदि प्रयत्यते सफलीभवेदेव परिश्रमः।

समुन्नतिसाधनेषु वृत्तपत्रिकाप्रचारणमेव प्रधानतममित्यत्र न कोऽपि संदेग्धि मतिमाननुभवसाक्षिकः। अद्यतनसमये तु वृत्तपत्रिका नाम संजीवनौषधिरेव भाषाणाम्। इदमखिलमवधार्य गुणप्रणयपरवशाः सुरभारतीसमुत्कर्षाय प्रतिपक्षं वृत्तपत्रिकामेकां प्रकटयितुमुद्यतास्स्मो वयमिदानीम्। यदि संस्कृतभाषासौभाग्यस्य बलवती दिदृक्षा यदि विपदन्धकूपनिपतिताया मातुरुद्दिधीर्षाप्रकर्षो भावुकानां, तर्हि अस्मदीये ग्राहकानुग्रहैकशरणेऽस्मिन्नवसाहसे वितरणीयस्सर्वथा करावलम्बः। पत्रिका प्रचारणभारः संपादकादपि वाचकानां शिरस्येव विशेषतो विन्यासमर्हतीति न किल न विदितं केनापि। मधुरवाणी रसिकजन-मनांस्याप्याययन्ती परिचारिकेव सुरभाषां सेवितुमीहते। तदस्मिन्नितरां श्रेयस्करे कर्मणि साहाय्यमारचय्य सुरसरस्वतीसमुन्नयनैकपरायणामिमां प्रोत्साहयेयुर्विपश्चितो गैर्वाणीप्रणयिन इति बलवती नः प्रत्याशा। तामेतां विमलतमामाशां परिपूरयितुं परमपुरुषो भगवान्सर्वेश्वरः कमलावल्लभो वाचकेषु संपादकेषु च सानुकम्पामकम्प्यां दृशं विकिरतादित्याशास्यते।

परमप्रमोदास्पदमिदं यदिदानीं सुरभारतीं परिचरितुमहमहिकया पुरः प्रसरन्ति प्रान्तीया विद्वन्महाशयाः। तुङ्गप्रतिभाविस्मापिताङ्गिरसा वङ्गीयास्समर्पयन्ति प्रतिमासं "संस्कृतमंजूषा" मिषेण रत्नमंजूषामेव दिविषद्भाषादेव्यै। वैदुष्यभरोल्लासिनी वाराणसी सुप्रभातमावेदयन्ती निराशानिशासाम्राज्यं निरस्य प्रभातकालमाविर्भावयति। तत्रैव प्रतिमासं प्रवर्तमाना विग्रहवतीवामरभारती "अमरभारती" प्रमोदपारावारे प्रसह्य प्रक्षिपति विचक्षणस्य कस्यवा न मानसम्। सुरभाषाजयप्रदे जयपुरे विविध प्रबन्धमणिगणभासुरो "रत्नाकरो" न करोति कस्य वा चेतश्चमत्कृतिम्। कांचीतः प्रचरन्ती कांचीकिङ्किणीव मंजुशब्दै रंजयति रसिकपुंजं "मंजु भाषिणी। दक्षिणदेशे "उद्यान" नाम्नी पत्रिका सुरसरस्वती सम्राज्ञ्या विहारोद्यानसुषमामावहन्ती तोषयति विदुषः। भीषयति सुरभाषाविद्विषः। शोषयति नैराश्यविषोदधिम्। एवं सर्वप्रान्तेषु सुरसरस्वतीसेवातत्परस्वान्तेषु कर्नाटकोऽपि 'तदुपासने न प्रमत्तः'नाऽपि सुप्तः मधुरवाणी मुखेन सेवैकतत्पर आस्ते। मधुरवाणीमुखेन सर्वेषां शेमुषीमतां तोषपोषाय भूयादिति द्रढीयान्नः प्रत्ययः।

मधुरवाण्या आदर्शसंचिकेयं निःसंकोचं निजगुणसंचयसमाकृष्ट-वाचकमनस्संचरणचंचुर्यदि पंचशतग्राहकाणां निरवग्रहानुग्रहभाग्यभाजनीभूता भवेत्तर्हि सानन्दमागामिबलिप्रतिपदमारभ्य प्रतिपक्षमात्मानमाविर्भावयितुं प्रभवेत्। सर्वथा मधुरवाणीजीवनं वाचकवदान्यताधीनमेवेति नैव निवेदनमावश्यकं विदितवेद्यानाम्। मधुरवाणीयं प्रत्यङ्कं मधुरया लघुकथया विनोदयति रसिकमानसानि। देशभाषापत्रिकासु परदेशभाषापत्रिकासु' वा प्रथितसरसलेखानामनुवादेन मोदयति सहृदयान्। गुरुरिव धर्मतत्त्वमुपदिशति। मातेव हितोपदेशं विधत्ते। सुहृदिव निवर्तयत्यसत्पथात् सन्मार्गनिदर्शनेन। कान्तेव संतोषयति नितान्तमन्तरङ्गं पीयूषरसवर्षिण्या भाषया। वर्षीयसी योषिदिव निवेदयत्यैतिहासिकप्रबन्धान्। निष्पक्षपातं विवेचयति सामाजिका-न्विषयान्। समस्याप्रदानेन वाचकचतुरचेतःकल्पतरुषु कवनकुसुमोद्गममा-तनोति। काव्योद्यानेषु रमयति रसिकान्। वैदूषक वैदुष्येण हासोल्लासेन निस्सारयत्यनुत्साहम्। किंबहुना। न तादृशो विषयो वर्तेत हृदयङ्गमः, यः किल मधूरवाण्या अनाविष्कृतः। अपि नामेदृशी मधुरवाणी विन्देत वाचककरुणासरणिविषयताम्।

❑❑

# ५. भारतजयाशंसनम्

क्रुध्यत्केसरिशावकैः प्रकलयन् कैशोरलीलाः पुरा ।
दौष्यन्तिर्भरतः स सर्वदमनो यन्नाममूलः पुमान् ॥
सर्वान् गर्वितवैरिणोऽपि दमयत्सौभ्रातृनिर्वाहकं ।
निर्जित्याक्रमकारिपाकमधुना जीयाच्चिरं भारतम् ॥१॥

यत्स्वातन्त्र्यसुरक्षणाय हि पुरा श्रेष्ठः प्रतापः प्रभुः ।
पृथ्वीराट्च शिवप्रभुर्हरिहरस्श्रीकृष्णराजादयः ॥
विद्यारण्यसमर्थमुख्यमुनयो राजर्षयः प्रायतन् ।
गोप्तुं भारतगौरवं रिपुकुलं संयाप्यतां रौरवम् ॥२॥

घोरो घोरिमहम्मदो न गजनी गर्वान्धमह्मदशहः ।
चण्डश्चेंगिझ पङ्गुपुङ्गवखलस्तैमूरअलेग्झांड्रकः ॥
यत्तेजोहरणाय नालमभवन् हूणाः शका बर्बराः ।
तद्देशाक्रमसाहसोद्यतमहाभूतोऽधुनोच्चाट्यताम् ॥३॥

दौष्यन्तेर्भरताद्धि सर्वदमनात् शौर्यं रिपून्मर्दनं ।
त्यागं दाशरथेश्च, गोम्मटविभोरौन्नत्यसौन्दर्यकम् ॥
नाभागाद् भरताच्च विश्वगृहितां संगृह्य योऽभून्महान् ।
देशोऽयं किल भारतेति महितोऽजिंक्यो न शंक्योऽन्यथा ॥४॥

बुद्धाशोकमहात्मनां सुवचनैःशान्तिं भुवो बोधयत् ।
श्रीरामानुजमध्वशंकरवचोभिः सत्यमावेदयत् ॥
श्रीराजेन्द्रविनोद्जवाहरमुखैर्भावैक्यतां वर्धयत् ।
काश्मीराक्रमकारिपाकमधुना जीयाच्चिरं भारतम् ॥५॥



# ६. ॥प्रवर्ततां भारतभाग्यचक्रम्॥

मार्गं पुरस्तात्सुगमं विधातुं निस्सारयत्सर्वविधांश्च विघ्नान्॥
सवेगमेव भ्रमदप्रमादं प्रवर्ततां भारतभाग्यचक्रम् ॥ १ ॥

कृन्तन्निरोधोद्यमनप्रसक्तान् अन्तर्गतान्वा बहिरास्थितान्वा॥
पुरः प्रसर्पत्प्रकटोरुतेजः प्रवर्ततां भारतभाग्यचक्रम् ॥ २ ॥

उत्साहयद्वीरजनानमन्दं सम्मोदयच्चोद्यमशीललोकम्॥
संतापयच्छात्रवपाकि-चीनान् प्रवर्ततां भारतभाग्यचक्रम् ॥ ३ ॥

उत्कोचलुब्धान्धनकोट्यधीशान् उच्चाधिकारे प्रबलान्निपात्य॥
प्रस्थाप्य लोकस्य हितैककार्यान् प्रवर्ततां भारतभाग्यचक्रम् ॥ ४ ॥

ये कृष्णवाणिज्यमुखेन दीन दूनप्रजाशोषणहीनकृत्याः॥
तान्दण्डयच्चोग्रतरं तरस्वि प्रवर्ततां भारतभाग्यचक्रम् ॥ ५ ॥

उच्चाटयद्भ्रष्टचरित्रदुष्टान् उच्चावचैर्भ्रान्तिजुषो नितान्तम्॥
प्रच्यावयच्चोच्चपदाधिकारान् प्रवर्ततां भारतभाग्यचक्रम् ॥ ६ ॥



# ७. भारतराष्ट्रध्वजः

सूर्याश्वानां हरितरुचिता श्वेतिमैरावतस्य
यत्रोद्रिक्ता विलसतितरां कुङ्कुमश्रीर्वधूनाम् ॥
दिग्जेतृत्वं विपुलविभवं चारुसौहार्दभावं
व्यक्तीकुर्वन्भुवि विजयते रम्यराष्ट्रध्वजोऽयम् ॥१॥

हंसश्वेतिमवर्णतो विमलतां हिंसाविहीनात्मतां
सस्योल्लासिहरिद्रुचा च विपुलां धान्याभिवृद्धिं पुनः ॥
भास्वत्केशररोचिषा सुरभितामाल्हादिनीं सूचयन्
स्वातंत्र्यारुणरश्मिराजिरुचिरो राष्ट्रध्वजो राजताम् ॥२॥

शस्त्रास्त्राणि विनैव वीररुधिरस्रावादृतेऽनादृतं
हिंसाकर्मणि चान्तरा रणकथां क्रोधादिवर्जं तथा ॥
कुत्राप्यश्रुत - दृष्टपूर्वमतुलं यद्भारतीयार्जितं
स्वातंत्र्यं त्रिदिशान्ध्वजः कथयितुं तारापथे जृम्भते ॥३॥

श्वेतिम्ना ननु वर्णसंकरभयं वर्णाश्रमप्रेमिणां
हिन्दूनां यवनप्रियेण हरितीभावेन तेभ्यो भयम् ॥
स्त्री भालोचित कुङ्कुमद्युतिवशान्निर्वीर्यतां सूचय
त्येवं भ्रान्तिविकल्पनाःपरिहरन्राष्ट्रध्वजो भ्राजताम् ॥४॥

**भूयाच्चिरायुःपटुधीःपटेलः**

संस्थानाम्बुधिसंचयाचमनकृन्नव्योऽद्य कुम्भोद्भवो
मत्ताङ्ग्लप्रभुतापिशाचवनिताप्रोच्चाटने मान्त्रिकः ॥
भास्वद्भारतभाग्यमन्दिरधृतावाधारभूताचल-
स्तम्भोऽयं सुचिराय जीवतु शठोत्पाटी पटेलः पटुः ॥५॥

□□

वन्दे मातरम्।

# ८. श्रीस्वराज्यरत्नाकरः।

## (१) स्वदेशीयलहरी।

शुभानि श्रीजानिर्दिशतु दयया नीरदरुचिः।
प्रपन्नां पांचालीमविषहशुचालीढहृदयाम्॥
परित्रायंल्लीलाविसृमरदुकूलालिरचना-
कुविंदो गोविंदो विकसदरविंदोपममुखः ॥१॥

अनिर्बंधं द्वीपांतरसततसंचारचतुरां।
क्षणादार्यक्षोणीद्रविणतटिनीं विस्तृततमाम्॥
निवर्त्येमांल्लोकानवति हि निराहारतृषितान्।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥२॥

चिराद्रूढं दैन्यं हरति किल मान्यामपि दशां।
दिशत्यन्यान्देशानपहसितुमीशां धनितया ॥
विलुंपंतीं कंपं जटिलमनुकंपास्पदमतः ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥३॥

रयोदंचन्मंचास्तर* निखिलयंत्राणि सहसा ।
खिलीकुर्वाणां स्वप्रसृमरमहिम्ना हि परितः ॥
जपानं तन्वानां धनगणजपानंदविधुरं ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥४॥

---

* म्यांचेस्टर

अनिद्रं दारिद्र्यं द्रुततररयाद्द्रावयति या ।
विपन्नं तन्वानां कनकभरसंपन्नमचिरात् ॥
निराहारेणार्तान्सपदि किल मूर्तान्धनपतीन् ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥५॥

अविच्छिन्नासारं सकलसुखसारं बलकरं ।
पराधीन्याद्रोगान्मरणकरणान्मोचनचणं ॥
स्वराज्याख्यं क्षीरं मधुरमधुरं पाययति या ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥६॥

बहिष्कारस्वार्थत्यजननिजविश्रंभसुदृढ- ।
स्वदेशप्रेमाख्यान्सरसपरिपुष्टांश्च चतुरः ॥
स्तनान्बिभ्राणा या परमपुरुषार्थं वितरति ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥७॥

चिरादार्यक्षोणीतिलकतिलकेनोरुतपसा
समुन्नीतां प्रेम्णा शमनिधिमहात्माश्रयबलात् ॥
अनुप्राप्तां तूर्णं स्थितिमनुपमामुज्ज्वलतमां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥८॥

चरंतीं द्राक्तंतुप्रकरशुचिकांतारजठरे ।
वलक्षश्रीकांतां गुरुतरसमुल्लासभरितां ॥
यथेच्छं स्वालंबाभिधरुचिरवत्सेन सहितां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥९॥

विदेशीयासह्याशुचिवसन पूतिश्वकुखराऽ - ।
प्रियस्पर्शप्राप्तां परिहरति पापावलिमलम् ॥
सवित्रीं सौख्यानां निरतिशयमांगल्यजननीं ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥१०॥

स्वयं श्वेता वित्तप्रणयिपरदेशीयवणिजां ।
दृशः स्फीतश्वेताः कनकलवलोपाह्वितनुते ॥
मृदुस्मेरश्वेताननसरसिजान्भारतजनान् ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ११ ॥

तुरीं सास्नां रम्यां सुकृतकृतमूरीकृतवती ।
स्फुरत्धामा वेमाभिधरुचिरशृंगादृतरुचिः ॥
अभीष्टान्पर्याप्तान्वितरति सपर्यापरनृणां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ १२ ॥

प्रमत्तं* लंकेशायरधनिकुलं केलिवशतो ।
हृतश्रीसंकेतं नयति किल रंकेशपदवीम् ॥
विनातंकेनालं विजितसितपंकेरुहरूचिः ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ १३ ॥

अटंतीं कर्नाटे वसुजटिललाटे पटुगतिं ।
कलिंगे रिंगंतीं सरसतरवंगे द्रुतपदाम् ॥
अभीप्सासंदर्भादृतवरविदर्भामविरतं ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ १४ ॥

उदंचत्पंचांबुक्षितिविहितसंचारकुतुकां ।
सलीलं खेलंतीमतरलधिया केरलतले ॥
सहर्षं गर्जंतीं विपुलधनभाग्गुर्जरभुवि ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ १५ ॥

महाराष्ट्रे देशेऽनवरतविहारातुरहृदं ।
सदंभां कांभोजे विकसितमुखांभोजमनुजे ॥
मुदा लोले चोले श्रमभवशुचो लेशविकलां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ १६ ॥

---

* लंकेशायर

अनिद्रेक्षां मद्रे प्रविगलदभद्रे च नितरां ।
अवंतीप्रांतीयश्रियमलमवंतीं प्रणयतः ॥
लसंतीं नेपाले सुखितजनपाले धनभरात् ॥
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ १७ ॥

अरुत्थोत्साहश्रीगुरुषु कुरुषु स्वैरगमनां ।
स्फुरंतीं सस्मेराननमनुजकाश्मीर विषये ।
अवंध्यां गांधारे द्रविणगणसंधारणचणे ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ १८ ॥

मुदा गांधीनाम्नाऽनिशमनुसृतां गोपपतिना ।
बहिष्कारं दंडं परिभवहरं साधु दधता ॥
स्फुरद्वार्तापत्रीमधुरमुरलीमुग्धजगता ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ १९ ॥

यदाधारादारादतुलवसुधाराप्रमुदिता ।
पुराऽखर्वाद्वर्वाद्भरतवसुधावासिजनता ॥
नितांतं चिंतार्तं समतनुत चिंतामणिमिमां
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ २० ॥

महिम्ना भूम्ना वा सरसलवणिम्नाऽप्यनुपमां ।
सहर्षं सोत्कंठं सुकुतुकमथो सादरभरम् ॥
समस्तैः पाश्चात्यैरपि खलु पुरा स्तुत्यमहतीं ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ २१ ॥

अलंकुर्वाणां प्राग्वनचरसमांग्लेयभवनं ।
गुणैः शार्मण्यानां जनितबहुशर्मावलिमलम् ॥
विशेषाद्देशेषु प्रसरणमशेषेषु दधतीं ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ २२ ॥

श्रियं स्वीयां शंपास्फुरणसमकंपां विदधतीं ।
समालोक्यासूयाकलुषहृदयैरांग्लसदनैः ॥
पुरा नैजे देशे सपदि नितरां रुत्धगमनां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ २३ ॥

सदा स्वार्थैकांक्षैर्निजविकलवाणिज्यमहती- ।
विवृत्धौ साकांक्षैरहह परकीयैरतितराम् ॥
परिक्लिष्टां पूर्वं गतिविरहतोऽदृश्यविभवां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ २४ ॥

इदानीं स्वक्षोणीप्रणयिजनतापाणिकमल ।
स्थिरालंबात्पूर्वां जिगमिषुरपूर्वांच विभुताम् ।
समुत्सृष्टालस्या भरतभुवि जागर्ति किल या ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ २५ ॥

प्रकृत्या गोमांसप्रणयभवनैर्वीरयवनै ।
र्निजां हिंसावृत्तिं झटिति विजहद्भिश्च सहजाम् ॥
विपत्धंत्रीति द्राक्शरणमुपपन्नैरनुगतां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ २६ ॥

अमुष्या लालाजिर्विमलगुणजालात्प्रमुमुदे ।
गतोदासो दासः स्वयमभृतिदासः समभवत् ॥
समर्थाल्लीबंधू प्रणयगुणवल्लीनिगडितौ ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ २७ ॥

जयं यस्या मद्रे लषति विजयी राघवकृती ।
महाराष्ट्रे नेता भजति नरसिंहोऽपि किल याम् ॥
समाधत्ते प्रेम्णा चतुरमदनो मोहन इमां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ २८ ॥

मुनीनामावासोचितविमलपंचांबुविषये ॥
मदांधानां दैत्योचितकठिणकृत्यं कृतवताम् ।
महत्प्रायश्चित्तं शमसरणिनैवाशु ददतीं ॥
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ २९ ॥

सदा धर्मप्राणानिह मुसलमानांश्च बलिनः ।
प्रतीक्ष्य प्राचीनप्रथितगुरुपीठप्रलयतः ॥
समाधातुं क्षुब्धान्प्रभवति हि या स्वेन महसा ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ३० ॥

अमंदं हिंदूनां प्रशमसदसां दूनमनसां ।
विपन्नानां नानास्थितिषु यवनानामपि परम् ॥
समानैकाधारां भरतवसुधाराधनधियां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ३१ ॥

सहर्षं सोत्साहं निजजननभूच्छ्रायतृषितैः ।
सरोषेर्ष्योद्वेगं विफलविकलाशांग्लधनिकैः ॥
तटस्थैराश्चर्यस्तिमितमथ दृष्टां सुकुतुकं ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ३२ ॥

भजंत्येके दासानपि विभुपदासादितमदा ।
नुदासीनाः केचिद् भृशमुभयतः कुंचितदृशः ॥
परं श्रेयस्कामैरविरतमुपास्यां सुकृतिभिः ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ३३ ॥

खिलापत्पंचांबुप्रकरणफणीशावृतसुधी -
जनप्रज्ञाशैलान्मथितपरिषत्क्षीरजलधौ ॥
प्रदोग्ध्री कामानां समजनि महात्मोरुतपसा ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ३४ ॥

समंताद्वैफल्यं व्रजति निखिलोपायनिकरे ।
नितांतं याञ्चादौ निजसहजसौख्योत्कमनसाम् ॥
शरण्यां कारुण्याच्छमधनवतां भारतभुवां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ३५ ॥

स्वतंत्रं विद्यार्थिद्विपनिकरमाबन्धुमनिशं ।
भृशं दास्यालाने समुदितकुशालासुगमने ॥
समुत्कंठाऽव्रीडैरपि विहितपूजापरिचितां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ३६ ॥

परन्यायास्थानं चिरविलसदन्यायबहुलं ।
बहिष्कर्तुं धैर्यात्किल विवदमानैरपि मुधा ॥
स्वयं प्राज्ञंमन्यैरपि विरचितातिथ्यमुदितां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ३७ ॥

बुभुक्षार्तान्भक्ष्याशनभरितकुक्षीन्विदधती ।
शुभां सूते शोभामपि विभवभाजां द्विगुणिताम् ॥
क्षितीशानां क्षेमं कलयति किलाक्षाममनिशं ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ३८ ॥

विपन्नानां भाग्यं निरयपतितानां च शरणं ।
कलानामुत्धर्त्री परमदनिहंत्री च किल या ॥
अथालस्यद्वेष्ट्री कमलनिलयायाः सहचरी ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ३९ ॥

कुविंदानां बंधुर्गतिविरहमंदेतरशुचां ।
सहाया निर्व्याजं जगति कृषिकर्माश्रयभृताम् ॥
वयस्या वाणिज्यश्रमपटुजनानां च हितकृत् ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥ ४० ॥

प्रशांतस्वांतानामपरिचितहिंसालवधियां ।
करांभोजोद्भूतभ्रमणपरचक्रात्समुदितम् ॥
पवित्रं सूत्रौघं कुतुकमनसा स्निह्यति च या ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥४१॥

अमंदं मंदाक्षं सहजममलं रक्षति भुवः ।
प्रवृत्तं निश्शंकं परपरिभवं वा तिरयति ॥
समाधानस्थानं विमलपरिधानं च जगतः ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥४२॥

अखंडं सौभाग्यान्ननु भरतखंडं विदधतीं ।
युरोपं सारोपद्रविणविसरोपघ्नरहितम् ॥
समीचीनं चीनं सरभसपराचीनविभवं ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥४३॥

स्फुरद्भूमा ग्रामान्प्रविशति विपद्ग्रामहतये ।
गरीयस्संपद्भिः सपदि च भरीभर्ति नगरीः ॥
निवासे भूपानां वसति दृढबत्धासनरुचिः ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥४४॥

प्रधावंतीं बालैरपि सरलशीलैर्द्रुतपदं ।
निकृत्तप्रत्यूहां सकलतरुणैर्जातकरुणैः ।
जराजीर्यद्देहैरपि कृतशुभाशीर्विलसितां
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥४५॥

श्रियं प्रासादीयां प्रसभमुटजानां प्रदिशति ।
समादत्ते तंतून्सुरवनतृणानीव विमलान् ॥
प्रसादं तन्वाना सुरजननभू भारतभुवि ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥४६॥

सुरम्यां हर्म्यालीं शिथिलयति सौम्येन हि पथा ।
गुणान्यंत्रोद्भूतांस्त्यजति विषदिग्धानिव सितान् ॥
विषण्णा दुष्कृत्यैरकरुणविदेशीयवणिजां ।
स्वदेशीयोदंचद्वसनसुरधेनुं श्रय सदा ॥४७॥

मंदांन्नदयति प्रगल्भधिषणान्संतोषयत्यंजसा ।
नित्यं क्रीततनून्विनोदयति च प्रेम्णा कृपावारिधिः ॥
स्वाधीनस्य जनस्य मोदवशतो धूनोति मूर्धानि या ।
सेयं कामदुघा स्वदेशवसनस्वर्धेनुरभ्यर्च्यताम् ॥४८॥

प्रत्यासन्ना सुकृतनिकरैः प्राक्कृतैश्च प्रसन्ना
भूयादेवाभ्युदयमनसः श्रेयसे भूयसे ते ॥
तामेतां हाऽनितरसुलभां यद्यवज्ञायसे त्वं
लोके चास्मिन्विधिबलहतो नास्त्यधन्यस्त्वदन्यः ॥४९॥

जगति बहवः संत्येवान्ये विलंबफलप्रदा ।
असुकरपथा नानाविघ्नैरनिघ्नजनोचिताः ॥
इयमिह परं सर्वैः साध्याऽचिरेण फलोन्मुखी ।
परहृतधनप्राध्यै नः स्यादहर्निशमादृता ॥५०॥

अधन्यं नैर्धन्यप्रसरदतिदैन्येन सुहृदं
सुदामानं श्यामांबुदरुचिरधामा विरचयन् ॥
अतींद्रश्रीलं द्राक् पृथुककणसांद्रप्रमदभाक् ।
सरोजाक्षः शौरिः सकरुणकटाक्षं विकिरतु ॥५१॥

ददाना सद्बुद्धिं श्लथयति च मालिन्यमचिरा ।
दशेषं या वैदेशिकवसनदुर्वासनहृदाम् ॥
सकृत्पाठादेव स्फुरणजननी गालवकृता ।
महात्मप्रीत्यै सा भवतु निजदेशीयलहरी ॥५२॥

॥ इति स्वराज्यरत्नाकरे स्वदेशीयाभिधा प्रथमा लहरी संपूर्णा ॥

## (२) श्रीगांधीटोपीलहरी ।

यदालोकादेव प्रसभमधिकारोत्थतजनः ।
प्रसर्पत्कोपांधो भवति गुरुतापाकुलधिया ॥
सहस्त्रांशोर्विष्वक्प्रसृतमहसः कौशिक इव ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥१॥

नृणां मूर्धारूढा परिहरति मेधामलमलं ।
चिरं सारासाराकलनसुविचारान्वितरति ॥
भजंती या दंभाचलदलनदंभोलितुलनां
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥२॥

भजत्यल्पं मूल्यं स्वयमतितरां साधुचरिता ।
विशुद्धं चात्मानं शिरसि दधतां भारतभुवाम् ॥
स्वदेशप्रेमाख्यं प्रदिशति महार्हामलमणिं ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥३॥

समुद्यत्थंगेरीद्रविणमदभंगोद्यमरता ।
सनिष्कान्शुष्कास्यान्विरचयति निष्कांचनतया ॥
इटालीयांल्लोकांस्त्रुटितधनकूटान्विदधती ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥४॥

स्वराज्यप्रेप्सूनां विजयदपताका शुभतमा ।
चिरादस्वातंत्र्योदधिनिपतितानां च तरणिः ॥
महामंत्रः साक्षात्सहकृतिपिशाचाकुलधियां ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥५॥

बहोः कालात्सर्वांतरभिदुरकोलाहलकरं ।
निजात्यंतौदास्यात्प्रखरतरदास्यातपभवम् ॥
हरंती संतापं विशकलितसंतोषनिकरं ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥६॥

स्वदेशद्रोहाख्यं निबिडमितराभेद्यतिमिरं ।
विलीनं लोकानां शिरसि चिरकालादुरुतरम् ॥
विनिस्सार्य क्षिप्रं ज्वलयति परं ज्योतिरमलं ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥७॥

स्मृता सद्यः स्फूर्तिं मनसि शमितार्तिं जनयति ।
क्षणं दृष्टा स्पष्टं हरति दुरदृष्टं च बहुलम् ॥
शरीरं संस्पृष्टा शिशिरयति शीतांशुकरवत् ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥८॥

प्रपूतं मन्वानःशिरसि यदलंकारवशतः
किरीटं सुत्राम्णो गणयति तृणायोज्वलमणिम् ॥
स्वदेशप्रेमार्द्रः सपदि तरुणो भारतजनः ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥९॥

शिरस्त्राणं किंवा वरदकमलापाणिकमलं ।
स्वराज्यप्रासादप्रथममसृणश्रेणिरथवा ॥
सुधावापी दास्यानलकवलितानां च किमियं ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥१०॥

प्रसन्नांतर्नीरे शमसरसि रम्ये हि विहर ।
त्धरादेवीहंसीधवलरुचिपत्रं सुरुचिरम् ॥
अभीष्टं द्रागात्मोन्नतिगगनसंचारकरणे ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥११॥

इदं श्वेतच्छत्रं भरतवसुधाप्रेमविसरैः ।
पवित्रैः स्नातानां सुकृतिसुलभैस्तीर्थसलिलैः ॥
स्वविश्रंभाभिख्याचलमहितसम्राट्पदभृतां ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥१२॥

कलासिंधोरिंदोः किल धवलिमानं सुखकरं ।
मनोज्ञं चाकारं त्रिदशसरसः प्राप्य सरसात् ॥
इमामार्यक्षोणीं प्रणयभरतः प्रीणयति या ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥१३॥

प्रशांते विश्रांता शिरसि च महात्मामलयशः ।
प्रणाली साकारा किमु तदुरुसेवासुखजुषः ॥
धरादेव्या मंदस्मितमधुरकांतिस्तनुमती ।
सदा गांधी टोपी ज्वलतु हृदि पापीयसि नृणाम् ॥१४॥

स्वदेशे भक्तिं द्राग्जनयति चलां तां दृढयति ।
महात्मादिष्टे श्रीपदहितपथे प्रेरयति च ॥
जनानां सश्रद्धं सततपठनासक्तमनसा -
मसौ गांधीटोपीसरसलहरी गालवकृता ॥१५॥

॥ इति स्वराज्यरत्नाकरे द्वितीया गांधीटोपीलहरी संपूर्णा ॥

## (३) श्रीचक्रलहरी ।

रमाचक्रस्पर्धिस्तनयुगलविक्रीतहृदयः ।
सदावेधःशक्रप्रमुखसुरचक्रेण विनुतः ॥
अरक्षद्यो नक्राद्गजपतिमनुक्रोशजलधिः ।
प्रसन्नास्यश्चक्री भवभयमपक्रामयतु नः ॥१॥

महात्मारब्धेऽस्मिन्भृशमसहकाराख्यसमरे ।
शमाधारे क्रोधप्रसरविधुरे नीतिमधुरे ॥
महाशस्त्रं तीक्ष्णं क्षपितरिपुपक्षातुलबलं ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥२॥

समंतादश्रांतं भ्रमणकुतुकं संभ्रमवशात् ।
शिरांसि क्षिप्रं विभ्रमयति विदेशीयवणिजाम् ॥
स्वदेशे सावेगं स्थिरयति चलं वित्तनिचयं ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥ ३ ॥

स्वयं बत्धं पाशैरपि दृढतरैर्हंत परितः ।
कठोरंचासह्यं शिथिलयति दारिद्रयनिगडम् ॥
जनानां दीनानामिह जनितनानाविधसुखं ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥ ४ ॥

समुल्लासेनोद्यच्छ्रवणमधुरारावमुखरं ।
निजालंबे मंत्रान्समुपदिशतीव प्रणयतः ॥
सदानल्पालस्यप्रमुषितहृदां भारतभुवां ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥ ५ ॥

समारूढं पीठे प्रकटितसदर्थानि भजतां ।
पवित्राणि प्रेम्णा रुचिरतरसूत्राणि रचयत् ॥
पुराणं सर्वज्ञं मुनिमनुकरोतीव नितरां ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥ ६ ॥

विनाक्लेशाद् देशांतरधनिकपाशालिसदने ।
विसर्पत्कोशानां सुदृढगलपाशायितमलम् ॥
कदंबं तंतूनां सृजदबलजंतून्नतिकरं ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥ ७ ॥

विषीदल्लोकानां परहतबलानां कलियुगे ।
निजत्राणोपायं क्षपितदुरपायं शकलशः ॥
वितीर्णं स्वं शस्त्रं ननु करुणया कंसरिपुणा ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥ ८ ॥

धनाशाव्यासंगी श्रुतिसुखदसंगीतनिनदं ।
यदीयं संश्रुत्य स्फुटमुदितदुःखाश्रुकलुषः ॥
कलापो मत्तानां भवति हि विलापोन्मुखमुखो ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥९॥

समुत्सार्य स्वार्थं प्रशमसमरे विक्रमकृतां ।
समाश्लेषोद्रिक्तं विमलगुणमालाविलसितम् ॥
जयश्रीहस्ताब्जं खलु विरलरम्यांगुलिदलं ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥१०॥

धरादेवीपादारुणसरसिजे साधुविनत ।
श्चिरं स्मारं स्मारं सकलजनतामान्यतिलकम् ॥
विगर्जद्दारिद्र्यासुरविदलनायोद्यतकरे ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥११॥

महात्मानं गांधीमुनिमनुसरन्सर्वविनतं ॥
तदादिष्टं मंत्रं मनसि किल निध्याय सततम् ॥
समालंब्योत्साहं निजधरणिसेवारतमना ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥१२॥

सवेगं स्वालंबप्रगतिरथचक्रं दृढतरं ।
स्वदेशीये रम्ये सरसि विहरच्चक्रविहगम् ॥
अलातं वा चक्रं परधनिदुराशाद्रुमवने ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥१३॥

स्वभावाद्दुर्भावाकलनपरसेवानिरयतो ।
निजोत्धाराकांक्षास्फुरितनिखिलाक्षावलिभृताम् ॥
समाश्वासस्थानं श्लथयदवमानं परकृतं ।
गृहाणेदं चक्रं हरिकरलसच्चक्रमहितम् ॥१४॥

ददाति स्वालंबे सुमतिमविलंबेन पठतां ।
निरस्यत्यालस्यज्वरभरमवश्यं बलहरम् ॥
असच्छंकातंकं हरति परकैंकर्यसुलभं ।
चिरं जीयात्सेयं सुखजलझरी चक्रलहरी ॥ १५ ॥

॥ इति स्वराज्यरत्नाकरे तृतीया चक्रलहरी संपूर्णा ॥

## (४) बहिष्कारलहरी ।

अपारधनभारतो मुदितभारतोऽनारतं ।
नितांतमशनक्षतिव्यसनवेदनाभाजनम् ॥
अकारि बलहारिणा सुखविहारिणा येन हा ।
बहिष्कुरु विदेशभूवसनपापिनं तं सदा ॥ १ ॥

प्रसिद्धवसुधाभिधां भरतदेशसंधारिता - ।
मशेषवसुसंचयप्रलयतो निरर्थां परम् ॥
चिकीर्षति ददंश्च यो बत मुमूर्षतां हर्षतो ।
बहिष्कुरु विदेशभूवसनपापिनं तं सदा ॥ २ ॥

जनार्तिहरचातुरीधरतुरीह दूरीकृता ।
निकाममवमानिता प्रथितवेमभूमाऽमुना ॥
अभिंदि सदनिंदितोद्यमकुविंदवृंदोऽचिरात् ।
बहिष्कुरु विदेशभूवसनपापिनं तं सदा ॥ ३ ॥

अनल्पविकलं किलाकलयते कलाकौशलं ।
घनालसमृगादनायततमानने मानवान् ॥
विनिक्षिपति यो क्षणात्क्षपितदेहरक्षोद्यमो ॥
बहिष्कुरु विदेशभूवसनपापिनं तं सदा ॥ ४ ॥

निजप्रसवितुः सुधाधवलतूलजालस्य सन् ।
मुदा जननदायिनीं परमपावनीं योऽवनीम् ॥
विलुंठति विना ह्रियं भृशमकुंठितोरुश्रियं ।
बहिष्कुरु विदेशभूवसनपापिनं तं सदा ॥५॥

सुवर्णधरणीतिसुप्रथितहिंदुदेवीलस - ।
ल्ललाटभुवि लोपयन्सरसभाग्यरेखां च यः ॥
चिरंतनदरिद्रतास्फुरदभद्रमुद्रां ददौ ।
बहिष्कुरु विदेशभूवसनपापिनं तं सदा ॥६॥

समुन्नतितुषारभूधरशिरोविहारोल्लस - ।
त्प्रमोदभरमेदुरांतरमपातयद्धारतम् ॥
भयंकरदरीमुखे बत परावलंबाभिधे ।
बहिष्कुरु विदेशभूवसनपापिनं तं सदा ॥७॥

सुराव्यसनिसंस्कृतो हृतसुवर्णभारश्च यः ।
पवित्रतमसूत्रकृद्द्विजसमूहविच्छेदकः ॥
अनल्पगुरुतल्पगः किल विमुक्तभीकल्पनो ।
बहिष्कुरु विदेशभूवसनपापिनं तं सदा ॥८॥

असह्यपरतंत्रतानिगडमोक्षमार्गे शुभे ।
महत्तरविरोधकृत्प्रसृतमोहजालो हि यः ॥
वशीकृतजनांतरः क्षणिकबाह्यसौंदर्यतो ।
बहिष्कुरु विदेशभूवसनपापिनं तं सदा ॥९॥

प्रतारयति भारतं बहुलमार्दवोद्भासितो ।
दधंश्च धवलां द्युतिं वितनुते निराशातमः ॥
अतीतवचनावलीसरणिहानिहेतूद्यमो ।
बहिष्कुरु विदेशभूवसनपापिनं तं सदा ॥१०॥

कविना गालवेनेयं निर्मिता शर्मदायिनी ॥
परिष्कृतबहिष्कारलहरी स्यान्मुदे सताम् ॥ ११ ॥

॥ इति स्वराज्यरत्नाकरे चतुर्थी बहिष्कारलहरी संपूर्णा ॥

## (५) कारागृहलहरी.

जनिः कारागारे वसतिरपि वृंदावनभुवि ।
प्रकृत्या सम्मुग्धाः प्रियसहचरा गोपशिशवः ॥
तथापि त्रैलोक्योत्धरणनिपुणो यस्य महिमा ।
समां पायाद्देवो द्रुततरमपायान्मुरहरः ॥ १ ॥

इदं मुक्तिक्षेत्रं जटिलपरदास्याख्यनिरया ।
न्मुमुक्षूणां शांत्या भृशमसहयोगं विदधताम् ॥
सुदुष्प्राप्यं स्वार्थप्रणयदुरितालीढमनसां ।
विशेत्कारागारं विभयमविकारास्पदहृदा ॥ २ ॥

प्रवेशे यस्मिन्द्राक् निजधरणिसेवैकपरता - ।
प्रपूतस्वांतानामहमहमिकासत्वरपदाम् ॥
धराकारावासो विलयमुपयात्येव नचिरात् ।
विशेत्कारागारं विभयमविकारास्पदहृदा ॥ ३ ॥

स्वयं ध्वांतग्रस्तं सदपि च भृशं मानवततेः ।
स्वराज्याख्यं तेजः प्रखरमचिराद्दर्शयति च ॥
प्रगेयं संपूज्यं समभिलषणीयं च विमलं ।
विशेत्कारागारं विभयमविकारास्पदहृदा ॥ ४ ॥

जगन्नाथस्याहो परमपुरुषस्याखिलविभोः ।
स्वतंत्रस्य स्वेच्छाधृतमनुजवेषस्य च पुरा ॥
इदं जन्मस्थानं यदुकुलविधोःपावनतमं ।
विशेत्कारागारं विभयमविकारास्पदहृदा ॥५॥

विना मंतोर्लेशं विपुलकुटिलप्राभवमदा- ।
द्दुरीशेनाऽशंकं निगडितपदोः शांतमनसोः ॥
मुरारातेः पित्रोश्चिरनिवसतेर्मान्यमनिशं ।
विशेत्कारागारं विभयमविकारास्पदहृदा ॥६॥

शिवाजिः शैवांशो बहुलबहुलं शोचदवनी- ।
समुत्धारे बत्धादरसरणिशुत्धाचलमनाः ॥
यदीयात्संपर्कात्सुपटुरभवद्दास्यदलने ।
विशेत्कारागारं विभयमविकारास्पदहृदा ॥७॥

भृशं लोकैर्मान्यो धरणितिलको धीरतिलकः ।
त्रिवारं स्वच्छंदं स्वयमिह निविश्येतरनृणाम् ॥
प्रवेष्टुं पंथानं सुगममकरोद्यत्र नितरां ॥
विशेत्कारागारं विभयमविकारास्पदहृदा ॥८॥

अभीष्टा **निर्णीतिर्निर्गमसमयस्यामलतमा ।
रहस्यं गीतायाः सकलबुधमान्याशयमपि ॥
निवासाद्या यस्मिन्सुकृतितिलकात् प्रोदभवतां ।
विशेत्कारागारं विभयमविकारास्पदहृदा ॥९॥

---

** *वेदकालनिर्णय*

महात्माऽयं गांधी शुचिमतिकलत्रेण विलस- ।
च्चरित्रैर्वा पुत्रैः सममितरपुण्यस्मृतिजनैः ॥
यदातिथ्योल्लासात्किल परिजहासामरपुरं ।
विशेत्कारागारं विभयमविकारास्पदहृदा ॥१०॥

तपस्तेपे यस्मिन्नवहितहृदा भूरिसमयं ।
युवा दारागारेष्वपि सुदृढवैराग्यमहितः ॥
मुकुंदप्रेमार्थी सततमरविंदोऽपि मुनिराट् ।
विशेत्कारागारं विभयमविकारास्पदहृदा ॥११॥

कृती मोतीलालःसुमतिवरलालाजिरपि वा।
धृतीडयाल्लीबंधू क्षितिहितददासोऽपि विविशुः ॥
मुदा यस्मिन्गंगाधरचटुलकर्णाटमृगराट् ।
विशेत्कारागारं विभयमविकारास्पदहृदा ॥१२॥

निजां वृत्तिं द्राल्पविजहदधीरां दुततरं ।
वितन्वानः शूराश्रित सरणि सारानुसरणम् ॥
धराया घोरार्तिप्रकरपरिहाराय सहसा ।
विशेत्कारागारं विभयमविकारास्पदहृदा ॥१३॥

कारागृहीयलहरी विजरीहरीति ।
धीरात्मनां यदि मनः सफलः श्रमो मे ॥
केका विनोदयति चेत्धृदयानि यूना ।
माकांक्षितं किमपरं कृतिबर्हिणस्य ॥१४॥

॥इति स्वराज्यरत्नाकरे पंचमी कारागारलहरी संपूर्णा ॥

*॥ समाप्तोऽयं श्रीग्रंथो महात्मार्पितः ॥*

(क्रि.श.१९२१ तमे वर्षे लिखितः)

□□

# ९. जयसिंहराजं प्रति श्रीमच्छत्रपतेः शिवप्रभोः पत्रम्

लेखक : श्री शिवाजी छत्रपतिः
अनुवादक : गलगली रामाचार्यः

राजाधिराज! वरमाण्डलिकप्रणेतः
रम्यस्थितिप्रसव! भारतपुष्पवाट्याः ।
श्रीरामचन्द्रमहितांश! तव प्रभावात्
नूनं समुन्नतशिरा रजपूतजातिः ॥१॥

शौर्यश्रियैव तव बाबरवंशराज्य
लक्ष्मीरियं प्रबलतामयते नितान्तम् ।
भाग्यैः शुभैरनुपमैश्च तयाऽऽत्मनोऽल
मासादिता विजयहेतुसहायता ते ॥२॥

तारुण्यदीप्त! जयसिंह! कुशाग्रबुद्धे!
भाग्याभिवृद्ध! बल-वीर्यसमृद्धिशालिन् ।
आशीर्मयीं त्वमुरीकुरु मे प्रणाम
रूपां श्रिया निरुपमाद्य मदीयसेवाम् ॥३॥

पायात्सदैव स जगज्जनको भवन्तम्
न्यायस्य धर्मसहितस्य दिशेच्च मार्गम् ।
संश्रूयते किल मयाऽद्य मदाक्रमार्थं
जेतुं च दक्षिणदिशं स भवानुपेतः ॥४॥

हिन्दोर्जनस्य हृदये क्षणरक्तधारा
सेकेन रक्तमुखतां लषसेऽधिगन्तुम् ।
कृत्येन तेन वदनं तव कज्जलाभि-
लिप्तं भवेदिति न वेत्सि परं हि दुःखम् ॥५॥

यस्मात्तवैव जननावनिभारतेऽस्मिन्
धर्मे च पावनतमे महती विपत्तिः।
संजायते स्म बत ते ह्यनया च कुख्या
जानासि नैव तदिदं परमं विचित्रम् ॥६॥

अन्तर्दृशा यदि विचारयसि क्षणं त्वं
स्वारब्धकर्मविषये महनीयकीर्ते! ।
हस्तं निजं च कवचस्य पुरोविभागं
संपश्यसीह यदि तर्हि तवैव भायात् ॥७॥

तद्रक्तिमा कुशल! यस्य जनस्य रक्ता...
ज्जातस्सबान्धवगणो ह्यथवा परा स्यात्।
तद्रक्तवर्णपरिणाम वदान्यबुद्धे।
लोकद्वये किमरुणो भविताऽथ कृष्णः ॥८॥

धीर! स्वयं त्वमनधीनतयाऽऽगमिष्यो
जेतुं यदि प्रबलदक्षिणदेशमेनम्।
तर्ह्यास्तृतं समकरिष्यमहं मदीयं
नेत्रं च मस्तकमिदं तव पादमूले ॥९॥

भास्वत्तुरंगमनुसृत्य तवाहमेव
सैन्येन वीर! महता सहसाऽगमिष्यम्।
सर्वां च दक्षिणदिशं त्वदधीनभूतां
हन्ताऽकरिष्यमहमेव नितान्तहर्षात् ॥१०॥

औरंगजेबनृपतेर्यवनेश्वरस्य
धर्मद्रुहः सकलसाधुविहिंसकस्य ।
जाले स्वयं कपटकूटमये पतंस्त्व
मस्मानपीह बत्त पातयितुं समागाः ॥११॥

क्रीडामि केन विधिना भवता किलाहं
जानामि नाहमधुना वरवीर! किंचित् ।
किं संगतः शुभवता भवता भवानि
नास्त्येव तर्हि परमः पुरुषार्थलाभः ॥ १२ ॥

सेवां च वीरपुरुषो न समस्य कुर्यात्
सिंहः कदापि भजते न शृगालवृत्तिम्।
तीक्ष्णौ कृपाणपरशू यदि चोपयुंज्यां
भूयान्भवेदुभयपक्षगहिन्दुनाशः ॥ १३ ॥

संदूयते मम मनो नितरामनेन
त्यक्त्वार्थितं यवनशोणितसारपानम् ।
आत्मीयलोकरुधिरक्षरणाय कोशात्
निस्सारयेय करवालमहो करालम् ॥ १४ ॥

यद्याहवाय यवनाः स्वयमापतिष्यन्
अस्माकमद्य परमोच्चपराक्रमाणाम्।
युद्धाटवीमृगयुवृत्तिमुपाश्रितानां
नूनं शरव्यपदवीं सहसाऽभजिष्यन् ॥ १५ ॥

स्वार्थैकसाधनपरः परहिंसनार्थे
बद्धादरश्च करुणाकणिकाविहीनः ।
न्यायाच्च धर्मसुपथादवरंगजेबः
भ्रष्टो भृशं क्षितितले नरराक्षसोऽसौ ॥ १६ ॥

व्यर्थो यदापझुलखानपराक्रमोऽभूत्
शाहिस्तखानबलमप्यफलं यदासीत्।
योद्धुं भवानिह तदा प्रहितोऽस्ति तेन
सोढुं क्षमो नहि मदाक्रमणं स भीरुः ॥ १७ ॥

श्राम्येन्मिथः प्रहरणक्षतसिंहवृन्दं
गृध्रा लसन्तु वनराजपदं प्रपन्नाः ।
भूयान्न कोऽपि भुवि हिन्दुसमाजमध्ये ॥१८॥
वीरोऽवशिष्ट इति तस्य दृढा दुराशा

एतद्रहस्यकपटं पटुबुद्धिभाजा
न ज्ञायते कथमहो भवता विचित्रम् ।
तस्यैन्द्रजालिककलाकुशलप्रयोगाद् ॥१९॥
भ्रान्तो भवान् भृशमितीह मदीयतर्कः

लोके शुभाशुभफलान्यनुभूतवांस्त्वं
सम्मेलिता उपवने सुम-कण्टकाश्च ।
अस्माभिरेव सह हन्त! नियोत्स्यमानः ॥२०॥
च्छेत्ताऽसि हैन्दवशिरांसि न युक्तमेतत्

प्रौढिं परामुपगतोऽपि पराक्रमेण
तारुण्यबालिशविलासपरोऽद्य माभूः ।
साधीयसीं स्मर सदैव हि सादिनाम्ना ॥२१॥
साधूत्तमेन गदितां महितां च वाणीम्

'सर्वस्थलेषु तुरगो न हि चोदनीयः
कुर्यात्पलायनमपास्तफलः प्रसङ्गे"।
व्याघ्रो मृगादिषु निदर्शयति स्वभावं ॥२२॥
सिंहेन नैव कुरुते गृहयुद्धमेषः

यद्यस्ति वारि तव वीर करालखड्गे
स्याच्चेत्प्रधावदुरुवेगहये च शक्तिः ।
धर्मद्रुहां विशसनं त्विसलामधर्म ॥२३॥
निर्मूलनं कुरु तदेव तवोचितं स्यात्

दाराशिकोहनृपसूनुरुदारचेता
देशस्य राजपदवीमभजिष्यदस्य ।
तर्हि प्रजासहजसर्वसुखान्यलप्स्यत्
दुर्दैविहिन्दुजनता सुचिराय नूनम् ॥ २४ ॥

प्रातारयस्त्वमनघं जसवन्तसिहं
नैवाकरोस्त्वमुचितानुचितानुचिन्ताम् ।
गोमायुवृत्तिमनुविन्दसि नैव पूर्णं
त्वं युद्धसाहसमहो हरिणा करोषि ॥ २५ ॥

सेवां विधर्मिनृपतेरधिगत्य बन्धु
द्रोहाय हा श्रमजुषस्तव कोऽर्थलाभः ।
ऐश्वर्य-मान-परमोच्चपदाभिलाषः
संपत्स्यते सपदि ते मृगतृष्णिकैव ॥ २६ ॥

भूरिश्रमेण रमणीं रमणीयरूपां
संपाद्य तां समुपभोगकृते परस्मै ।
यो वा ददाति जडधीस्तव तद्विभेदः
देशान्विजित्य यवनार्पणकारिणः कः ॥ २७ ॥

नीचस्य तस्य नृपतेः कपटानुकम्पां
किं वा स्तवीषि जयसिंह! विमुग्धचेताः ।
जुंझारसिंहकृतसर्वसहायतायाः
किंवा फलं समभवत्त्वमवैषि सर्वम् ॥ २८ ॥

श्रीच्छत्रसालनृपतिं परितः कुमारम्
उद्भाविताश्च विपदः खलशेखरेण ।
अन्येषु हिन्दुषु तथा महतीं विपत्तिं
संप्रापितां किमु न वेत्ति भवान्प्रसिद्धाम् ॥ २९ ॥

जानाम्यहं तदपि यद्भवता विवाह
सम्बंध एव घटितः कुटिलेन तेन।
तस्माद्विनाशितमहो भवताऽद्य विश्व
विख्यातमात्मकुलगौरवमेव हन्त! ॥ ३० ॥

उद्वाहबन्धनमिदं नरराक्षसस्य
तुच्छं तथा रुधिरबंधनतो न गाढम्।
आत्मेष्टसाधनकृते जनकस्य चासून्
नाजीगणद्रुधिरमेव सहोदरस्य ॥ ३१ ॥

त्वं राजभक्तिमिषतो यदि दोषशून्य
मात्मानमत्र हि समर्थयसि प्रकामम्।
तर्हि स्मर क्षणमये! तव कीदृगासीद्
वृत्तिर्बत क्षितिपतौ च शहाजहाने ॥ ३२ ॥

देवेन बुद्धिकणिका यदि ते प्रदत्ता
संकत्थसे निजपराक्रमपौरुषे च॥
तर्ह्यात्मजन्मधरणीबहुतापतप्तं
खड्गं कुरुष्व परिपीडितबाष्पसिक्तम् ॥ ३३ ॥

नायं मिथः समुचितः समयो नियोद्धुं
वीरेषु हिन्दुषु महान्कृतिभार आस्ते।
देशे धने च विबुधालय - देवमूर्ति
बालेषु दुस्सहतमा विपदोऽधुना नः ॥ ३४ ॥

कंचिद्यदीह समयं प्रचलेत्कुकृत्य
मेषां हि हिन्दुकुललक्ष्म च नैव शिष्यात्।
आश्चर्यमेतदखिलं विपुलं च देशं
यन्मुष्टिमेययवना बत शासतीमम् ॥ ३५ ॥

स्वीयार्थसाधनमिदं न महत्त्वहेतु
रेवं विमर्शमतिरस्ति तदाऽभिपश्य।
अस्मान्प्रतारयति कीदृगसौ दुरात्मा
वक्त्रे च दर्शयति नैकविधान्विकारान् ॥ ३६ ॥

अस्माकमेव दृढशृङ्खलयाऽस्मदीयान्
बध्नाति हन्त चरणांश्छलबुद्धिरेषः।
खड्गैः छिनत्ति निशितैः शतशोऽस्मदीयै
रस्माकमेव च शिरांसि दुराशयेन ॥ ३८ ॥

तस्माद्वयं सपदि हिन्दुजनस्य हिन्दु
धर्मस्य हिन्दुविषयस्य च रक्षणार्थम्।
काष्ठां परां प्रयतनस्य सहैकमत्या
वीरेश! सांप्रतमये करवाम धैर्यात् ॥ ३९ ॥

कार्यः प्रयत्नगरिमा ननु निश्चितार्थै
रस्माभिरद्य दृढयुक्तिचयोऽपि योज्यः।
देशस्य रक्षणकृते सकलानुपायान्
आवश्यकांश्च बहुधा विदधीत वीरः ॥ ४० ॥

उल्लासनीयमधुना वरवीरवृत्ति
शाणेन खड्गपटलं यतनैश्च दैवम्।
तुर्काधिपाय कपटे पटवे प्रदेयं
तुर्कीययुक्तिनिचयैरुचितोत्तरं च ॥ ४१ ॥

संगच्छते यदि भवान् जसवन्तसिंह
वीरेण तत्कपटिराजविपाटनोत्कः।
एकीभवेश्च रणकोविदराजसिंह
राणेन तर्हि महदेव भवेद्धि कार्यम् ॥ ४२ ॥

युध्यध्वमाशु रभसात्सकलासु दिक्षु
विच्छिन्त दुष्टभुजगस्य शिरः शिलाभिः।
शश्वत्तदा स विमृशेत्स्वकृतेर्विपाकं
स्याद्दक्षिणे कपटजालसृतौ न शक्तः ॥४३॥

वीरैर्युतःक्रकचवद्दृढभल्लहस्तैः
र्निःपातयाम्यहमिह प्रसभं समूलम्।
नूनं वियुग्जयपुरादिलशाहभूपं
तं गोलकुण्डसुलतानकुतुब्शहं च ॥४४॥

धाराधरैरिव रसद्भिरिहासिधारा
तीर्थेषु पापकलुषान्यवनान्भटौघैः।
संस्नापयामि रभसादिसलामधर्म
लक्ष्माणि दक्षिणदिशि क्षपयामि मङ्क्षु ॥४५॥

कर्तव्यदक्ष – वरभल्लविराजिवीरै –
रुल्लोलदूर्मिपटला च गभीरघोषा।
स्रोतस्विनीव ननु दक्षिणशैलमध्यात्
संप्राप्नुयां समतमोत्तरदेशभूमिम् ॥४६॥

शीघ्रं समेत्य तनुयां भवदीयसेवां
प्रक्ष्याम्यरिं किल भवत्सहकारमूल्यम्।
युध्यामहे चतृसृषूत दिशासु सर्वे
संकोचयाम समरांगणमेव तस्य ॥४७॥

सेनाविलोललहरीनिकरेण दिल्लीं
संप्लावयाम रिपुजीर्यदुदग्रहर्म्यम्।
सिंहासने (औरंग) व्यपगते हि विनष्ठशोभं (जेब)
औरंगजेब इति नाम वृथैव भूयात् ॥४८॥

लीनो भवेत् क्वचिदमुष्य विहिंस्रखड्गः
उत्सादितं कपटजालमपि क्षणे स्यात्
शुद्धां च शोणितनदीं भुवि वाहयाम
तस्यां च नाकगपितॄनपि तर्पयाम ॥ ४९ ॥

न्यायप्रियस्य च जगत्सवितुः प्रसादात्
भूमेरधः खलरिपोर्विदधाम धाम।
कार्यं त्विदं न कठिनं हृदयाक्षिहस्ते
सम्मेलिते सुहृदुदार मिथोऽनुकूलम् ॥ ५० ॥

चेतोद्वयं हि मिलितं गिरिमत्युदग्रं
द्राक्पाटयेज्जलनिधिं नु विशोषयेच्च।
वक्तव्यमस्ति बहु मे विषये किलाऽस्मिन्
तल्लेखनं समुचितं मम नैव पत्रे ॥ ५१ ॥

आवामुभौ च मिलितौ बहु संवदावे-
तीच्छामि यच्छ्रमशुचौ न वृथा भवेताम्
वांछास्ति चेत्तव समक्षमुपेत्य वक्ष्ये
श्रोष्यामि च त्वदुदितं प्रणयेन सर्वम् ॥ ५२ ॥

वार्तावधूमनवगुण्ठितचारुवक्त्रा
मावां रहो नु करवाव चिराय बन्धू।
तस्याः कचे जटिलतामपसारयिष्ये
सौहार्दतः सपदि कंकतिकासहायः ॥ ५३ ॥

यत्नस्य साधु करवाम परां नु काष्ठा-
मुन्मत्तरक्षसि तथा युनजाव मन्त्रम्।
अन्विष्य सिद्धिपथमत्र तथाश्वमुत्र
किंचेह नाम करवाम समुज्ज्वलं नौ ॥ ५४ ॥

खड्गं शपामि तुरगं च शपामि देशं
धर्मं शपामि मम संगमनेन नूनम्।
नैवापतेत्त्वयि विपत्तिलवोऽपि, माभू
राशंकितोऽफझुलखानवधप्रसंगात् ॥५५॥

मन्मारणाय हबशीकुलसादिलोकैः
सार्धद्विषट्शतमितैः स समागतोऽत्र।
न प्राहरिष्यमहमेव पुरा हि तस्मिन्
कस्तेऽलिखिष्यदिदमाशयवेदि पत्रम् ॥५६॥

नाहं बिभेमि भवतो, मम नासि वैरी
वीर! स्वयं हि जयसिंह! कुतोऽपि हेतोः।
यद्युत्तरं प्रहिणुया उचितं तदोप-
स्थास्यामि ते निशि निरस्तभयोऽहमेकः ॥५७॥

शाहिस्तखानरिपुकंचुकपेशलब्ध
पत्रं रहस्यमयमेष निदर्शयेयम्।
सिंचेयमक्षियुगले तव संशयाम्भः
दूरीभवेत्तव ततः सुखमोहनिद्रा ॥५८॥

स्वप्नस्थ वास्तवफलं तव दर्शयिष्ये
प्रक्ष्याम्यहं सपदि वीर! तदुत्तरं त्वाम्।
भूयान्मनोमतमिदं यदि ते न पत्रं
सैन्यं भवेत्तव मदीयकृपाणलक्ष्यम् ॥५९॥

संच्छादयेन्निजमुखं भगवान्दिनेशः
सन्ध्यापटांचलवशादवशो यदा श्वः।
खड्गस्तदा मम निरावरणो हि भूयात्
स्वस्त्यस्तु विज्ञवर! ते रजपूतवीर ॥६०॥

(लघुकाव्यमिदं श्रीशिवच्छत्रपतिना छन्दोमय्या यवनभाषया लिखितस्य पत्रस्याक्षरशोऽनुवादरूपम्। नात्र कवेः कोऽप्युत्प्रेक्षादेरंशः। न वा स्वकल्पना-शक्तेरल्पोऽप्यवकाशः) ❑❑

# १०. मुनि-मेनकासंवादः

**मुनिर्विश्वामित्रः**
का त्वं कुतोऽसि सहसाऽऽयाता चेतः कुरङ्गनयनेऽत्र।
सरसाप्सरोवगाहप्रसितस्वान्तस्य मे न काऽपि त्वम् ॥१॥

मेनका - सरसाप्सरोवराहं सुखमवगाह्यैव मेनकाऽप्यस्मि ॥
प्राप्ता मुनीश भवतस्सहसा चेतःकुरङ्गनयनाय ॥२॥

मुनि - मदनातुरा भवालं माक्षिप कुसुमेषु पावकं सुभगे॥
मेनका - मदनातुराऽस्मि नितरां माऽऽक्षिप कुसुमेषुपावकं शमय ॥३॥

मु - नलिनाक्षि विप्रकृष्टा भव भवरोषं न यन्तुमीशेऽहम् ॥
मे - स्पृहयामि विप्र कृष्टा भवितुं रोषं नयन्तु मे भावाः ॥४॥

मु - सुरताभिमानमधुना मानिनि मोक्तुं न किंचिदुचितं ते ॥
मे - सुरताभिमान एष प्रागुद्बुद्धो भवन्तमुद्वीक्ष्य ॥५॥

मु - ललने विलासमहिमा कान्तारहिताय रोचते नायम् ॥
मे - अत एव मोक्तुमुचितं कान्ताराहित्यसंभवं दुःखम् ॥६॥

मु - कुशले तवालमनया वाचा श्लेषेषु नैपुणं जाने ॥
मे - चिरवांछितं तदेव द्रुततरमाविष्कुरु प्रसन्नो मे ॥७॥

मु - करभोरु भोगशयनं सुमनोविततं स्मरामि तन्वङ्गि ॥
मे - उपकल्पयामि तदिदं भगवन्भवतो विलासकलनार्थं ॥८॥

मु - रुचिरालकाधिवासां धावति चेतो ममाद्य शिवमूर्तिम् ॥
मे - इयमस्मिनाथ दासी सविधे संदेशकाङ्क्षिणी प्रेम्णा ॥९॥

□□

# ११. देवमन्दिराक्रन्दनम्

अयि देव जगत्पते रमारमणागण्यगुणाकर प्रभो ॥
क्व नु यास्यसि मां विहाय हा मम का वा गतिरत्र भूतले ॥ १ ॥

सहसा बत मां विसर्जयेर्नहि पश्यामि ममागसो लवम् ॥
अनिमित्तमपास्तसौहृदा न भवन्त्येव भवादृशा विभो ॥ २ ॥

तव सन्निधिभाग्यवञ्चितो मम गर्भालय एष सांप्रतम् ॥
असुभीरहिता यथा तनुर्नितरां द्राग्भजतेऽशुभात्मताम् ॥ ३ ॥

करुणामृदुलं तवान्तरं दृषदां सन्निधितः कठोरताम् ॥
अभजन्नहि चित्रमत्र यद्गुण-दोषास्सहवाससंभवाः ॥ ४ ॥

त्वयि यास्यति मन्दिरान्तरं चिरसान्निध्यहरेरदूषितम् ॥
सहसा प्रविशन्ति मामथो परिनृत्यन्ति पिशाचिकागणाः ॥ ५ ॥

अपयातवति त्वयीश्वरे विविधो वैभवतोऽर्चनाविधिः ॥
विफलःकुरुते नु कां श्रियं कुणपस्येव हि मण्डनक्रिया ॥ ६ ॥

मणिदीपगणप्रभाशतैरपि विष्वक्सततं विसर्पिभिः ॥
न मनागपि शोभते सभागृहमुल्काकुलितश्मशानवत् ॥ ७ ॥

सकलाघविमर्दिनां क्षणान्महतां पादरजोऽतिपावितम् ॥
अहमद्य विदूष्यतामगां श्वपचानां चरणावघट्टनैः ॥ ८ ॥

उदरम्भरिभूसुरब्रुवैर्विबुधम्मन्यमनोभिरादृतः ॥
मधुरस्वरसंयुतोऽपि मे श्रुतिघोषो नहि तोषदो भवेत् ॥ ९ ॥

समये समये परिस्फुरन्निह नानाविधवाद्यसंभवः ॥
ध्वनिरेष विभाति मेऽशिवो नितरामद्य शिवारुतं यथा ॥ १० ॥

मम पावनताभिरक्षणे क्षितिपालैर्ननु वाहितं पुरा ॥
बहुशो रुधिरापगाशतं तदिदं निष्फलतामयात्क्षणात् ॥ ११ ॥

समदर्शि महत्युदारता वसुजीवैश्च वणिग्धुरन्धरैः ॥
तव सन्निधिगोपनाय या तदियं हा वितथीकृताऽधुना ॥ १२ ॥

तपसा कठिणेन कर्शितैर्विषयाशाभिरदूषिताशयैः ॥
बहुधा वसुधासुधाशनैर्निहितं तन्निहतं महन्महः ॥ १३ ॥

मम सांप्रतिकीमिमां दशां बहुशोच्यामभिवीक्ष्य दारुणाम् ॥
सुरलोकनिवासिनोऽपि ते गलदस्रैस्स्नपयन्ति हन्त माम् ॥ १४ ॥

निजपुण्यभरार्जितं पुरा मयि पावित्र्यमपारमाहितम् ॥
क्व नु दर्शय संप्रतीति ते यदि पृच्छन्ति किमुत्तरं ब्रुवै ॥ १५ ॥

शुचिता किल यन्निरीक्षणात्तनुसंस्पृष्टसमीरसंगतः ॥
विलिनाति निमेषमात्रतस्त इमे हन्त विशन्ति निर्भयम् ॥ १६ ॥

मनुना तव सूनुजन्मना सकलज्ञेन हि दिव्यचक्षुषा ॥
रचितं स्मृतिशास्त्रमुत्तमं बत मत्तैःक्रियतेऽद्य भस्मसात् ॥ १७ ॥

त्वयि सन्निहिते सुरव्रजोऽप्ययि संभावयति स्म मामलम् ॥
अधुनाऽसुरनग्ननर्तनोन्मदलीलागृहतामयासिषम् ॥ १८ ॥

न दृशाऽपि विलोकयन्ति मां यदि सन्तो निजधर्मजीविताः ॥
पदपांसुपवित्रताप्रथा भृशमस्तं गमितेति वेदना ॥ १९ ॥

विभवस्स गतस्समूर्जितो महती सा महती हताऽधुना ॥
जनितामरलोकमत्सरा मम शोभा स्मरणीयतामगात् ॥ २० ॥



# १२. सुभाषितानि

प्रासादे विधुबिम्बचुम्बिनि लसद्वासोभिराशोभिता
मृष्टान्नैः परिपुष्टलोलदुदरा नन्दन्ति मन्दास्सदा ॥
वस्तुं नो वसनं न चैवमुषितुं जीर्णेतरन्मन्दिरं
दैवादद्य विपश्चितां समशितुं नान्नं धरित्रीतले ॥ १ ॥

धर्मं निन्दसि नो सुकर्म कुरुषे मर्माणि कृन्तद्वचो ।
ब्रूषेऽनर्थवशान्मदोर्मिजडधीः पापैर्मुहुर्मुह्यसि ॥
हर्म्ये वासवतोऽङ्गचर्म विलसद्वर्मावृतं तन्वतो
भर्माभूषणतो न शर्म भवतो देवद्रुहः क्वास्त्यहो ॥ २ ॥

यस्मिन्विष्णुपदे सुराध्वनि नभःपीठे विराजन्पुराऽ
म्भोदश्चातकपक्षपातविधुरो विश्वं महौदार्यतः ॥
आसारैस्समतर्पयच्छरदि हा मोघात्ममेघाभिध
श्शुष्काडम्बर-वर्णमात्ररुचिरस्तस्मिन्वृथा गर्जति ॥ ३ ॥

शास्त्रज्ञोऽपि भृशं पुराणमननोऽप्यर्चार्चकोऽप्यन्वहं
संन्निन्दा - कुवचोभिरेति परमानन्दं न चित्रं न्विदम् ॥
कामं पीतपया अथाशितदधिद्रप्साज्यपूर्णोदरो
मार्जारो ननु मूषकामिषसमास्वादैकतृप्तान्तरः ॥ ४ ॥

धूर्तोऽघं कारयित्वाऽन्यै स्स्वयं निर्लिप्तवद्भवेत् ॥
मृगयुर्मृगसंघातं घातयित्वा श्वभि र्यथा ॥ ५ ॥

विज्ञानोज्ज्वलतेजसाऽऽन्तरतमोनिस्सारिणा भासुरै
र्हंसैरेव हि राजतेऽत्र परमैर्वेदान्तसिंहासनम् ॥
नीर - क्षीर विवेक कर्मकलनाकौशल्यकीर्तिस्फुर
द्धंसैरेव दधाति मानससरश्शोभां किलान्यादृशम् ॥ ६ ॥

आत्मीयैः प्रवसन्ति मारुतजवस्वाधीनयाना महा
तीर्थे मज्जनमाचरन्ति बहवस्संभोजयन्ते स्वकान् ॥
सर्वैरेव धनादृतैर्बुधवरैस्तीर्थाप्लुतश्शास्त्रस -
त्तीर्थे वादिजनं निमज्जयति यस्सह्येव पीठाधिपः ॥७॥

मान्यास्साधुजनास्त एव जगति क्षान्त्या च सान्त्वोक्तिभि.
स्वेनैवानतमस्तकान्विदधते ये सापराधानपि ॥
छेत्तृनप्यभितोषयन्ति तरवश्च्छायाफलादिप्रदा
गावो बद्धपदा अपीह दुहते साधुस्वभावो ह्ययम् ॥८॥

कान्ते हन्त निरन्तरं गुरुमठे वेदान्तमभ्यस्यति
कान्ताऽत्यन्तपरिस्फुरत्तरुणिमा तान्ता मनोजन्मना ॥
आहारे शयने च भोगकरणे वैराग्यमालम्बते
शास्त्रेषु श्रुतकार्यकारणविधेः कोऽयं विचित्रः क्रमः ॥९॥

आयाता प्रतिपच्चिराभिलषितेत्यन्तः प्रमोदस्फुर
द्धासोल्लासमनोहराम्बुजमुखी क्षौमं वसाना नवम् ॥
यावत्तल्पमकल्पयत्तदवधौ निद्रावशे वल्लभे
यां बालाऽनुभवत्यसह्यकुदशां सा केन वा वर्ण्यते ॥१०॥

कदा वा कान्तो मे ज्वलदनलचुल्ली परिसरे
निषण्णः फूत्कारप्रसृतभसितैर्धूसरमुखः ॥
विधत्ते पाकं नस्सुकृतपरिपाकेन सुदृशा-
मिति स्वातंत्र्येच्छुर्हृदि कलयते शिक्षितवधूः ॥११॥

सीमन्तास्तु शिरस्सु वक्रगतयो जाताः कुरङ्गीदृशां
दोर्मूले कृतविश्रमा नवनवाः खर्वीकृताः कञ्चुकाः ॥
वृद्धानां वचनान्यरण्यरुदितं नैवातिथीनां कथा
कष्टं कालकृतां परिस्थितिमिमामापुर्नवीनाङ्गनाः ॥१२॥

जातं भोगिदिनं वियोगिनि धवे भोगीशदंशार्तिदं
पुष्पेषोश्शरपञ्जरेण मम हा भीष्मा च भीष्माष्टमी ॥
किञ्चेयं शिवरात्रिरेवमशिवां रात्रिं विधत्तेऽद्य मे
किं कुर्वे सखि पावनोऽप्यविषहो माघो ममाघोदयात् ॥ १३ ॥

सद्वंशजाताऽपि पुराणपुंसा
पाणौ गृहीता सरलाऽपि जात्या ॥
गोपाङ्गनानां व्यभिचारकर्म-
ण्याद्योपदेष्ट्री मुरली विचित्रम् ॥ १४ ॥

निन्दन्ति लोकाः किल कालकूटं
तेनैव शूली त्वजरामरोऽभूत् ॥
वियोगिनी प्राणहरं शशाङ्कं
सुधांशुमाहुर्बत को विवेकः ॥ १५ ॥

**प्रहेलिका**
वर्णेनाद्येन हीनः कथयति तरणिं, लुप्तवर्णः प्रसिद्धिं
हव्यं मध्येन शून्यं निगदति गिरिशं चान्त्यवर्णोज्झितश्च ॥
लक्ष्मीशं लुप्तवर्णः वदति च पतगं व्युत्क्रमं पठ्यमानः
पूर्णश्शब्दो वियोगं कथयत कुशलाः कोऽस्ति शब्दस्त्रिवर्णः ॥ १६ ॥
(हरवि)

कन्या मातृपदं गता अपि परं धन्यास्सुखं शेरते
तज्जाताः शिशवः कृतान्तवदनातिथ्याय धावन्त्यहो ॥
तासां यौवनभोगसौख्यविरहात्क्लिश्यन्ति चान्तर्धवाः
प्रौढोद्वाहविपाकदिव्यमहिमाप्रौढिस्समुज्जृम्भते ॥ १७ ॥

वसुप्रदायी बत नीरदोऽभू
त्तस्यापहारी किल लोकबन्धुः ॥
एतद्विचार्यैव धनापहारी
ददाति नूनं कृपणो न वित्तम् ॥ १८ ॥

इन्द्रो गौतमभामिनीमपि सतीं कामी दधर्ष छला-
च्चन्द्रो गीष्पतिकामिनीं च बुभुजे स्वस्यानुकूलां मुदा ॥
सोमात्सोऽधिक पापवानपि वृषा स्पृष्टो न 'दुर्यक्ष्मण
"देवो दुर्बलघातको" वच इदं सत्यं त्रिलोकेष्वपि ॥१९॥

व्यालोलैर्मरुताऽलकैस्सुरुचिरं वक्त्राम्बुजं बिभ्रती
वक्षोभागमलक्षयन्त्यवसनं मुग्धां क्षिपन्ती दृशम् ॥
वेगात्पादयुगेन चक्रयुगलं संचोदयन्ती मुदा
त्वं वीरायितकौशलं स्फुटयसे कॉलेजबालेऽधुना ॥२०॥

❑❑

# १३. अन्योक्तयः

वासन्तस्समयस्स एव रुचिरा सैवाऽद्य चारामभू-
श्चूतोऽयं फलितस्स एव सुमनस्संपत्समृद्धिश्च सा ॥
श्रूयन्ते बत नाद्य कोकिल कलारावाः पुरेव क्वचि-
त्काकोलूककुलानि भीकररवैरुद्वेजयन्त्युद्धताः ॥ १ ॥

यस्मिंश्चूतवने नवीनकलिका आस्वाद्य पुंस्कोकिलाः
कीरास्स्वादुफलाशिनः कलरवा भृङ्गा मरन्दोन्मदाः
स्वच्छन्दं व्यहरन्नमन्दमुदितास्तत्रैव संत्रासका
ध्वाङ्क्षा रुक्षरवाश्शिवाश्शिव शिव क्रीडन्ति हन्ताशिवाः ॥ २ ॥

स्फूर्जच्छ्रीमदमत्त वारणपते भृङ्गान्गुणान्गायत-
स्स्वेनानार्जितमीशदत्तमपि ते दानोदकं पास्यतः ॥
शूर्पाभश्रुतितो निवारयसि चेत्पुष्पे रमन्ते हि ते
त्वं तीक्ष्णाङ्कुशदीर्णरुग्णकरटस्तीव्रां भजेर्वेदनाम् ॥ ३ ॥

पुष्पत्वाव्यभिचारि सौरभमिति भ्रातर्भ्रमन्संभ्रमा -
धत्तूरं भ्रमराधिप भ्रमभरादभ्येत्य नैराश्यतः ॥
मा खिद्यस्व तवाविवेकजफलं भुञ्जन्सुलब्धाञ्जनो
निम्बद्रोः फलमाधुरीमभिलषन्को वा कृतार्थो भवेत् ॥ ४ ॥

भूयस्सु सत्स्वपि गुणेषु मनोहरेषु
दोषी स्वयं मृगयते परदोषमेव ॥
नानासुगन्धकुसुमाञ्चितकेशपाशे
कीशश्चिनोति ननु कृष्णमुखो हि यूकाम् ॥ ५ ॥

भ्रामं भ्रामममये वनाद्वनमहो वृक्षाच्च वृक्षं पुनः
पुष्पात्पुष्पमटन्श्रमात्समचिनोरेकत्र यत्त्वं मधु ॥
नाश्ना नैव परोपकारमकरोस्तस्मिन्बलादाहृते
नीचैर्मुग्धमधुव्रतानुशयतः किं वा फलं तेऽधुना ॥६॥

शिवलिङ्गशीर्षगत वृश्चिकोन्मदा –
द्दशतोऽपि नैव हि पदाहतिर्भवेत् ॥
इति दृष्य माऽपसरणे मनागित
स्सुपदाहतिं कलय चेतसा दृढम् ॥७॥

पुण्यं विष्णुपदं श्रितोऽसि महितः प्रोच्चैःपदे जृम्भसे
न त्वं मुञ्चसि चञ्चलां त्यजसि नो कृष्णात्मतां नीरद ॥
आवर्षन्करकान्निपीडयसि रे लोकाननागस्विनो
गर्जन्भीषयसे च दुष्परिहरो नैजस्वभावो यतः ॥८॥

त्वन्नीरे निवसन्तु नाम जलधे नक्रादियादोगणा
मुक्तामुक्तविशुष्कशुक्तिनिवहास्सन्तु क्षमाध्रोन्नताः ॥
रत्नैरेव निजप्रभाविलसितश्रीपद्मरागादिभि –
र्भूभृन्मौलिविराजिभिस्त्वमयसे रत्नाकरत्वप्रथाम् ॥९॥

मण्डूका मण्डनं नैव सरसो विरसा रवैः ॥
राजते राजहंसानां राजिभिस्सरसी परम् ॥१०॥

धाराभिःकरुणाकरः करिकराकाराभिरम्भोधरो
नित्यं प्लावयते हि विश्वजनतामाश्वासयत्याकुलाम् ॥
धातश्चातकपोतंके कलयसे किं घातकं पातकं
द्वित्रा एव पतन्ति हन्त पृषतः कामं पिपासोर्मुखे ॥११॥

धन्योऽसि केकिकुलभूषण मञ्जुकेका-
रावैर्मुदा त्वमिह गायसि लास्यलीलः ॥
संतर्पयन्तमखिलामचलां वसूनां
वृष्ट्याऽम्बुवाहमनपेक्षकृतोपकारम् ॥ १२ ॥

कामं वर्ष पयोद नर्तय मुहुर्मोदान्मयूरव्रजं
गाम्भीर्येण च गर्ज सर्वधरणीं नीरैरलं प्लावय ॥
द्रागुल्लासय कन्दलीः कलय च क्षोणीं शिलीन्ध्रोद्गमां
नोन्मार्ष्टुं प्रभवस्यथापि चपलासंसर्गजन्यायशः ॥ १३ ॥

काशीं यासि गयामुपैषि न कुरुक्षेत्रं तथा मुञ्चसिं
काञ्चीं संचिनुषे गतेन मधुरामाधुर्यमप्यश्नुषे ॥
धूमस्यन्दन नो तथाऽपि भवता कालुष्यमुन्मुच्यते
प्रायस्स्वप्रकृतिं न मुञ्चति खलस्सत्साहचर्यादपि ॥ १४ ॥

नीहारैः परिदूषितं बत सरस्स्वच्छोदकं मानसं
नास्मद्वास इहोचितस्त्विति सखे खेदं वृथा मा कृथाः ॥
हंसोत्तंस तवार्हणाय सततं सन्त्येव बद्धादराः
कासारा हि सहस्रशस्सरसिजस्निग्धास्तुषारोज्झिताः ॥ १५ ॥

कादम्बा नलिनीमृणालकवलोत्कण्ठास्सुकुण्ठादरा
मन्दास्ते पिचुमन्दलुब्धमनसः काका न चाकाङ्क्षिणः ॥
धत्से किंन्नु रसालमञ्जरि ततस्त्वस्मिन्नवज्ञां मुधा
सारङ्गा मधुरस्वरेण महतीं गायन्ति ते कोकिलाः ॥ १६ ॥

सौगन्ध्येन दिगन्तरं प्रसृमरोदारेण संतर्पिणीं
फुल्लाक्षीस्तनहेमशैलविलसद्वल्लीमतल्लीश्रियम् ॥
कस्तूरीं यदि कर्दमप्रिय किरे नाघ्रासि सावर्ण्यजा-
सूयादग्धमना मनागपि ततस्तस्या न काऽपि क्षतिः ॥ १७ ॥

मनोज्ञव्याहारी जनहृदयहारी शुकशिशुः
निबद्धस्सौवर्णं नवमधिवसन्पञ्जरमयम् ॥
चिरं स्मारं स्मारं वनतरुविहारं लुठति हा
निराहारोऽस्तोकाविषहतरशोकाकुलमनाः ॥ १८ ॥

देवालयस्य शिखरे परिनृत्यसि त्वं
तीर्थोदकं स्पृशसि वायस रे तथाऽपि ॥
नैवार्हता भुवि शुकस्य यथा तथा ते
मान्या गुणप्रसविनी ननु जातिरेव ॥ १९ ॥

रे रे गजेन्द्र विनिमील्य दृशौ निकामं
माभूर्मदोद्धततया विपिनप्रवासी ॥
रम्येक्षुखण्डपिहितावटपातनाय
विष्वक्चरन्ति कपटे कुशलाः किराताः ॥ २० ॥

स्वैरं संचरणक्षमाऽस्यनलसा सर्वेषु देशेष्वहो
सर्वज्ञेव निवेदयस्यविकलं वार्ताश्च दूरस्थिताः ॥
श्लाघ्या ते महती तथाऽपि नितरां हेयैव हे पत्रिके
नो वा दूषयितुं बिभेषि न मनाग्जिह्रेषि साधून्मुधा ॥ २१ ॥

वारंवारमये निकृन्तनवशात् पुंसां विषण्णान्तरो
विस्रम्भेण सुवासिनीषु नितरां निश्चिन्त आसीश्चिरात् ॥
त्वां शोभातिशयाय कुन्तल मुदा ता एव कृन्तन्त्यहो
विश्वस्तो न च वञ्चितोऽस्ति भुवने कश्चञ्चलाक्ष्या पुमान् ॥ २२ ॥

□□

# १४. दुश्शासन - द्रौपदीसंवादः

मीनाक्षो महनीयभाग्य कलितश्लाध्योऽऽस्म्यहं मानवै
भीमो मे रिपुरर्जुनश्च विषमं मां विद्धि भर्त्रे तव ॥
प्रीतिर्मेकमनेष्वमेयविभवो मारावहेली त्वहं
कस्मान्मां न वृणोषि, वासु शठ रे मेदंपुनस्त्वं वद ॥१॥

□□

# १५. श्रीमदश्वधाटी काव्यम्

श्रीकण्ठसंस्तुतमभीकं श्रियो लवलिपाकं जयच्छुचितम
श्रीकम्रहासमथुराकन्यकादृगवलोकं यदूत्तमशिशुम् ॥
साकं व्रजे मृगदृशा कञ्जमुग्धकरया कन्दुकोत्सवरतं
स्तोकं स्तवीमि शिर आकम्पकोल्लसितमाकन्दसौरभपदैः ॥१॥

राकानिशाकरसमाकाररम्यवदनाकामिनीति कुमते
नैका वहन्हृदि वृथाकामनाःकिमिति शोकाकुलो भवसि रे ॥
नाकादिदिव्यतमलोकाधिपालनुतमेकान्ततोऽघहतये
श्रीकान्तमिन्दुरुचिनीकाशहासमुखमाकारयस्व हृदये ॥२॥

भृङ्गालकां वनकुरङ्गार्भकायतदृशं गाढयौवनभरां
किं गाहसे भृशमनङ्गातुरस्सरसश्रृङ्गारमुग्धहृदयः ॥
अङ्गारभासमभिषङ्गावलेपविधुरं गायमानकमला-
पाङ्गावलोकिततुरङ्गाननं दुरितभङ्गाय संश्रय विभुम् ॥३॥

आखादितैस्त्वमुदराखातपूर्तिमनु वैखानसीयसि मृषा
शाखामृगीयसि विशाखापुरे खलु विशाखादिभान्गणयसि ॥
भूखादिकेषु विधिलेखान्तरालगतरेखां प्रमार्जयति को
लेखाधिपं निगमशाखानुतं हिममयूखाननं स्मर हरिम् ॥४॥

आघार्मबिन्दुगणमोघादिनृत्यरचनौघावमग्नमनसा
हा घातुकादयजनौघानुपैषि परितो घासमुग्ध मृगवत् ॥
मोघाशया -घनतमाघांस्तनोषि विविधाघावहानपि कुतो
मेघाभमस्तनरकाघातभीर्भवनिदाघापहं भज विभुम् ॥५॥

नीचाग्रणीषु बहुधाचारणोऽभवमनूचानवंशजनित
श्शोचामि मामिह हि शौचातिदूरकलुषाचारभाजमनिशं ॥
श्रीचारुवक्त्र कमलाचातकीघन हरे चापभूषित सदा
वाचा त्वदर्थनकलाचातुरीं प्रदिश मे चाटुसल्ललितया ॥६॥

स्वेच्छावशेन बुधपृच्छां विलक्ष्य नर गच्छाद्य वारवनितां
यच्छाथ भूरिधनमच्छामितानि वसनाच्छादनानि तदपि ॥
हृच्छान्तिमाप किमपि च्छान्दसाधम किमु च्छातमेतदतसी-
गुच्छाभनीलमणिसच्छायकायमिह तच्छार्ङ्गिणं प्रणम रे ॥७॥

धीजाड्यतो विबुध-राजादयोऽपि विपदो जालमेव विविशु
र्भो जानतोऽपि भवतो जारतादि कृतितो जायते न विरतिः ॥
पूजाविधानरतिभाजामघार्तिहरणे जागृतं जप सदा
श्रीजानकीरमणमाजानवाहुमसुराजाववारितबलम् ॥८॥

त्वं चापलं सपदि मुञ्चाधुना कुपथसंचारकर्मणि सखे
किंचाहिराजमयमञ्चाधिरूढमभिषिञ्चागमैरघहरैः ॥
पञ्चाप्यपास्य पतिपञ्चाननान्विनतपाञ्चालराजतनया
याञ्चा प्रसारितपटं चामरग्रहविरिञ्चादिसेवितमजम् ॥९॥

इष्टाध्वरोऽसि बहु दृष्टागमोऽसि परिपुष्टार्थपण्डितगण
स्स्पृष्टायताक्षिरसि सृष्टात्मजोऽसि बहुमृष्टान्नभोजनपरः ॥
नष्टान्यथापि भवकष्टानि नो तव तदष्टापदाभवपुषं
हृष्टान्तरःपरिचरेष्टार्थदायिनमरिष्टापहं मधुहरम् ॥१०॥

निष्ठा न ते बत लघिष्ठाऽपि दैवतवरिष्ठार्चिते मुररिपौ
काष्ठां परां समलभीष्ठा रतेस्त्वमधरोष्ठामृते मृगदृशः ॥
प्रेष्ठायितं तदपि लोष्ठायते वपुरनुष्ठाय तच्छुभकृति –
श्रेष्ठान्मनस्यलमधिष्ठापयाब्दरुचिगोष्ठावनीचरमहः ॥११॥

रण्डाः परामृशसि चण्डालविप्र भुवि कुण्डान्बहून्जनयसे
पण्डावतां धुरि वितण्डा विधाय बुधशौण्डायसे बत कथाः ॥
दण्डाद्बिभेषि यदि चण्डान्तकस्य गुणभाण्डालयं यदुशिशुं
मण्डानुलेपसिततुण्डाब्जमेहि करिशुण्डायतोरुमयनम् ॥१२॥

मूढाग्रणे स्मृतिनिरूढागमं जगति रीढास्पदं विदधता
प्रौढावधूरियमुदूढा त्वया बहुलगाढानुरक्तमनसा ॥
बाढापदालिरवगाढा ततस्तुमुपगूढाम्बुराशितनया-
लीढाधरामृतमसोढासुरं हृदयगूढात्मकं श्रय परम् ॥१३॥

प्राणाधिकं नयनकोणाहतोऽविरतमेणाङ्कसुन्दरमुखीं
प्रीणासि रे कुसुमबाणाज्ञया सुखपरीणामितां किमगमः ॥
ह्रीणान्तरो यदि च रीणामृतोल्लसितशोणाधरे व्रजपतौ
क्वाणावरीणतमवीणादिवाद्यगणवेणावुपेहि सुमतिम् ॥१४॥

पातालमाविशसि वेतालमाभजसि रे ताम्रलेशतृषया
नैतावताऽपि तव याता विपत्ततिरहो तापमात्रमगमः ॥
भूतानुकम्पिनमधीतागमस्सरसगीताभिधानरसिकं
पीताम्बरं कलय धूताघचित्तभुवि शीतांशुवंशमहितम् ॥१५॥

शोथादिरोगमलुनाथाः पुरा जलधिपाथांस्युदस्य जनितो
गाथावशेषितनिशीथाधिचार्यसुरयूथाधिपोऽमित बलः ॥
नाथामरान्समपृणीथा रमां त्वमवृणीथास्सरोरुहकरां
नाथामहे वयमनाथा यदूत्तम पुनीथा हरे करुणया ॥ १६ ॥

श्रीदार दिव्यमहिमोदार हेम-मणि-केदारसंग्रहधिया
भूदारवद्धनिजनोदासितो जगति हा दासभावमगमम् ॥
खेदात्परं न खलु साऽदात्फलं तव विना दानवान्तक कृपां
मोदांल्लभेय बहुवेदादिसंस्तुत विषादाकुलः कथमहम् ॥ १७ ॥

नाधारयं स्थिरसमाधावसारविषयाधावनोत्सुक मनो
बाधा अवाप्नवमगाधास्ततो बत समाधानलेशरहितः ॥
श्रीधामवक्षसि कृताधारहार करुणाधारयेतरजना-
साधारणांस्त्वमपराधान्क्षमस्व मम राधाविनोदरसिक ॥ १८ ॥

जानामि सर्वसुरमानार्ह नैव गुणगानादिकर्म भवतो
नानाविधानि विपुलैनांसि कर्तुमिह कीनाशतोऽपि चपलः ॥
श्रीनाथ पादनतदीनार्तिहानिकर ते नाम मङ्गलतम
ध्यानादृते दुरितदूनात्मनो मम तु का नाम शाश्वतगतिः ॥ १९ ॥

शम्पासमं धनचयं पातहेतुमिह संपाद्य किं फलमहो
किं पाति तच्च यमझम्पाप्रदानभवकम्पादुदित्वरभयात् ॥
त्वं पामरो यदि परं पारमिच्छसि भृशं पातकोदकनिधेः
शं पावनान्नतनिलिम्पावनोद्यदनुकम्पाकराद् वृणु वरम् ॥ २० ॥

लम्बालकां रतिविलम्बासहो मधुरबिम्बाधरां कुचतटी-
संबाधचारुसुषुमां बालिकां गुरुनितम्बावहामभिलषन् ॥
त्वं बालिशीभवसि किं बाह्यभोगनिरतोऽम्बालिकार्थितसुतं
तं बादरायणमुनिं बाढमाश्रितकदम्बामरद्रुमय रे ॥ २१ ॥

आभासरम्यसुखलोभात्तुवन्द्रविणलाभातुरो नरपशून्
स्वाभाविकप्रदिमशोभां कवीश्वर कुतो भारतीं छलयसि ॥
सौभाग्यदं व्रजवनीभामिनीविटमये भावगर्भितगिरा
श्रीभागधेयममलाभान्वितं स्तुहि सदा भाललोचननुतम् ॥ २२ ॥

कामादिवैरिवशगो मा भवान्भवतु रे मानव क्षणमपि
क्षेमाय नो भवति वामा कृतिस्तव हि पामावदन्त्यविरसा ॥
भामाप्रियं विहतभौमासुरं विनुतभूमानमम्बुजभुवा
भीमातटीचरमभीमाकृतिं प्रणम भीमानुजप्रियसखम् ॥ २३ ॥

हेयामपीह परजायामुपेत्य सहसा यामिनीशवदनां
कायात्मनोरपरिमायान्यतां तु निरयायाहमासमतिथिः ॥
श्रीयादवेश कमलाया विलासरत गेयानुभाव निगमैः
पायाद्भवोद्भवदपायाद्भवानयि कृपायादसां पतिरमुम् ॥ २४ ॥

संन्यासधर्म विषयेऽन्यान्प्रति द्रुतमुपन्यासवेगमुखरो
कन्याघनावयवविन्यासलुब्धहृदुदन्यां क्षुधं स्मरसि नो ॥
अन्यायकर्मसु चरन्यासि किं नरकजन्याश्शुचस्त्वमधुना
धन्यात्मनां विहतदैन्याय देवगणमान्याय तत्कुरु नमः ॥ २५ ॥

वैराभिवेशहृतधीरार्यलोकमनुदारात्मना छलयतो
घोरापदां नरककारागृहेषु परिहाराय कस्तव भवेत् ॥
वाराशिजानयननीराजितं करुणपूरार्द्रमानसमतो
नारायणं दुरितभारापहं सततमाराधयस्व मनसा ॥ २६ ॥

नीलाप्रियो भ्रमरनीलालकः कलितनीलाम्बरो व्रजवने
कालाधिपो दनुजकालात्मको निबिडकालाम्बुदद्युतितनुः ॥
मालाधरस्त्रिदशमालार्चितोऽमृतसमालापमोहनपटु-
र्लीलायतार्क्ष्यमितलीलावशोऽस्तु भवजालापदालिहृतये ॥ २७ ॥

जैवातृकाभवदनावाममोहकविभावानुलीनहृदयो
नावागमं तव हि सेवाविधानमपि भावाहितं भवहरम् ॥
दैवाहतस्य भृशमेवाधुना क इह जीवातुरच्युत भवे-
च्छ्रीवासुदेव करुणावारिधे तव रमावाञ्छितं पदमृते ॥ २८ ॥

कोशाधिपे विहितपैशाचकर्मणि दुराशावशादभिसरन्
नाशान्तधीस्सुकृतनाशादभूर्विषयपाशावृतः किमधुना ॥
क्लेशान्मुमुक्षसि जडेशान मानव यदीशादिवन्दितपदे
काशामलस्मितरुचाऽऽशाप्रकाशकपलाशाधरस्य पत रे ॥ २९ ॥

योषावपुर्बहुपुरीषादिसर्वमलकोषायितं नरपशो
भूषादुकूलशुभवेषादिभिर्भवति तोषाय ते कथमहो ॥
दोषातिदूरमपि दोषाकरास्यमिह शेषाधितल्पमुदय-
त्पूषाभमुन्नतमनीषापथं नय तुराषाण्मुखामरनुतम् ॥ ३० ॥

प्रासादसीम्नि सुखवासार्थमादिवसमासायमायतदृशो
दासायसे मृदुलहासादिमञ्जुलविलासातिमुग्धमनसा ॥
श्वासप्रयानसमये सा, न ते भवति कासाहसेन किमघ-
त्रासापहारिकरुणासारमाश्रय सदासारसेक्षणहरिम् ॥ ३१ ॥

आहारभोगरुचितो हाटकातुर दुरुहाः कृतीर्वितनुषे
नीहारशैलमयसे हार्दतश्चरसि वैहायसे पथि वृथा ॥
देहाधिकश्रममृते हा किमापि भवता हापितोद्भवसृति
व्यूहात्मकं विपदपोहाय संस्मर मनोहारिणं मुरहरम् ॥ ३२ ॥

दीक्षाधरो निगमशिक्षासु लौकिकपरीक्षास्वथो सुनिपुणो
यक्षार्चकोऽस्ययुतलक्षाधिकद्रविणभिक्षाशया पटुबटो ॥
न क्षामतामगमदक्षावलित्वरदपेक्षा तथाऽपि तदये
प्रेक्षावशं कलय दक्षात्मना सुरनदीक्षालिताङ्घ्रिनलिनम् ॥ ३३ ॥

प्रज्ञावदाचरितमज्ञासिषं न जप-यज्ञादिकं यदुपते
राज्ञां नितान्तमसदाज्ञाकृतामयि समज्ञास्तवैकनिरतः ॥
विज्ञापयामि भृशमज्ञानिनं तमनवज्ञाय मां श्रुतिगणो-
पज्ञाकृते मम रसज्ञां गुणामृतरसज्ञां कुरुष्व भगवन् ॥ ३४ ॥

अविदितकविसीम्ना गालवक्षेत्रधाम्ना
नुतयदुपतिभूम्ना प्रेरिता रामनाम्ना ॥
नलिनभववधूटीवीटिकावाहिचेटी
कवनकुसुमवाटीष्वश्वधाटी व्यनाटीत् ॥ ३५ ॥

❑❑

# १६. चाटुलहरी

कृष्णे धावति मे मनोऽतिचटुले बाले विलासास्पदे
किं कुर्वे पशुनाथ मौढ्यविरसा वृत्तिर्न मे रोचते ॥
इत्युत्स्वप्नवचो निशम्य कुपितं दृष्ट्वा पतिं तद्वचो
व्याख्यन्ती गृहगोपतेः परतया राधाऽस्तु मोदाय नः ॥ १ ॥

राधे त्वं वृषभानुजाऽस्ययि पटुस्त्वं धेनुकाबन्धने
मुग्धे धावति मानसं सकुतुकं नित्यं कुचेऽलं मम ॥
रुन्धे निर्वृतिकाङ्क्षिणी करयुगं का नु ग्रहीतुं तवे-
त्येवं नर्मगिरः किरन्तु बहु शं राधा-मधुद्वेषिणोः ॥ २ ॥

निश्शुल्कं भजते मृकण्डुमुनये लीलालयो दर्शितो
दत्तं ते दधिमण्डमद्य जलदाच्छन्नाभ्रशीताचलम् ॥
तन्मे दर्शय संप्रतीति भगवान्संश्रूय राधावचः
पश्येत्युच्चहसः पयोधरतटं मण्डेन लिम्पन्मुदे ॥ ३ ॥

दूरे माधव किं स्थितोऽस्ययि कथंन्चायामि ते सन्निधिं
पुष्पामोदभरेच्छुकालभुजगी पृष्ठे तवालम्बते
वक्त्रे वक्रधनुश्च भीषयति मां वक्षस्यहो प्रोन्नतं
रुन्धे मां गिरिदुर्गमाशिवति हरेर्नर्मोक्तयश्शर्मणे ॥४॥

सीमन्तेन बिभर्ति भक्तिमतुलां केशो विरक्तिं पुन -
र्दष्टोष्ठश्च विशाललोचनमिदं श्रुत्यन्तसक्तिं पराम् ॥
नीवी च स्वयमेव मोक्षमयते चेतश्च मे ,निर्वृतिं
राधे साधन-साध्ययोर्व्यतिकरो लुप्तो मनोजागमे ॥५॥

❑❑

# १७. सुरसरस्वतीसंदेशः

वसन्ते प्रशान्तमयो निशान्तसमयः। तस्मिन् विकसदरविन्दमकरन्दभारादिव मन्दमन्दचलनेन नन्दयति गन्धवहो जीवसंदोहम्। हन्त इतो द्विजराजोऽपि तामसीसहवासेन वारुणीसेवनेन च विलीनतेजाः कलंकवान् अन्वर्थयन्नात्मनो दोषाकरनामधेयं दुनोति सतां चेतांसि। निसर्गदेवीं प्रति निर्निमित्तसमुदित-कोपकषायमलिनीभूतनलिनीकुटिलकटाक्षरुचिच्छटावशादिव क्षणादरुणिमानमवाप गगनाङ्गणम्। चिरं सुधाकरेण सहोद्दामविहारपरिश्रान्तयामिनीकामिनीधम्मिल्ल-गलितम्लानकुसुमविसर इवाबभौ तारकानिकरः। समुदञ्चितपञ्चमस्वरेण कोकिलबन्दिनः उदयगिरिसिंहासनमारुरुक्षोर्भगवतो भानुमालिनो गायन्ति स्म गुणगणान्। विरहिणो निजप्रणयिनो गगनमणेः समागममासन्नमन्वीक्षमाणा प्राचीसीमन्तिनी कुसुम्भारुणं वसनं वसाना भृशमासादितवती प्रसादम्। दयितकण्ठाश्लेषविघटनपटुं कटुतरं कुक्कुटरवं चिरादुत्थानकुपितश्वश्रूजनकठोर-ध्वनिमिवाकर्ण्य ससंभ्रममुत्थाय गुरुजनभिया पुरः प्रसर्पणमन्विच्छतोऽपि दिवसगतद्वादशहोराविरहकातरतासहजद्विगुणितप्रणयपरवशतया पदात्पदमपि

प्रयातुमपारयतो विदिताकूतस्मितवदन-दयितजनसरभसाश्लेषविश्लथदुकूलस्य नववधूजनस्य कङ्कणरवसहचरो "मा मा" इति विधिगर्भो नवोन्मिषन्निषेधमधुरस्वरः पुनरपि वर्धयति स्म पञ्चसायक लीलाप्रपञ्चम्। बटुजनावर्त्यमान-परममङ्गलमयवेदघोषः पोषयति स्म तोषविशेषम्। दधिमथनपराणां सुन्दरीणां सरसनूपुरकिङ्किणीगणझणत्कारेण क्वणत्कनककङ्कणरणत्कारेण कम्बुकम्रकण्ठपरिस्पन्दिना बालमुकुन्दसुन्दरलीलानुबन्धिना हृदयङ्गमेन संगीतस्वरेण च मेदुरमिवासीन्मेदिनीमण्डलम्।

परममङ्गलमये हृदयङ्गमेऽस्मिन्प्रसंगे निशामशेषामपनीय सुरभारती प्रसारणचिन्तया ग्लानिसहोदरीनिद्राङ्गनासमालिङ्गितस्य मे स्वप्ने सहसैवाविरासीन्निजभासा शयनागारं प्रकाशयत् किमपि दिव्यं तेजः। किमिदमत्यद्भुतमिति स्वप्न एव विस्मयाविष्टचेता दिक्षु विदिक्षु निक्षिप्त चक्षुर्यावदीक्षे, हन्त तावदेव मृदुतरनखररुचिररुचिनिचयनिरस्तहृदयान्धकारं मञ्जुलरवशिञ्जानरञ्जितं सुकुमारतापहसितसारसदलं चरणयुगलं मन्दं मन्दं निदधती राकासुधाकरकिरणनिकरन्यक्कारकुशलं विमलं दुकूलं परिदधाना समुज्ज्वललावण्यराशिमापनकुतूहलाकुलितयेव विलीनमध्यान्वेषणपरिवेष्टनयेव किङ्किणीसमलङ्कृतकाञ्च्या परिगतं सूक्ष्मदृशामप्यगोचरं कटितटमावहन्ती स्थूलतरमुक्ताहारभासुरां रेखात्रयबन्धुरां कन्धरां दधाना वराभयमुद्रा-वीणा-पुस्तकसमुद्भासिभिः मणिकङ्कण किरणनिरतिशयारुणतलैः करकमलैर-खिलजीवलोकचैतन्यशक्तिमाविर्भावयन्तीव कुन्दकुसुमापहासि मृदुस्मित-धवलतरद्युति- विद्योतितारुणाधरदलेन कुवलयदलविलासिलोचनयुगलेन शम्बररिपुशरासनविडम्बिभ्रूमण्डलेन चम्पककुसुमसुषमासंपद्विलुम्पनोत्सुकनासिकेन शशांकशकलानुकारिसतिलकविशालभालेन वदनेन्दुना मन्देतरानन्दसंदायिनी नयनातिथितामगमत्सुरयुवतीसंघसेविता काऽपि देवता भावतन्मयतामापादयन्ती मेऽदृष्टपूर्वा। प्रतिक्षण-विजृम्भमाणविस्मयस्तिमितचेतसा भावप्रभावभरितहृदयेन मुहुर्मुहुर्दिदृक्षुमपि प्रभाप्रतिहतचक्षुषं विवक्षुमपि चिरादस्फुटितवाचं किङ्कर्तव्यतामूढं दीनं मामालोक्य सा सेवकजनसुरधेनुर्भगवती मन्दस्मितसुधारसासारेण मामाप्याययन्ती शिरसि मे वरदकरसरोरुहं विन्यस्य पीयूषरसवर्षिण्या गिरा मामवोचत वाचांदेवी। "वत्स इतःपरमलं चिन्तया। अलं विस्मयेन।

मत्परिचर्यासमुत्सकतया निरन्तरचिन्तातान्तस्वान्तं त्वां सान्त्वयितुमभ्यागतां साक्षात्सुसरस्वतीमवेहि माम्। अविदितं नाम किमपि न विद्यते देवतानां वसुधातले। भक्तिभरेण स्मरणमात्रात् मातर इव प्रसादभाजो भवन्ति कृपावशंवदा देवताः। "रात्रिर्गता मतिमतां वर मुञ्च शय्यां पाणौ गृहाण लिखितुं वरलेखनीं त्वम्" लेखैरसज्ञहृदयाहरणप्रवीणैः संप्रीणयस्व मधुरैरिह देववाणीम्'॥ नेच्छामात्रेण सिद्ध्यन्ति समीहितानि। यत्नानुबन्धीनि खलु भवन्ति फलानि। उद्यमप्रसन्ना हि देवता विश्राणयन्ति मनीषितम्। प्रसन्नाऽस्मि। वृणीष्व वरम्। "उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत" इति घोषय सर्वत्र। सुरसरस्वती समुन्नतये प्रशंसनीयस्तवायमुद्यमः सफलीभवेद-चिरादेव मत्प्रसादेन। सुरभारतीसरसतानभिज्ञैर्माणिक्यगुणविवेकविकलैश्शाखा-मृगैरिवाधुनिकशिक्षणभ्रष्टमतिभिः प्राचीनशिक्षणदूषणदक्षैः प्राज्ञम्मन्यैः कुञ्जरपरीक्षोद्यतान्धैरिवानधिगतार्थतत्त्वैरनादृतोऽपि मागा निरुत्साहलेशम्। मापीपतः विषादविषोदधौ। दृढप्रत्ययपरीक्षणार्थमेव परापतत्यन्तरायपरम्परा। मा देहि अधीरतायै स्वल्पमप्यवकाशं मानसे। सानन्दमङ्गीकृतं निर्वर्तय श्रेयस्करं कार्यम्। अद्यापि विद्योतन्ते सुरवाण्यां निरतिशयप्रणयभाजो विविधविषयसरसविलेखनकलाकुशलाः कवयः, मुक्तहस्तमविरतदानप्रवाहे प्रथितयशसो धन्या मान्याश्च वदान्याः। अत इदानीमुत्तिष्ठ! जागृहि। सर्वथा मत्प्रसादेन निरतिशयं श्रेयस्ते भविता" इति। एवं व्याहरन्त्येव भगवती सा वचोदेवता श्रद्धाबद्धाञ्जलिं प्रणतिपुरस्सरं किञ्चिद्विज्ञापयितुं परिस्फुरितोष्ठपुटं मां विदिताशयाऽस्मीति सूचयता मन्दस्मितेनाभिनन्द्य कृपाकटाक्षेणाभिवीक्ष्य च वात्सल्यमूर्तिः पुनः कोमलकरकमलेन परिमृश्य तदैवान्तरधात्साश्चर्यमालोकयत्येव मयि।

तदनु सुप्तोत्थितस्तदखिलं स्वप्नोदन्तं संस्मृत्य संस्मृत्य समुद्भिन्न-पुलकावलिकञ्चुकिततनुः सुरसरस्वतीसंदेशं यथावत्कर्तुमुद्यतोऽस्मि मधुरवाणीमुखेन। उद्यमस्यास्य सफलीकरणश्रेयः सहृदयाः वाचकाः समश्नीरन्निति सप्रश्रयमाशास्महे।



# १८. अपारः खलु संस्कृतवाङ्मयाकूपारः

यथा संसारेऽस्मिन् संस्कृतवाङ्मयस्य माधुरी न कयाऽपि संपन्नया भाषया कदाऽपि समधिगन्तुं शक्यते तथा तस्यापारताऽपि। पुरा यवनसाम्राज्ये षण्मासपर्यन्तमहोरात्रं तृणदाहं दग्धेष्वपि अपरिमितेषु ग्रन्थेषु "अद्याऽपि रत्नाकर एव सिन्धुः" इतिन्यायेनाधुनापि संस्कृत वाङ्मयमियत्तारहितमेव वरीवर्ति चातिशेते सर्वतोऽपि। न किल न परामृष्टो यः कोऽपि वा विषयोऽनया भाषया। अस्या महतीमजानाना वैदेशिका इव भारतवर्षीया लज्जया समं स्वाभिमानमपि परेभ्यो विक्रीय यथेच्छं प्रलपन्ति यत् 'प्राचीना नाकलयन्ति स्म लिपिकलाम्। नैवाजानन्विमाननिर्माणम्। नाप्यवगच्छन्ति स्म विविधलोहप्रयोजनम्। नाधिजग्मुर्यान्त्रिकविद्याम्। नैव विदू रसविज्ञान-शास्त्रम्। नैवावगाहन्ते स्म भौतिकशोधम्। यदीमे प्राचीनवाङ्मयं परामृशेयुस्सु-सूक्ष्मदृशाऽनुसन्धेयुरर्वाचीनास्तर्हि स्वीयं वचः प्रलाप एवेति स्वयमेवाङ्गीकुर्युः। मन्येरंश्चात्मानं बालिशमेव। आत्मनोऽविवेकिताकृते तप्येरन् पश्चात्तप्येरंश्च। यदि संस्कृत-प्राचीनवाङ्मयानुसन्धानवैधुर्यमेव सर्वानर्थनिदानमिति मन्येरंश्च। यदि संस्कृत-वाङ्मयस्य पुनरनुसंधानकर्मणि मनो व्यापारयामस्तर्हि नूनमचिरादेव प्राक्तनीं संपन्नामासादयेद्दशां भारतखण्डमिति निश्शङ्कमवगतं स्यात्। संप्रति भिन्नभिन्न-स्थलेषु प्रसिद्धेतराणि लिखितान्यपूर्वग्रन्थरत्नानि समुद्भासन्ते। तेषु विमृष्टं विषयमपि नैव जानीमो वयम्। तत् कथमनुसंधातुं प्रभवामः परप्रत्ययनेयबुद्धयो भारतीया वयम्।

अन्यान्यग्रन्थभाण्डागारेषु हस्तलिखितानि पञ्चलक्षाधिकसंख्याकान्यपूर्वाणि संस्कृतपुस्तकानि समुपलभ्यन्ते संप्रत्यपि। जर्मन देशे चतुश्चत्वारिंशत्सहस्राणि पुस्तकानि, आङ्ग्लदेशे च (इंडिया आफिस पुस्तकालये) विंशतिसहस्राणि, आक्सफर्ड विश्वविद्यालये षोडशसहस्राणि फ्रान्सदेशे द्वादशसहस्राणि, मद्रराजकीयविद्यालये त्रिंशत्सहस्राणि, पुण्यपुरीयभाण्डारकरविद्यालये त्रयोविंशतिसहस्राणि, मुद्रपुरीय आडियारपुस्तकालये त्रयोविंशतिसहस्राणि कलकत्ता पुस्तकालये पंचदशसहस्राणि, तंजावर पुस्तकालये त्रिषष्ठिसहस्राणि,

बडोदा राजकीय विद्यालये पञ्चदशसहस्राणि। एतानि विहाय महीशूर - त्रावणकोर. बिकानेर -जयपूर -काश्मीर विद्यालयेषु केषांचन वैय्यक्तिक संग्रहालयेष्वपि सन्ति ग्रन्था असंख्याताः। दिवंगते- न वङ्गीय विदुषा राजेन्द्रलालमित्रेण हस्तलिखितसंस्कृतपुस्तकविषये भागशो लिखितास्सन्ति नैका लेखाः। एकस्मिन् ग्रन्थे नौकानिर्माणोपयोगिदारुषु ब्राह्मण - क्षत्रवैश्यादिजातीः परिकल्प्य कस्मिन् कस्मिन् कार्ये कानि कान्युपयोज्यानीति सम्यक्परिशीलितं दृश्यते। बडोदानगरात्प्रकाशिते समराङ्गणसूत्रधारनामकग्रन्थे वायुयान-रचनाविधिः साधु निरूपितः।

नैजामराजधान्यां डा. सय्यदमहम्मदकाशीममहाशयस्य सदनगत पुस्तकालये तालपत्रलिखितानि चान्यानि विद्यन्ते विविधा-द्भुतविषयोपबृंहितानि पुस्तकानि। केषुचित्पुस्तकेषु सहस्रवासरपर्यन्तं मृतशरीरस्याशीर्णतयाऽवस्थापनं, सलिलान्तर्गत वस्तुदर्शकादर्शनिर्माणं-पर्वतानां भूतलसमीकरणं-विविधवर्णकार्पास समुद्भावनम्, अधोदेशाज्जलस्योच्छलनं, लोहद्रवीभावनम् आसहस्राधिकवर्षं एकस्य वस्तुन एकप्रकारेणोष्णतास्थिरीकरणम् आशतहायनमोदनरसपरिरक्षणं विनाशनविनाकृतपानस्याषण्मासं पालनम् स्थिरारोग्यसंधारणम् आसहस्र-वर्षमायुर्वर्धनं दुर्बोधप्राचीनलिपिवाचनम् एवमादयो बहुलोपयुक्ता भूयांसो विषयास्संदृब्धा इति विज्ञायन्ते । यदि राजानस्साहाय्यं विदधीरन्, यदि च विद्वांसोऽस्मिन् शोधनकर्मणि व्याप्रियेरन् तर्हि नितरामपूर्वविषयावगमेन भारतखण्डमिदमखण्डैश्वर्येण, प्रचण्डप्रभावेण भूमण्डलमण्डनायमानमाखण्ड-ललोकस्पर्धास्पदं भवेत्। अपि नाम तादशभाग्यभोगोऽनुभूयेत तपस्विना भारतदेशेन।

भगवान्खगवाहनोऽच्युतः पुनरप्यद्य सनातनां स्थितिम् वरभारतभूमि-मञ्जसा तरसा प्रापयतात्कृपानिधिः॥

□□

# १९. प्रवृद्धं हा धार्मिककदनं खेदसदनम्

बहोःकालादुत्तरभारते दृढमूलो हिंदुयवनकदनदावानलः शनैश्शनैः प्रसरन् प्रसरन् दक्षिणमपि भारतं दुर्दैववशात् कवलीकर्तुमभिलषतीव। द्वित्रदिनेभ्यः प्राक् पुण्यपत्तनेऽपि प्रादुर्भूतस्सहसाऽयं कदनानलो व्याकुलीकरोति सतां चेतांसि। सुवर्णमारुतिनिमित्तं प्रवृत्तोऽयं वैश्वानरो नितान्तमुग्रस्वरुपमापेदिवान्। उद्दामवृत्तयो यवना हिंदूनां धर्मकृत्यमसहमाना वृथा कलहायन्ते इति वृत्तपत्रवाचिभिः प्रत्यहमवगम्यते। स्वभावसरलाश्शान्ताश्च हिंदव उदारचेतसा यवनाक्रमणमसहन्त पूर्वम्। परमियमवस्था न चिरस्थायिनीति विज्ञायतां महम्मदीयैः। सहनशीलतायाः काऽपि सीमा वर्तते इति न खलु न विदितं मोहम्मदीयानाम्। न हि सर्वे माहम्मदा अविवेकिनः। तस्मिन् समाजे विचारशीलाः शान्तिकामुकास्सहस्रशो लसन्ति। ते किलोच्छ्रङ्खलान् ज्ञातिबान्धवान् समये निगृह्य समाजे शान्तिस्थापनाय प्रयतन्ताम्। न चेत्प्रथममेव विविधविपत्तिग्रस्तोऽयं भारतवर्षोऽधुना मिथः कलहेन तेन बहुहीनां दशामासादयेत्। उभावपि समाजौ नामशेषामवस्थां किंवा गमिष्यत इति बिभेति चेतः। किंवाऽमुनाऽत्याचारेण विनाशं विना किंवा फलमनुभवन्ति यवना इति विचारयन्तोऽपि न शक्नुमो वयमवगन्तुम्। लोके दौर्बल्यं शैथिल्यं चाभिभवास्पदं सर्वत इति साधु विचार्य हिन्दुभिरपि बलसंवर्धनाय संघटनाय सनातनधर्मभावनोज्जीवनाय च सावधानैर्भवितव्यमिति साग्रहमावेदयामः। समाजे दौबल्यस्य शैथिल्यस्य च धर्माभिमानशून्यतैव निदानम्। विना धर्मभावनां न कदाऽपि समाजस्समाश्रयति समुन्नतिम्। अतो देशहितैषिणस्सुधारका नेतारस्सुदृढमूलसनातनधर्मविध्वंसनव्यापारादुपरम्य तद्धर्ममर्यादारक्षणायैव यदा श्रद्धावन्तो भूयासुस्तदैव धर्मभावनया समाजे प्राबल्यं संघटना चोत्पद्येताम्। जागृतं प्रबलं संघटितं च समाजं न कोऽप्यभिभवितुं शक्नुयात्। इदमखिलं विचार्याधुनाऽपि भूतिकामैरग्रणीभिः बुद्धिपूर्वं प्रचलितस्सनातनधर्मविघातकदुरुपदेशस्सर्वात्मना परिहरणीय एव। तन्तुरिव मौक्तिकानि धर्मभावना समाजचेतांसि संबद्धानि करोतीति न विस्मरणीयमद्यतनैरित्यन्ततो निवेदयामः।

□□

# २०. साहित्यम्।

सर्वंसहामण्डलेऽस्मिन् साहित्यं नाम सुखसाहित्यसाधनं दुःखराहित्यनिदानं नवस्फूर्तिसातत्याधायकं सुविचारौचित्यापादकं सकलमनोऽभीष्टपूरकं कल्पतरुकल्पमपूर्वमेव वस्तु। यत्सेवनेन रसिकाग्रेसरो मानवो न कलयति मानसे मनागपि सुमनसां सदनसुखलेशाशाम्। साहित्यसाम्राज्ये विपुलतरसरसार्थवाहताकृतार्थो हि नार्थकार्श्यचिन्तामावहत्यन्तरङ्गे किञ्चिदपि। साहित्यसागरे निमग्नः समधिगतोज्ज्वलगुणमणिर्न गणयति तृणमिव ग्रावविशेषान् मणीन्। साहित्यविहायसे विहरन् समवाप्तदिव्यप्रकाशो नाशंसति क्षयिष्णुदिवाकरदोषाकरद्युतिम्। साहित्यामृतपानमत्तो न हृत्तोषदां मनुते सुरैरपि सादरं सततमभ्यर्थनीयां सुधाम्। साहित्यसुन्दरीविविधविलासवशीकृतमानसो न सोत्कण्ठो भवति देवलोकवामलोचनासु। साहित्यापणे समर्जित-समूर्जितालङ्कारनिकरो न्यक्करोति सुवर्णालंकारान्। साहित्यकेलीमन्दिरे सरसशय्यामुपारूढः नोपाढौकते नवतरुणीसनाथां मृदुहंसतूलमयीं बहुमूल्यक्रय्यां शय्याम्। साहित्य-कुसुमरसास्वादमोदमेदुरः सहृदयमधुकरो दूरत एव परिहरति फलपाकरसम्। साहित्यनन्दनवनविहरणसमुदितमन्देतरानन्द-तुंदिलो नाभिनन्दति पुरन्दरपुरोपवनम्। किं बहुना साहित्यसंसारनिबद्धो हि वृद्धोऽपि श्रद्धां न दधाति निर्वाणसुखे नूनमणीयसीम्, किं पुनर्नवतरुणिमोद्दामवृत्तिः सुकुमारमतिः कुमारः। साहित्यच्छत्रमुपाश्रितवतो न बाधितुं शक्नोतीषदपि प्रखरतरोऽपि संसारातपभरः। साहित्यदेवतामुपासमानान् नोत्तापयितुं प्रभवन्ति कथञ्चिदप्याधिपिशाचिकाः। साहित्यदुर्गं शरणमुपेयुषो न पीडयितुं पारयन्ति विषादप्रमुखाः प्रतिभटाः। साहित्यसम्राजमासेवमानान्न स्प्रष्टुमीष्टे दुष्टदारिद्र्यकष्टपरम्परा। तथाहि दारिद्र्यदावानल-दह्यमानोऽपि मानवो यदि कालिदासीयमेघसन्देशं शाकुन्तलं वा किंचिदपि नयनगोचरतां नेयात्तर्हि तत्क्षणादेव विस्मरत्यात्मानमपि किमुत क्षुद्रां दरिद्रताम्। मेघसन्देशे मेघमनुसरन् मानसपथेन रुचिरालकललनाललितामलकां नाम विभवगरीयसीं नगरीं प्रविशन्सहृदयधुरीणो वाचकस्तद्गतभोगानुसन्धानेन जीर्णग्रामनिवासजां निजां नैव स्मरति शुचम्। तत्र किलालकापुरे ललितवनितेषु सचित्रेषु संगीताय

प्रहृतमुरजेषु मणिमयकुट्टिमेषु अभ्रंलिहाग्रेषु तैरतैर्विशेषैरतुलितजलधरेषु प्रासादेषु विहरन् हृदयालुर्वाचकः कथं नाम मनस्याकलयेदीषदपि सुलभसूर्यचंद्रप्रकाशं धूलिधूसरपतनोन्मुखभित्तिशीर्यमाणस्तम्भभीकरं दीर्यमाणकुट्टिमोदीर्यमाणपांसुपटलं श्लथितच्छदिकं दानवकुलमिव सुधासम्पर्कशून्यं निजस्वामिवदनसंविभक्तवैवर्ण्यं सदनम्। आनन्दोत्थं नयनसलिलमुत्सृजन् इष्टसंयोगशाम्यं कुसुमशरजं तापमनुभवन् प्रणयकोपादेव विरहमवाप्नुवन् नित्यनवयौवनोद्भासित-स्सन्ननुसन्धाननिपुणो वाचकः क्षणमपि वा नोत्सृजति दुःखबाष्पम्। नानुभव-त्यात्यन्तिककांतावियोगेन लतान्तशरनिर्मुक्तनिशितशरसन्तत-प्रहारसन्तापभरम्। न वा निर्विशति जरासहचरीं वेदनाम्। यक्षैः समं सितमणिमयानि ज्योतिश्छाया- कुसुमपरिष्कृतानि रम्यहर्म्यस्थलान्यभ्येत्य उत्तमस्त्रीसहायस्य कल्पवृक्षप्रसूतं रतिफलं मधुरतरं मधुरसमासेवमानस्य वाचकमहाभागस्य कुपितकामिनीकरतलेन साटोपं समर्पितो नीरसतरः पाकः कथं वा स्मृतिपथमारोहेत्। मन्दाकिन्याः सलिलशिशिरैः मरुद्भिः सेव्यमानाभिरनुतटरुहां मन्दाराणां छायया वारितोष्णाभिः, कनकसिकतामुष्टिनिक्षेपगूढैर्मणिभिः सङ्क्रीडमानाभिर्यक्षकन्याभिर्विहरणानुसन्धानविलोलो वाचनशीलो ग्रामाद्दूरत-रवापीक्षारनीरानयनश्रांतां निस्तरुतया बहुलीभवदातपक्लांतां कान्तां किं तावच्चिन्तयेत्। विद्याधराणां नीवीबन्धोच्छ्वसितशिथिलं क्षौमं रागादनि-भृतकरेणाक्षिपन्, ह्रीमूढानां तासामर्चिस्तुंगान् रत्नप्रदीपान् अभिमुखं प्राप्याऽपि विफलप्रेरणां चूर्णमुष्टिं विलोक्य हसन् ताभिर्गाढमुपगूढो रसिकपरिवृढः कथं वा तैलवैकल्येन गाढान्धकार एव क्रीडान्धां विलासकथालेशानभिज्ञां स्मरेत्स्वीयां पाणिग्रहीतीं। प्रियतमभुजालिङ्गनोच्छ्वासितानां यक्षस्त्रीणां सुरतजनितामङ्गलानिं विशेषविशदैश्चंदनपादैर्व्यालुम्पतां तन्तुजालावलम्बानां स्फुटजललवस्यन्दिनां चंन्द्रकान्तमणीनां मानसं सम्पर्कमासाद्य को वा सचेता धारयेत् तस्मिन् क्षणे दैन्यभावनाम्। मनसा यक्षतामनुप्राप्य अक्षय्यान्तर्भवननिधिः, प्रत्यहं रक्तकण्ठैर्धनपतियश उद्गायद्भिः किन्नरैः सार्धं विबुधवनितावारमुख्यासहायः सन् बद्धालापः कामी वाचको बहिरुपवनं वैभ्राज्याख्यं निर्विश्य कुतो वा ध्यायेद् दुःखसाधनमूर्धन्यं नैर्धन्यं, केशराशिमापूर्य समग्रावयवव्यापिकृष्ण-वर्णभासुरां भामिनीं, जीर्णतरमगारं च । गत्युत्कम्पादलकपतितैः मंदारपुष्पैः पत्रच्छेदैः कर्णविभ्रंशिभिः कनककमलैः शिरोनिहितैः मुक्तासरैः स्तनपरिसर-

च्छिन्नसूत्रैश्च हारैः सवितुरुदये सूचितं कामिनीनां नैशं मार्गमन्तश्चक्षुषा निरीक्षमाणः पाठकः विलुठनव्यापारविलोलचक्रीवत्कुलचक्रवर्तिपरिलांछितधूलीमयमार्गं ग्रामं कथं नु चिन्तनाविषयतां नयेत्। चित्रं वासः नयनयोर्विभ्रमादेशदक्षं मधु, किसलयैः सह पुष्पोद्भेदभूषणानां विशेषान्, चरणकमलन्यासयोग्यं लाक्षारागं किंबहुना कल्पवृक्षप्रसूतं सकलमबलामण्डनं विलोक्य निर्वृतः सहृदयः सच्छिद्रवसनामपरिचितनयनविभ्रमामनधिगतभूषणां निशितोपलकोटिस्फुटितपादस्रवद्रुधिरेण लाक्षारसभ्रममुपजनयन्तीं निजसीमन्तिनीं को नु चिन्तनगोचरां विधत्ते। एवं शाकुन्तलनाटकं अनुवाचयन्विचक्षणधीः सूत्रधारवधूसंगीतभंगीश्रवणसुखमनुभवंश्चित्रलिखित इव नानुस्मरति निजाभीष्टवसनाकल्प कल्पनेऽ कल्पतया कल्पान्तानलकल्पारुणलोचनचण्डीकर्णकठोराक्रोशरवम्। दुष्यन्तेन राज्ञा समं महर्षेः कण्वस्योपवनं प्रविश्य सखीसमेतायाः शकुन्तलायाः सौन्दर्यमनुपमं दृष्ट्वा विस्मयस्तिमितो वर्णयति विधातृकौशलम्। तस्याः सौजन्यं नवयौवनेऽनुच्छ्रङ्खलां वृत्तिं लतास्वपि वत्सलतां, गृहकर्मतत्परतां च दूरादेवावेक्ष्य आधुनिक सुशिक्षितमृगाक्षीणमक्षीणमौद्धत्यं वारवनिताभ्योऽप्यधिकां स्वैराचारप्रवृत्तिं निजधवेष्वपि निष्प्रणयतां गृहकर्मविमुखतां च स्मारं स्मारं चिरं स्तवीति प्राचीनरीतिं नितान्तं गर्हयत्यभिनवां सरणिं वाचकधुरीणः। तदनु दुष्यन्तभूपतेः कामुकोचितचेष्टितमवलोक्य मनसा हसति प्रत्येति च कुसुमशरस्याऽप्यप्रतिहतां प्रभुताम्। प्रियंवदाअनुसूययोः सख्योः शकुन्तलायाश्च विश्रब्धसरसं च संवादमुपश्रुत्यापूर्वामेवानुभवत्यानंदमयीमवस्थाम्। दुष्यन्तस्य पावनतमेऽप्याश्रमे विषयाभिलाषमननुमोदमानोऽपि सत्यपि सार्वभौमपदे, विद्योतमानेऽपि प्रद्योतनसमप्रभावे, वैभवे समुन्मिषत्यपिं सुलभविकारे नवतारुण्यभरे सारासारविचारशक्तिं गम्यागम्यविवेचनशीलं विनयविनिवारितसमुत्सिक्तचेतोगतिमन्वीक्ष्य सम्प्रति माण्डलिकभूभुजां पशुवृत्तिं साध्वीमणिबलात्करणे परनारीशीलविभ्रंशनविधौ निर्लज्जप्रवणतां चानुस्मरन् सत्करोति दुष्यन्तं साधुवादपुरस्सरं। धिक्करोति चाधुनिकान्वसुधाधिपान्। शकुन्तलायाः प्रणयाङ्कुरप्रकटनपरिपाटीं कुलकन्यकासमुचितां व्रीडामधुरतां प्रबलतरनिजाभिलाषगोपनप्रकारं प्रौढकन्यकानामाधुनिकीनामुद्दाममदनचेष्टितानि निरपत्रपतां स्वल्पेतरविकारसंवरणपराङ्मुखतां चानुचिंतयन् शोचत्यंतरेव

नितान्तम्। विदूषकवैदुष्येण तुष्यति नितराम्। राज्ञः कामयमानावस्थामवलोक्य खिद्यन्दर्शयत्यात्मनः सहानुभूतिम्। नृपेण समं स्वयमपि निन्दति चन्द्रमसम्। शकुन्तलादर्शनातुरं नरपतिमनुवर्तमानो हि पाठकोऽनुमालिनीतीरं भ्रमति। दृष्टद्रष्टव्यंच भूपालमभिनन्दति। कण्वदुहितरि सख्योर्निरतिशयं प्रेमाणमभिष्टौति हृदा। शकुन्तलासन्निधिमुपागतं भूपालं निरीक्ष्य तत्क्षणमेव तस्मात्प्रदेशा-दनुच्चलन्त्योः सख्योः किंचित्कोपं दधानोपि अचिरादेव चतुरापदेशेन निर्गतयोस्तयोः समयज्ञतां प्रत्युत्पन्नमतितां साधु नौति सानन्दम्। शकुन्तलादुष्यन्तयोः प्रणयसंवादमाश्रुत्याननुभूतपूर्वां विन्दते चानन्दलहरीम्। सत्यपि महत्यौत्सुक्ये गान्धर्वविवाहे गुरुजनानुमतिमाकांक्षमाणां शकुन्तलां निशाम्य मनस्येवं वदति मुग्धे, कुतो वाऽऽयासयस्यात्मानं निजप्रेयांसं च वृथाकालक्षेपेण। पश्य सांम्प्रतिकीः प्रौढाः कन्यकाः। गुरुजनानुमतिमनपेक्षमाणा एव विविधविलासाविष्कारेण वशीकुर्वंतीः पुरुषं स्वयमाकर्षतीर्वसनांचलम्,। इति। अभिनवसंगमेऽतिप्रिययोर्दम्पत्योर्विलासप्रत्यूहस्वरूपिणीमकस्मादुपस्थितां गौतमीं शपति दुष्यन्तेन समम्। शकुन्तलाया लतामण्डपामन्त्रणचातुरीं प्रशंसत्यतितराम्। राज्ञो विरहदशां स्वस्यापि तादृशीं स्थितिमनुसन्धाय किमप्यनिर्वचनीयमाप्नुते दशान्तरम्। तदनु प्रत्यूषस्येव प्रबुद्धं कण्वशिष्यमनुबुध्य इष्टप्रवासजनितानि दुःखानि अबलाजनस्य नूनमतिमात्रसुदुस्सहानि इति स्वानुभूतं विषयं पुनः स्मरति। अनुसूयामुखेन दुष्यन्तस्य शकुन्तलाविस्मृतिं विज्ञाय विततसमज्ञेऽपि तस्मिन् राज्ञि बिभर्ति क्षणमवज्ञाम्। अनागसम् शकुन्तलां शपते सुलभकोपाय दुर्वाससे कुप्यति। विदितवृत्तान्तेन भगवता कण्वेन कृतमभिनन्दनं सद्य एव दुहितुः पतिगृहप्रस्थापनोद्यममवगत्य मोदते मनसा। दुहितृत्वेन पालितायाः शकुन्तलायाः विप्रयोगेण स्नेहसहजवैकल्यस्य कण्वस्येव पाठकस्याऽपि हृदयमुत्कण्ठया संस्पृष्टं, कण्ठः बाष्पवृत्तिकलुषः, दर्शनं च चिन्ताजडं भवति। शकुन्तलायै वनदेवतादत्तानि मण्डनान्यभिवीक्ष्य तपसः प्रभावविस्मितश्चेदिदानीन्तनानां उदरंभरणलोलुपानां नष्टतेजसां भ्रष्टतपसां नामधारिब्राह्मणानां हेयामनुकम्पनीयां जघन्यैरपि निराकरणीयां दशां संस्मृत्य नितान्तं सन्तप्यत्यन्तरङ्गे। राज्ञे कण्वस्य भावगर्भं संदेशमाकर्ण्य तत्कालीनब्राह्मवर्चस्वितां ध्यायन्नुद्विग्नो भवति साम्प्रतिकावहेलनीयदशां पश्यन्। शकुन्तलायै कण्वप्रहितमुपदेशं संश्रुत्य सन्तुष्टान्तरङ्गोऽपि आधुनिकीय स्थितिं

स्मरन्नुद्विजते नितराम्। तदेमं श्लोकं पठति सुशिक्षितसारसाक्षीमनस्स्थितिदर्शकम्

"शुश्रूषे न गुरुन् सखीष्वपि परं कुर्वे सपत्नीमतिं
भर्तुश्चोपकृताऽपि कामुकतया याचे घटस्फोटनम् ।
भूयासं नहि दक्षिणा परिजने भाग्ये समुत्सेकिनी
यान्त्येवं नवनीतिधीरगणनां वामाः कुलस्याधयः ॥"

एवं खिन्नमना वाचकः शकुन्तलायाः आश्रमस्थेषु तरुमृगादिषु वात्सल्येनान्यादृशेन मुग्धो भवति।

शकुन्तलायाः प्रस्थानसमये कण्व इव सख्याविव स्वयमप्युत्सृजति वाष्पं स्नेहेन। तदनु मानसिकदेहद्वितयं कृत्वा एकेन निराशः कण्वाश्रमं प्रविशति। पुनरपरेण शरीरेण शकुन्तलामनुवर्तमानःसमं शारद्वतादिभिः प्रचलति दुष्यन्तपुरीम्। तत्र च राज्ञोऽनुभावमपि प्रथमं मोदमानोऽपि पश्चात् तत्कृतेन धर्मदारप्रत्याख्यानेन प्रक्षुब्धचित्तः सार्धं कण्वशिष्यैर्विशेषतोऽधिक्षिपति राजानम्। प्रजाधिपेन प्रत्याख्यातां स्वजनमनुगन्तुं व्यवसितां मुहुः तिष्ठेत्युच्चैः गुरुशिष्यैर्निर्भत्सितां वल्लभे बाष्पप्रसरकलुषां दृष्टिमर्पितवतीं शकुन्तलां निरीक्ष्य कृपार्द्रचेता अपि 'अतः परीक्ष्य कर्तव्यं विशेषात्सङ्गतं रहः,' इत्युपदिशन् बाह्यवेषेण मुग्धा भ्रष्टशीलाः सुशिक्षितबालाः दूषयति। प्रत्यभिज्ञानदर्शनेन स्मृतसकलवृत्तान्तस्य पश्चात्तापतप्तस्य दुष्यन्तस्य शोचनीयां दशां निशाम्य न शान्तिमधिगच्छति। पुरुहूतप्रेषितेन मातलिना समानीतम् रथं दुष्यन्तसहितः स्वर्गयात्रायै प्रस्थितो वाचकस्तत्र दानवसमरे विजयशालितया अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतमन्दस्मितेन पुरन्दरेण पिनद्धां मन्दारमालां दधतं राजानमनुसृत्य आकाशमार्गेण भूमिमवतरन् मारीचाश्रमं प्रविष्टस्तत्र विरहकर्शितां घृतैकवेणिं नियमव्यापृतां शकुन्तलां पश्यन् दयावशंवदः समाश्वसिति सादरम्-भद्रे, समासन्नस्तेऽभीप्सितसिद्धिसमयः। साध्वीकुलचूडारत्नायमानायास्ते चरितं दुरितहरं नानुकुर्वन्त्याधुनिका ललनाः। परिभवकारिण्यपि पतिदेवे केयमीदृशी ते भक्तिः। शिरसि पादत्राणवहनोत्सुकेऽपि

धवे इदानीन्तनानां सतिरस्कारा वृत्तिः क्व। क्व ते वंचकतया प्रतीतेऽपि वल्लभे निर्व्याजं प्रेम, क्व चासां जीवत्यपि हृदयेश्वरे परपुरुषसहवास-समुत्सुकता। हन्त धन्याऽसि मान्याऽसि दोषलेशशून्याऽसि शकुन्तले!। त्वादृशानां सतीनां जन्मना परमधन्येयं भारतवसुन्धरा, इति। तदनु पतिपत्नीपुत्रसमागमं हृदयंगममभिनन्दन् वाचकमहाभागो नितान्तं निर्वृतः शकुन्तलां दुष्यन्तं कुमारं सर्वदमनं चामंत्र्य पुनः प्रबुद्धो नवीनमेव लभते मनःप्रसादम्।

एवं साहित्यसमालोचनकलाकुशलो वाचको नवीनायां परमरमणीयायां मानवसृष्टौ विहरन् यमानन्दसन्दोहं विन्दते स च कुबेरसमवैभवेन मानवेन पाकशासनप्रतिमेन वा सार्वभौमेण राज्ञा वर्षसहस्रेणापि न शक्यः समधिगन्तुम्। इहैव निर्वाणसोदरसुखदायकं नवचैतन्याधायकं सर्वसंसारदुःखविस्मरणापादकं मनःप्रसादकं सत्पथदर्शकं विविधविचित्रसृष्टिरचनानुभावकं सर्वतोभावुकसाहित्यं यो हि नात्मसात्कुरुते तस्य हतभाग्यस्य स्वयमेव निदर्शनम्। अत एव संगिरन्ते सरससाहितीगमहतीविदः-

'साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः' इति। अतोऽनिर्वचनीयसुखप्रेप्सुभिरवश्यं साहित्यमासेवनीयमेवेति दिक्।

❑❑

# २१. अहो अपूर्वं तत्त्वान्वेषणम्

वसुधातलेऽस्मिन् दरीदृश्यन्ते भूयांसो नवशोधनकलाकुशला नव्या भव्यधिषणा आधिभौतिकेषु विषयेषु। तत्र सफलोद्यमा अभिनन्द्यन्ते, विफलश्रमा अनुकम्प्यन्ते, अनुचितप्रयासाश्च बाढमपहस्यन्ते कोविदैरितीदमवालोकि अवलोक्यते अवलोकयिष्यते च वारंवारमवगतलोकव्यवहारैः। महीयानेवादरोऽस्माकं तेषु भौतिकशास्त्रपारदृश्वसु लोकोपकाराय नवनवविषयाविष्करणचणेषु। सानन्दमभिनन्दामश्च तान्। परं संततसमाधियोगसमासादितदिव्यचक्षुषामप्यगम्येषु अतीन्द्रियेष्वाध्यात्मिकविषयेषु वितस्तिमात्राद्विप्रकृष्टमपि वस्तु नूनमवगन्तुमक्षमा अपि मुधा नवीनशोधनप्रौढिमानमाविन्दंन्ति केचन। सपृष्ठास्फालनमाद्रियन्ते कैश्चनेति हन्त जितं कालेन। अथवा नवशिक्षणप्रभावेण। यमनियमादिकर्शितशरीरैर्निगृहीतकरणनिकरैः अविषहं विषमिव विषयान्, असुखपरिणामां पामामिव रामां, दुःखैकसाधनं निधनमिव धनं. कृतावसादं विषादमिव प्रासादं, पतनोन्मुखनदीकूलमिव दुकूलं दूरीकृतवद्भिः नियताहारविहारैः सुदूरमपास्तकामादिसमस्तारातिभिर्विमलतमविचारधारापरिशुद्धान्तःकरणैः त्रिकालदर्शिभिर्योगिजनैरेव विमर्शनीयोऽयमाध्यात्मिको विषयः। हन्त तमिमं ये व्रतादिकं दुर्वर्तनमिव, नियमं यममिव, तपः तापकरं पापमिव, विषयान्पीयूषमिव, धनं मोक्षनिधानमिव, वनितां परदेवतामिव, धर्ममेवाधर्मं, सदाचारमेव दुराचारं, नीतिमेव दुर्नियतिं, सच्चरितपूर्वजावहेलनमेव विनोदलीलां, देवतिरस्कारमेव प्रतिष्ठापुरस्कारं, साध्वीनिन्दामेव साध्वीं नितान्तमभिनन्दनार्हां च सरणिं विभूतिमत्पुरुषदूषणमेव निरतिशयं पौरुषं मन्यमाना, विषकृमय इव विषमविषयैकलोलाः, शरीरपरिपोषणैकपरायणा, हेयाहेय पेयापेय-भक्ष्याभक्ष्यगम्यागम्य विवेकविकलाः स्वैरवृत्तयो दुर्विचारकलुषितचेतसश्चाधुनातनाः प्राज्ञम्मन्याः श्रोतुमप्यनर्हामचारुतरां विचारसरणिं प्रकटयितुं प्रवर्तन्ते। तेषामव्यापारेषु व्यापारमन्वीक्ष्य विस्मयन्ते स्मयन्ते च सावहेलं सुविचारविचक्षणा विद्वांसः।

पुरातन पावनतमसंस्कृतिभक्षणदक्षस्य नव्यशिक्षणस्य प्रभावाद्वा, आहोस्वित् विषयोपभोगमेव परमपुरुषार्थं मत्वा पशूनामिव स्वेच्छाचारनिरतानां

सहवासवशाद्वा, उत अनुल्लङ्घनीयशासनतया कलुषैकनिलयस्य कलिकालस्य, अथवा तथा तथा भवितव्यतया, चराचरगुरोः परमेश्वरस्याप्रतिहतया नियत्या, वा दुर्निवार्यतया वा प्रकृतेः, विकृतमस्तिष्काः अद्यतनाः पुराणगततत्त्वशोधनमिषेण न केवलमात्मघातं कुर्वन्ति, परं "स्वयं नष्टाः परान्नाशयन्ति" इति न्यायेन सत्पथानुगामिनामपि बुद्धिभेदमुत्पाद्य निरयगर्ते निपातयन्तीति नितान्तं तान्तं भवत्यन्तरङ्गं नः।

पुराणरहस्यान्वेषणाभिलाषिण इमे अविदितशास्त्रमर्यादाः अविज्ञातशब्दार्थस्वारस्याः अनवगतसूक्ष्मतत्त्वाः स्वेच्छानुसारमापातरमणीयान् पामरजनादरणीयान् अनर्थावहानर्थान्परिकल्प्य धूलीप्रक्षेपेणान्धतामापादयन्ति चक्षुष्मतामपि। तत्र केचन श्रीमद्भागवते भगवता सर्वज्ञशिरोमणिना श्रीव्यासमहर्षिणा समुपवर्णितां लीलामानुषशरीरस्य विष्णोरवतारस्य श्रीकृष्णस्य क्रीडां नैकशङ्काकलङ्कितचेतसो दूषयन्ति दोषमुषितधिषणाः। वृन्दावने गोपसुन्दरीवृन्दरासविलासविहाररसिकः शौरिः समराङ्गणे विविधायुधसन्नद्धशूरसेनागणे गुरुजनहननजायमानपातकभिया विषण्णमानसाय पार्थाय गीतोपदेशकान्मुकुन्दादपर इति निराधारं प्रतिपादयतां केषाञ्चन शोधकानामपहसनीयतमां रीतिं समवलोक्य चित्रीयन्ते चेतांसि चारुविचारपटूनां। समुल्लसति वदनारविन्दे निवारितोऽप्युत्कटतरप्रसरस्तिरस्कारसूचको हासः। एवं न्यक्कारैकविषया नैके विषया आविष्कृता एतैः पुरातत्त्वविद्भिः सहस्रशश्चूर्णीकृताः प्रबलयुक्त्यादिप्रमाणैः।

परमपावनचरितेषु प्रातस्स्मरणीयमङ्गलतमनामधेयेषु स्मरणमात्रेण दुरन्तदुरितराशिदूरीकरणक्षमेषु अपरिस्पृष्टदोषगन्धेषु महनीयेषु दिगन्तविश्रान्तविमलयशःकान्तेषु पुराणप्रथितेषु महापुरुषेष्वपि निरर्गलप्रलापा असंगतान्दोषानारोपयन्तोऽद्यतनाः प्रशान्तस्वान्तानामापि नितान्तं जनयन्ति संतापम्।

परमपुरुषावतारे परपुरन्ध्रीसहोदरे चैकपत्नीव्रते महामहिमशालिनि वसुन्धरानन्दनचन्द्रे गुणसान्द्रे वन्दारुवृन्दारकेन्द्रादिशिरस्पृष्टपदारविन्दे श्रीरामचन्द्रेऽपि प्रातस्स्मरणीयसाध्वीसमुदये प्रथमगणिताया मुनिकुलोत्तमगौतममहर्षिधर्मपत्न्या अहल्यायाः जारत्वमारोपितमाकर्ण्य कस्य वा न दुःखाकरोति

मानसम्। कस्य वा सचेतसो वदनात्सहजतयैव न निस्सरेदसकृत् धिग्धिगिति प्रस्फुटो दुस्सहसंतापावेगगद्गदः शब्दः। अहल्याचरितमेवमावेदयन्ति महाप्राज्ञा अमी। "गौतमो'नाम श्रीमान् वर्षीयानपि अनवशेषितविषयाभिलाषो धवलतरजटाभारभासुरो भूसुरो धनलोभापहस्तितापत्यवात्सल्यस्य कस्यचन द्विजन्मनस्तनयामनयान्वितां साध्वीजनहृदयशल्यायमानामहल्यां नाम काञ्चन काञ्चनकान्तिं तरुणीं परिणीतवान्। दशमदशामापन्नस्य दौर्बल्यविपन्नस्य पत्युःसकाशादतृप्तकामा नवयौवनोद्दामा लावण्यधामावयवा वदनविजितसोमा कुसुमायुधनिशिततरशरविसरप्रहारक्षामा समुल्लङ्घितलज्जासीमा अनाकलित-कुलक्षेमा वामाचारभीमा व्यभिचारानले विहितपातिव्रत्यहोमा प्रभापहसितहेमा असतीकुलललामायमाना सा रामा रामानुषक्तप्रेमा समासन्नकृतान्तनिशान्ताङ्-गणप्रान्तं विगलितदन्तं पलायितकरणपाटवोदन्तं जराक्रान्तं कृतप्रमोदपरिपाकान्तं कान्तमेकान्ततो लीलासरसविलासाभिरामेण नीतिनियमविरामेण रामेण समं विविधापहासवचनैररुन्तुदैरवमत्य विजहार स्वैरम्" इति।

प्रियपाठकमहाभागाः कदाऽपि केनापि अश्रुतमिदमपूर्वरहस्यमाधुनिकैरा-विष्कृतं शोधकम्मन्यैः।

भगवन्वाल्मीके श्रीरामसमकालीनोऽपि भवानधुनातनैरपि- सुलभतयाऽवगतं श्रीरामचरितं रहस्यमिदं कथं नाज्ञासीत्। सार्वभौमस्य रामस्य प्रचण्डदण्डभिया किं विज्ञातमपि नाविरकरोत्! सुलभकोपगौतमशापसाध्वसभ्रमेण किं तथ्यमपि तिरोधापयस्त्वम्। वृथा स्तूयसे सत्यवादी महर्षिरिति। नैव सुशकं महर्षिपदमधिगन्तुं भवादृशानामरसिकानां शास्त्रैकदृशाम्। श्वपाककरकमला-दपेयमपि पेयं नापिबः। नाश्ना अभक्ष्यं भक्ष्यम्। नागमस्त्वमगम्या-मागमवनविमुग्धः। आद्यः कविरपि नाद्यस्त्वमभवो जातिविभ्रंशकानाम्। तमसातरङ्गिणीसलिलावगाहननिलीनान्धतमसोऽपि न विदेशीयतमसामस्नासीः पावयितुमात्मानम्। नाच्छेच्छीर्यज्ञोपवीतम्। नालुनास्तिलकरेखां ललाटे। भूषणार्थमर्धविलूनकुन्तलभरान् शिरसि नादीधरः। नावाज्ञासीर्देवान्। नाप्यवामंस्था मान्यान्। न चावाजीगणःपितृगणम्। नत्ववाधीरयथा धर्मम्। नात्याक्षीः सत्कर्म। नावादीरनृतम्। न संध्योपासनामहासीः। नापाहसो वेद

-शास्त्राणि। नोद्विजीर्द्विजान्। नादूदुषो वर्णव्यवस्थाम्। नोदमूमुलः कुलपरम्पराम्। नादीधृषश्चाश्रमान्। ईदृशासदृशदिव्यगुणशून्याय ते केन वा विवेकविकलेन वितीर्णं धार्मिकदुर्वासनाशताकुलैः स्वप्नेऽप्यनाकाङ्क्षणीयं महर्षिपदम्। आस्तामिदं व्यंग्योक्ति-वक्रोक्ति-परिहासविडम्बनम्।

वाचकमहाशयाः कीदृशी विचारसरणिराधुनिकानां जगदिदं विभ्रमयतीति साधु सावधानमनसा विचार्यताम्। करतलामलकीकृत- परापरतत्त्वेन वाल्मीकिमुनिपुङ्गवेन स्वसाक्षिसिद्धानुभवेन यथार्थतया वर्णिते नितान्तपवित्रे स्मरणमात्रेण तापत्रयहरे श्रीरामचरित्रे दुस्सहदूषणमन्वेषयतामनासाद्य तपःक्लेशम्, अनाराध्य देवान्, अनालोच्य शास्त्रम्, अनाघ्राय ध्यानप्रसूनगन्धम् अनाकलय्य वेदार्थान्, अनास्वाद्य चोपनिषद्रसं निरायासमुपलब्धदिव्यच-क्षुषामधुनातनानामपूर्वविभ्रमकरकौशल्यं विस्मापयति विबुधदेशिकमपि।

ईदृशानां समूलं धर्मभावनामेव समुन्मूलयतां विचारापसदानां समय एव न प्रतीकारः क्रियेत, तर्हि नूनमचिरादेव सर्वतः प्रसृता अमी दुर्विचारा धर्मनामाऽपि निश्शेषं विदध्युरिति सघण्टाघोषमाचक्ष्महे। प्रार्थयामश्च सत्वरं जाग्रत' जाग्रत, जाग्रत, इति।

□□

# २२. तुलसीपूजनम्

## अथवा

## समुचितं प्रायश्चित्तम्।

आसारपुरे रमणीयः प्रासादः। तत्र हि न्यवात्सीदचिरादेव समुपलब्ध राजकीयाधिकारपदस्सुधाकरस्सहधर्मिण्या नवोढया गुणगणाढ्यया राकाभिधया। सुधाकरः देहेन भारतीयोऽपि मनसाचाचारेण विचारेण वैदेशिकः। विचित्रतमेऽस्मिन् जगति विचित्राः प्राणिनो दृश्यन्ते सर्वतः। विदेशे लब्धजन्मानोऽपि केचन महाशया निजदेशनीतिरीतिनिर्विण्णचेतसो भारतीयश्लाघनीयसंस्कृतौ भारतीयचारुतराचारे भारतीयोच्चतरविचारे भारतीयप्राचीनभारत्यां भारतीयशास्त्रेषु भारतीयपावनतीर्थेषु च बिभ्रति परमादरम्। दधते च श्रद्धाम्। परम् अपरे च मानुषक्रिमयः परैरप्यभिवाञ्छनीयसौभाग्यभरां सुखैकोदर्कां स्वसंस्कृतिं स्वाचारविचारपद्धतिं च दूरादवधीर्य स्तुवन्ति वैदेशिकीं संस्कृतिम्। अनुकुर्वन्ति च तदीयमाचारम्। आत्मसात्कुर्वन्ति च तद्विचारमसमीचीनमपि। तेष्वेव प्रथमगण्यतामानमावहत्यस्मदीयस्सुधाकरः। अकृतचौलानामिव बालानां तस्य मूर्धनि काकपक्षस्सत्यं काकपक्षसदृक्षतामावहन् स्वधारकस्य सुधारकस्य सुधाकरस्य हेयाहारविहारे एव नूनमाविष्करोति काकप्रकृतिताम्। शिखण्डस्तस्य तरुणस्यापि विवेकविकलबालतां पुरुषस्यापि शिखंडितां साधु व्यनक्तीव। निकृत्तकृष्णकेशविसरान्धकारो मस्तिष्कगभस्तिमालिनोऽस्तमावेदयतीव। तिलकशून्यीकृतललाटोऽमङ्गलवेदिकाश्रियं बिभर्ति। प्रज्वलदनला धूमवर्तिर्मानसे दन्दह्यमानसुविचारस्य धूममुद्गिरति वदनद्वारा मुहुर्मुहुः। गलपट्टिका निरुणद्धीव कण्ठान्तरेव धर्मानुकूलशब्दान्। एष विचित्रवेषभासुरस्सुधाकरस्साक्षाद्वैदेशिकपुरुषलब्धजनुरिव बाभात्यपरिचितानाम्। अनूचानकुलजनुरयं नैव धत्ते पावनतमाभिजनाभिमानम्। अस्य पूर्वजा अदूष्येण वैदुष्येण महोग्रेण तपसा महतीमेवान्वविन्दन्त प्रतिष्ठां भू-धनसंपत्तिं च। शास्त्रपाठ प्रवचनपारम्पर्यसिद्धये जगति सदाचारप्रवर्तनाय धर्मप्रसाराय च पूर्वतनैर्भूपतिभिरन्यैः पुण्यात्मभिः श्रीलैश्च परमया श्रद्धया

वितीर्णं धनादिकं स्वतनयमेधावित्वभ्रमान्धेन पित्रा जलधारावर्षं वृष्टं धनं सुधाकरो निषिद्धवैदेशिकविद्याधिगमाय दुराचरणाय धर्मविध्वंसाय व्यनियुङ्क्त किञ्चिदप्यशङ्कितमना अलज्जितचेताः। नैवालोचयदसौ दत्तधनानां स्वपितॄणां च स्वर्गे निवसतां तेषां गलदश्रुमलीमसानि धनदुर्व्ययजन्यदैन्यम्लानानि वदनानि। नाचिन्तयच्च हाहाकारद्विगुणितमुरस्ताडनध्वनिम्। न च व्यमर्शयच्च कोपात्प्र-स्फुरन्ति शापाक्षराणि। निगमान्तपाठस्थानमाक्रमत शृङ्गारमयाश्लीलवाङ्मय-सानुरागवाचनम्। प्रवचनपदमध्यारोहद्धर्मदूषण-प्रलयलपनम्। देवमन्दिरं पावनतामयासीच्छुनीसंचारेण। देवप्रतिमासीमानमाकर्षन् नग्ननटीप्रतिकृतयः। तीर्थकलशीस्थलमात्मसादकुर्वन्कषायपेयपात्राणि श्वेतमृण्मयानि। तीर्थपात्रं चषक-सुषमामपोषयत्। तीर्थं वारुण्यामन्तरधात्। नैवेद्यमभक्ष्ये वैश्वदेवं सहभोजने बलिहरणं बालिशाचरणे च। सुधारकस्सुधाकरस्सन्ध्यां वन्ध्यामिवाजहात्। जपं कर्णेजपमिव दूरत एव पर्यत्याक्षीत्। तपश्च तापप्रदममन्यत। विपुल-पापभारोद्वहनबलसंपन्नोऽपि लघुतममपि समच्छिनदात्मनः पावनं यज्ञोपवीतम्। वैश्वानरशिखामिव शिखामहासीद्दाहभीत्या। नाश्रुणोत् श्रुतिम्। नास्मरत्स्मृतीः। न परामर्शत्पुराणानि। नाकलयदिष्टावहं शिष्टाचारम्। केवलं बलीवर्द इव वनमहिष इव मदान्धः पुण्य-पापविवेकविकलः कार्याकार्यविचारविधुरो जातिं तिरस्कुर्वन् वर्णान् गर्हयन् आश्रमानवहेलयन् धर्मं दूषयन् समयमत्यवाहय-त्स्वच्छन्दम्। प्रथमत एवोच्छृङ्खलस्य परम्परागतभूसंपदो नियतविपुलवेतनस्य प्राप्ताधिकारस्य तस्य स्थितिर्मदिरामत्तस्य वृश्चिकदष्टस्य भूताविष्टस्य शाखामृग-स्यैवाऽऽसीदनिवारणीया।

एवं दुष्कर्मणाऽसतस्सतस्तस्य रमणी रमणीयरुपसंपन्ना पन्नगवेणी सुधामयवाणी सुश्रोणी सुखप्रासादश्रेणीभूतसमुज्ज्वलगुणश्रेणी साध्वीचूडामणीभूता राका सुशिक्षिताऽपि अनुद्धता विनयवती धर्मबद्धश्रद्धाचाभवत्। या किल प्रत्यहमुषसि समुत्थाय सुस्वर- मङ्गलगीतैःस्तुवन्ती भगवन्तं रमाकान्तं सम्मार्जनादिगृहकर्माणि निर्वर्तयति स्म प्रमोदभरेण। पर्यचरत्कुङ्कुमाक्षतैः बालतृणघासैश्च धेनुम्। तदनु शुचिसलिलस्नाता परिहितधौतवसना चाकरोत् भगवत्या गौर्याः पूजामतिभक्तिरसार्द्रचेतसा वल्लभसुमतिमर्थयमाना। सलिलेनाभिषिच्य समर्च्य च हरिद्रा -कुङ्कुममंङ्गलद्रव्याणि वृन्दावनं परिक्रम्य

नमस्कृत्य च प्रार्थयति स्म तुलसीदेवीमखण्डसौभाग्यप्राप्तये। एवं सर्वाणि धर्मकर्माणि सुधारकधवाविदितान्येवातनोत्प्रतिदिनं स्वाचर्यमाणधर्मकार्यभङ्गभिया।

एवं गच्छति काले एकदा रविवासरे पुरतो वृन्दावनं प्रस्थाप्य भगवतीं तुलसीं "नमस्तुलसि कल्याणि गोविन्दचरणप्रिये॥ निरस्य दुर्मतिं पत्युस्सुमतिं देहि सर्वदा" इति भक्तिपारवश्येन निमीलिताक्षी पत्युरनाचार - दुराचार - दुष्प्रज्ञतापनयनाय सगद्गदकंण्ठं सबाष्पप्रसरं च नाथमाना यदा तदेकताना समभवत्, तदा विरामवासरतया सदनएवावस्थितस्सुधाकरः केनचित्कार्यनिमित्तेन प्राविशदन्तस्सदनम्। धर्मकार्यमग्नां कान्तां निरीक्ष्यैव कोपानलेनापादतळादामस्तकं संतप्ततनू रोषारुणया दृशा किरन्निव स्फुलिङ्गान् प्रस्फुरिताधरः सुधारकधौरेयस्सुधाकरः आत्मसद्मनि ईदृशं धर्मकार्यं दुराचारमिवासहमानस्संतर्जयन्नवादीत् -'मूढे किमेवमस्मन्निकेतनं मूढकल्पनया धर्मकार्येण दूषयंती निकृन्तसि मे मर्माणि। किंवा ब्रूयुः यदि सुहृदः पश्येयुरिममनाचारम्। किं नोपहसेयुर्माम् बहिरेव सुधारकस्सुधाकर इति। किं न तिरस्कुर्युरन्ये सुधारणानेतारो माम्। किमिदमकार्यमारब्धं त्वयाद्य मम गौरवगिरिकुलिशायमानम्। बालिशे इयत्समयं मम सहवासे स्थिताऽपि किं न जानासि अनया कृत्या पत्युः कियती वेदना स्यादिति। किमिदं साध्वीलक्षणं पतिमनोविरुद्धाचरणम्। किंवा फलमचेतनक्षुद्रतरुपूजनेन। मनसाऽपि नाकलितं मया सुशिक्षिता मे दयिता ईदृशमकार्यं कुर्यादिति। किं न त्रपसे ईदृक्षमशिक्षितपामरप्रमदाजनोचितं कर्म कुर्वाणा। इममेव समयं लघुकथा नाटकादिसाहित्यवाचनेन वा रागपेटिकावादनेन वा यद्यनेष्यस्त्वं कियत्सामञ्जस्यमभविष्यत्,। कियन्मनोरञ्जनं समपत्स्यत। किं न वेत्सि मे सुधारणाप्रणयिताम् मूढधर्मनिराकरणप्रवणतां च। यत्कृते जातिमत्यजम्। कुलं कलुषितमाकलयम्। अनिन्दं स्वधर्मम्। अगर्हयं पूर्वजान्। अभक्षयमभक्ष्यम्। अपिबमपेयम्। अकरवमकार्यम्। अवामन्ये मातरम्। निराकरवं पितरम्। अभाययं भ्रार्तॄन्। निरभर्त्सयं बन्धून्। अपाहसं सुरान्। पराभवं भूसुरान्। किंबहुना। द्विजन्मतापिशुनं यज्ञोपवीतमप्यच्छिदम्। ईदृशोऽहं त्वामीदृशीमर्धाङ्गीं कथं जानीयाम्। यद्भूतं तत्क्षम्यते कथमपि

मया। परं नातःपरं सोढास्मि तवैतादृशं कुकर्म। यां क्षुद्रां देवतात्वेन पूजयन्ती मामवमन्यसे तां तुलसीं पादप्रहारेण वीथीमृत्तिकासहवासिनीं करिष्यामि। पश्य मे पौरुषम्। तवाभिमता तुलसी किंवा मे करिष्यति द्रक्ष्यामीति व्याहरन्नेव यदा पादमुदक्षिपत्प्रहाराय सुधाकरः, तदा कुपिता व्यालीव सरभसमुपसृत्य राका स्पष्टमाचष्ट भीतिलवास्पृष्टा निष्ठुरम्।

"नास्ति तवाधिकारो मदीयधार्मिककृत्ये हस्तक्षेपं विधातुं। किंपुनः पादप्रक्षेपं। उद्यतेन पादेन दूरतोऽपसर। यदि तथैव पुरस्सरसि नाहं स्थास्यामि तत्प्रतीकारमकुर्वाणा। नैव स्मराम्यस्मिन् क्षणे पति-पत्नीभावम्। अद्यास्मिन्विषये ममासि न पतिर्नाहं च पत्नी तव। स्वयमेव गोपायस्व स्वगौरवम्। न लज्जसे कथं सभासु सोच्चस्वरं च टेबलास्फलनपूर्वकं स्त्रीस्वातंत्र्यं प्रतिपादयन् उपन्यासैरद्य मे स्वकीये कार्ये विरोधम् असह्यं उपरोधं वितन्वानः। प्रिय प्राणेभ्योऽपि प्रियतमं पातिव्रत्यम्। तत्परिपालनाय प्राणानपि समर्पयितुं सन्नद्धास्मि। सदा तव श्रेयसे एव विदधामि तुलसीपूजना - दिधार्मिकविधीन् परमकल्याण विधायकान्। जडमेडमूकं वा रोगिणं मूर्खं सोन्मादं निर्धनं वा पतिं निर्मायं सस्नेहं च शुश्रूषितुं साग्रहं उपदिशन्त्यपि स्मृतिः पुराणसंहतिश्च पतितपतिपरित्यागं सममेव सनिर्बन्धमादिशति इति साधुमनस्याकलनीयं भवता। जानात्येव भवान् कियत्या श्रद्धया त्वामहं शुश्रूषेऽगणितदेहायासं पातिव्रत्यमेव परमं व्रतं मन्यमानाऽहम्। कदाचिदपि वा तवाहं किं प्रतीपमगमम्। किमवोचं निष्ठुरं वचनम्। किमतनवं विप्रियम्। किं प्रमाद्ये कर्तव्यात्कर्मणः। येन मे सतीत्वं व्याहन्येत। परं पातित्यं पतिगतं सुदतीसतीत्वपरिपन्थीति पुनरेकदा निर्दाक्षिण्यमाचक्षे ते सुबुद्धिजननाय। किमिदं पौरुषलक्षणं पावनतमे पूज्यतमे देवताधिष्ठाने पादप्रहाराय पादोद्यमनम्। यदि वास्तवं पौरुषमस्ति इममेव चरणं निधेहि धर्मद्वेषिणां शिरस्सु। सत्कर्मतत्परायां मय्याविष्कृतं कोपसंरम्भं दर्शय धर्मद्रोहिषु। "गृहे सिंहीभूतो बहिरथ नरःश्वा भवति हा" जाति -कुलत्यागे अभक्ष्यभक्षणेऽपेयपानेऽकार्यकरणे यज्ञोपवीतच्छेदने को वा पराक्रमः। यः कश्चन पामरः पशुर्वा तादृशं कर्म कर्तुं प्रभवत्येव। किं पशवो जुगुप्सन्तेऽभक्ष्यभक्षणात् स्वेच्छाविहाराद्वा। यज्ञोपवीतत्रोटने प्रकटितां शक्तिं

उपयुङ्क्ष्व बाह्यान्तरशत्रुविच्छेदे। तन्तुच्छेदने का वा महती पुरुषस्य। पुराण-पुरुषस्य पूर्वजानामृषीणां चापहासे किं बलमावश्यकम्। सुलभतया बालैरपि बालिशैरपि बालेयकल्पैरपि बालवद्भिरपि कर्तुं सुशकमिदम्। न तस्य शिक्षणस्य आवश्यकता। न वा मेधाविताया:। नापि साहित्यदुर्विदग्ध-ताया:। न चाधिकारस्य नैव प्रतिष्ठाया:। सन्त्येव बहवो विधर्मीयास्ते पावनतमस्य सनातनधर्मस्य प्रातस्मरणीयानां पुण्यशालिनां प्राक्तनपुरुषाणाम-वहेलने गर्हणे च ये सदैव बद्धपरिकरा:। तेष्वेव भवतो गणने का वा शोभा। तेषां समुज्ज्वलं स्वधर्माभिमानं, तव च नितान्तं निन्दनीयं स्वधर्मद्रोहं क्षणमपि मदान्धेक्षण वृथा लब्धशिक्षण कृताभक्ष्यभक्षण विगतपरलोकरक्षण म्लेच्छलक्षण पशुविलक्षणम्मन्य विचक्षणम्मन्य समुद्रिक्तविधर्मक्षण प्राणवल्लभ समीक्षस्व। विन्दस्व च मन्दमपि मन्दाक्षं मानसे। क्वचिदपि कदाचिदपि किं दृष्टं श्रुतं वा विधर्मीयैस्स्वधर्मदूषणं स्वदेवापहसनं मान्यस्वपूर्वजावहेलनं वा कृतं क्रियमाणं च। तदनुकरणव्यसनिना त्वया कुतोऽयं सुगुणो नात्मसादकारि धीमता। अथवा परेषां किं दुर्गुणमात्रग्रहणव्रतमेव स्वीकृतम्। समुद्यतपादं सपदि संकुच्य निधायावनौ दूरतोऽपसर यद्यात्मगौरवं रिरक्षिषसि। आर्यललना कथमपि न सहंते स्वधर्मविडम्बनां केनाऽपि वा कृताम्। इयतैव सम्यगवबुध्य भाविनं परिणामं जागृत: प्रतिपद्यस्व समुचितं पन्थानम्। पौरुषापचयसूचकेन घ्राणरन्ध्राधो विश्रान्तेन श्मश्रुणा दुष्प्रेक्ष्यं ते मुखं न दिदृक्षामि क्षणमपि।

प्राचीना ललना वीरपत्नी वीरजननी इति विश्रुतयशसा कृतार्थ-मात्मानममन्यन्त मान्या धन्यतमा अनन्यसामान्यगुणा:। परं त्वद्य हन्त "पाखण्डिपुरन्ध्री" इत्यसह्यतमया दुष्कीर्त्या पीडिताऽ नुत्सुकाऽस्मि प्राणधारण एव। इयदेव न मे दु:खस्य कारणम्। किंतु 'कारणगुणा: कार्ये परिणमन्ति' इति न्यायेन त्वत्तो मदुदरात् जायमाना संततिरपि पाखण्डिन्ये व भूयादिति दुरंतेन चिन्तासंतापेन संततं संताम्यति हन्त स्वान्तं मे । किं करवाणि। एवं वीरपत्नीत्वे वीरप्रसूत्वे समुत्कटाभिलाषाऽप्यहं पाखण्डिपत्नी पाखण्डिजननी संजाता भवितास्मि। एतदपेक्षया असन्तानत्वं अनूढत्वं वैधव्यमेव वरं मन्ये। मादृशाभाग्यभाजनसुवासिनीभ्य: ता: कुमार्यो वन्ध्या विधवा एव धन्या मान्याश्च इति मन्ये, याश्च धर्मद्रोहिणं धवाधमं

नालभन्त, याश्च नासुवत धर्मदूषकं तनयम्। नाहं तथा शोचे सांसारिकविपदः यथा सत्कुलस्य दुःस्संतति- प्रसवपरिभवात्। नाथ, साञ्जलिबंन्धं सांचलप्रसरं सगाढस्वयंग्रहपरिष्वंगं सचिबुकग्रहं सपादग्रहं च प्रार्थये परिहर सत्वरमनिष्टानुबन्धिनं धर्मद्रोहदुराग्रहमिमम्। प्रीणय मामव्याजप्रणयिनीम्। सन्तोषय पितरौ। आनन्दय बन्धून्।

असारे खलु संसारे परिणतःप्रणय एव स्वारस्यमुपजनयति दम्पत्योः। स च प्रणयः पत्युः पौरुषादिगुणगरिम्णा समेधते। अविवेकेन च धत्ते ह्रसिमानम्। पामरजनानुरञ्जनधिया वा बालिशेषु गौरवाधिजिगमिषया वा त्वत्कृत दुराचारजुगुप्सया त्वत्संपर्कं दूरादेव परिहरत्सु विशुद्धचरितेषु प्रतीकारदुराशयेन लेखनभाषणादिना बालिशताप्रकटनं शुन इव रसनाशिथिलीकरणं च निरुणद्धि प्रणयप्रवाहम् इति सम्यगेवावेहि सूक्ष्मदृशा। अव्यापारेषु वृथा व्ययीक्रियमाणं मेधाबलं सम्यगुपयुङ्क्ष्व सत्कर्मणि। तादृशं त्वां समुत्कटप्रणयरसपरिप्लुता स्तनोपपीडं बाढं परिरब्धुमुत्कण्ठेतरामहम्। इयता समयेन सहधर्मिण्या कृतं यत्कर्तव्यम्। उपदिष्टं यदुपदेष्टव्यम्। इतः परं प्राणनाथ एव प्रमाणम्'।

समुच्छलदभिमानं साध्वीवचनमिदमाकर्ण्य सुधारकस्य सुधाकरस्य दीनवदनचित्रं विषण्ण हृदयचित्रं च मानसपट एवावलोकयन्तु कुशलाश्च वाचका अन्तर्दृशा।

❑❑

# २३. सती चिन्तादेवी

## (ऐतिहासिकी कथा)

अतीतेऽपि वत्सराणां शतकत्रये नाद्यापि विस्मृतिपथमुपगतं साधुसीमंतिनी-चिंतनीयपवित्रचरित्रायाश्चिन्तादेव्याःपावनमभिधानम्। बुन्देलखण्डे निर्जने किलैकस्मिन् प्रदेशे सहस्रशो नरा नार्यश्च सम्मिलिता अद्यापि सादरमर्चयन्ति चिन्तादेव्या स्सहगमनपावनां वेदिकां क्षुद्रायतनवर्तिनीम्। परमिदं सहगमनं न-मृतस्य वल्लभस्य देहेन समम् किंतु जीवतोऽपि तस्यात्मनैति नितान्तं विस्मयावहं रोमाञ्चकारि प्राचीनभारतभामिनीजनस्योजस्विताप्रत्यायकमिदं कथानकम्।

कालिन्दीनदीतटे काल्पी नाम काचन नगरी। तस्यां कस्यचन शूरस्य कन्येयं चिन्तादेवी या बाल्यतो मातृविहीना पितृलालिता समुपचितसमररसमये समये लब्धजनुः। तदा शूरास्तन्द्रासहजजृम्भारम्भायापि नासादयन्नवसरम्। अश्वस्कन्धे एवोपविश्य भोजनं पर्याण एव शयनमासीत् सैनिकानाम्। चिन्ताया बाल्यमतीयाय समरभूमावेव। पिता किल तां तरुगहने वने कुटीरे विन्यस्य रणाङ्गणमुपधावति स्म। तदानीमेकाकिनी निश्चिन्ता चिन्ता मृदा दुर्गं निर्माय पुनस्तद्भङ्गलीलां खेलति स्म। आसायमनागतेऽपि पितरि सा निर्जने वने नाविन्दत भयलेशमपि। एवं क्षुधावेदनामविगणय्य नैका अनैषीन्निशाः। सा कम्पमानकन्धरैर्दशनविहीनतयाऽस्फुटवर्णोच्चारैर्जरठाजनैर्गदितकाक-चटक कथाभिरात्मानं न व्यनोदयत् किंतु वीराणामात्म-बलिदानकथाभिस्सावेशभटमुखनिस्सृताभिर्नवस्फूर्तिदायिनीभिः।

एकदाऽतिक्रान्तेऽपि दिनत्रये तया नाश्रावि जनकवार्ताऽपि। तथाप्यविषण्णान्तरा विचिन्तयन्त्यासीदरिभिर्दुर्गमदुर्गरचनाम्। निशायां शयाना तादृशानेव ददर्श स्वप्नान्। तृतीयदिने सायंसमये पितृसहचराः केचनाभ्येत्य साश्रुनयनास्सगद्गदकण्ठं व्यलपन् विव्हलान्तराः। विस्मयस्तिमिता चिन्ता

"क्वाऽस्ति मे जनयिता। कुतो वा रुद्यते वीरैर्भवद्भिः" इति पर्यपृच्छदनुद्विग्नैव। अदत्तोत्तरास्ते शोकातिरेकादेकमप्यक्षरमुच्चारयितुमशक्नुवाना पुनर्यदाऽधिकमरुदन् तदा सा नूनमज्ञासीदकथितेऽपि तातस्य परलोकातिथित्वम्। तदा त्रयोदशवर्षीया सा धीरा बालिका नोत्ससर्ज नयनाद् बाष्पबिन्दुमपि। मुखचन्द्रोऽपि तस्या न किञ्चिदपि मालिन्यमवाप शोकवारिदेन निश्वसितवायुसहचरेण। स्मितमुखी सा जगाद तदा 'पितरि मे वीरस्वर्गं गते संतोष्टव्येऽस्मिन् प्रसंगे कुतो वा शोकावेगः। यदि रुग्णशय्यायां पतितस्तनुमत्यक्षत् तर्हि परिदेवनमुचितमभविष्यत्। वीराणां किमितोऽन्यद्भाग्यं श्लाघ्यतरादभीष्टतमात् रणे मरणात्। किमितोऽन्यत्पारितोषिकं पराक्रमस्य। नायं विलापस्य समयः, किन्तु संतोषभरस्येति।

कश्चन सैनिको व्याजहार तदा कातरस्वरेण। 'वयं न शोचामस्ते पितृकृते। परम् अनाथायास्ते शोच्यां स्थितिं परिचिन्त्य। कुत्र वा स्थास्यते भवत्येतःपरम्' इति। चिन्ता गम्भीरस्वरेणाह – 'मद्विषयकचिन्तया नायास्यतामात्मा वृथा भवद्भिः। अहं शूरपितुः कन्याऽस्मि। तमेवानुचिकीर्षामि तादृशैरेव कर्मभिः। स आत्मनो मातृभूमिं रिपुभ्यो मोचयितुमेव धारातीर्थे न्यमज्जयदात्मानं महाभागः। स एवादर्शो मे चक्षुषोःपुरतः परिस्फुरति। तदधुना गच्छत। यदि मम जनके वास्तवो वोऽभिमानस्तर्हि प्रत्यर्थिकृत निकृतिप्रतीकाराय संगृह्यन्तां सैनिकाः। आनीयतां समरक्षमो वाजिवरः। समुपाह्रियन्तां शस्त्राणि यैः किल कृन्तितैःरिपुशिरोभिः कन्दुकक्रीडां करिष्यामि। भगवतोऽनुग्रहश्चेत् भवत्साहाय्येनाहवे विजयाख्यया सख्या संगता स्याम्। यदि वैरिबलासहनतया रणपराङ्मुखी भवेयं तर्हि तदैव मे मस्तकं निशिततरकरवालेन कबन्धाद्दूरीक्रियताम्। इत्येव मे प्रार्थना भवत्तु। सांप्रतं गम्यतां पुनस्समराङ्गणम्"।

व्यतीयुः पंच वसन्तमासाः। सर्वतः प्रभुत्वमाविश्चकार चिन्ता देवी। पराभूताः प्रत्यर्थिनः। विजयश्रियमिव मूर्तिमतीं शरप्रहारभीकरे समरे निश्शंकं निर्भयं चावस्थितां तां निरीक्ष्यैव सैनिका नितरामुत्साहशालिनस्समपद्यन्त। पुरो गच्छन्त्यां तस्यां वीरास्ते पुरुषाः कथं न पुरस्सरेयुः। सुन्दरीणां

साम्मुख्ये शूराणां शूरत्वमजेयमेव स्यात्। रमणीनां वाक्प्रहारो हि योद्धृभ्यः आत्मसमर्पणाय गुप्तसंदेश एव। तासां कटाक्षप्रेक्षणं क्लीबानां हृदयेष्वपि पौरुषाङ्कुरमुद्भावयेत्। चिन्तायाः विलसन्ती कान्तिः विमला च कीर्तिःसर्वतश्शूरानाकृष्य प्रावेशयतां सैन्येषु। मरणभयरहिता वीरमधुकराः कुसुममिव पर्यवृण्वन्सामोदमामोदभरसमास्वादनस्पृहयालवः।

तेषु सैनिकेषु रत्नसिंहो नाम रजपूतयुवाऽप्येक आसीत्। चिन्तादेव्या सैनिकास्तस्याः एकशब्देनैव सर्वस्वत्यागे बद्धादराः संकेतमात्रेण प्राणसमर्पणे सन्नद्धाः केवलं संदेशेन ताराऽऽनयनाय गगनमप्युत्पतितुं समुत्सुका आसन्। भटगणरत्नसरे मध्यहीरायमाणे रत्नसिंहे विशेषतो मनसा स्निह्यति स्म चिन्ता। इतरेषु भटेषु आत्मश्लाघातत्परेष्वपि रत्नसिंहो नावलेपलवेनाऽपि संस्पृष्टः। इतरेषां यत्किञ्चिदपि कर्म चिन्ताप्रेमफलोद्देशकमेव न पुनः कर्तव्यबुध्या कृतम्। शान्तस्वभावः आत्मकत्थनकथानभिज्ञश्च रत्नसिंहस्तु कर्तव्यबुद्ध्यैव कर्माणि कुर्वन् मध्येपथं शार्दूलं जघ्निवानपि न कस्यापि पुरतस्तां वार्तां आवेदयत्। तस्य नम्रता विनयश्च संकोचसीमानमत्यक्रमताम्। इतरेषां चिन्ताविषयप्रेम्णि विलासो विलसति स्म। परं रत्नसिंहप्रणये त्यागः तपश्च समौत्कट्येन व्यभ्राजताम्। अपरे सुखनिद्रया निशासमयमत्यवाहयन्। रत्नसिंहस्तु तारकागणनयैव विभावरीं गमयामास जागरुकएव। परे चिन्तादेवीयं "मामेव वृणीते मामेव वृणीत" इतिभावनापरवशतया प्रमोदपारावारे न्यमज्जन्। रत्नसिंहस्तु नैराश्यमेवाभजत्तस्मिन् विषये। तत्कृते कमपि नाद्वेट् सः। चिन्तायाः पुरतः इतरेषां संभाषणपद्धतिं विविधव्यापाररीतिं च विलोक्य विस्मयस्तिमित आत्मनःसाधुतायै एव कदाचित् कुप्यति स्म। अबलाचित्ताकर्षकं गुणं कुतो नात्मनि न्यधा इति भगवन्तं मनसा पर्ययुङ्क्त सरलहृदयः। को वा जानीयादस्य मनोव्यथाम्। अन्तरेव तप्यति स्म दुरन्ताभिश्चिन्तासंततिभिः। अतिक्रान्तो निशीथसमयः। चिन्ता चात्मनः शिबिरे विश्रान्ति सुखमनुभवति स्म। सर्वे सैनिकाः निश्चिन्तया सुप्ताः। पुरतो घोरतरमेकमरण्यम्। शैलस्य पश्चाद्भागे रिपुबलमेकं कृतशिबिरं दृश्यते। प्रातरेव तदभियोक्तुं निरणैषीच्चिन्ता। आत्मनो वार्ता प्रायशश्शत्रुभिर्नाज्ञायीति सा मुधाऽमन्यत। परं तस्यास्सैनिकेषु कोऽपि

कृतघ्नश्शत्रुभिस्सम्मिलितो गौप्येन केनाप्यविज्ञातो बहिर्भक्तिभावं प्रदर्शयन् चिन्तादेव्यांप्रतिदिनं अत्रत्यं सकलमुदन्तमज्ञापयत् वैरिणाम्। ततोऽरिभिस्संमंत्र्य नियुक्तास्त्रयः पुरुषाश्श्वापदा इव निश्शब्दं पदं निक्षिपन्तो वनमतिक्रम्य वृक्षान्तरितशरीराः चिन्ताग्रहणचिन्तातुरास्तस्याशिशबिरं पर्यवेक्षमाणास्तस्थुः। चिन्तासैन्यानां सुप्ततया नात्मनः कार्यसिद्धौ न किञ्चिदपि संदिदिहिरे ते। तरुमूलान्निर्गतास्ते त्रयः पुरुषा मकरा इव शनैःपुरस्सरन्तः चिन्ताशिबिर-मुपागच्छन्।

गाढनिद्राविलीना सेना। द्वारपालकोऽपि परिश्रमसहजस्वापवशतामयासीत्। परं तदा एक एव चिन्तायाः शिबिरसमीपे कोऽप्यजागरीत् शिशिरबाधया कम्पमानसंकुचितशरीरः। सोऽयं वीररत्नायमाणो रत्नसिंह एव। सोऽयं नास्यामेव तामस्यां जागृत आसीत् किंतु प्रतिनिशं तादृशो व्यासंग आसीत्त स्य घातुकानां पदशब्दं निशम्य समुत्थितस्तत्क्षणं कोशान्निस्सार्य करालं करवालं सम्मुखमापततो नरान्निरीक्षमाणो व्यचिन्तयत्। किमिदानीं करवाणि। अधुना कोऽपि शब्दः समुत्थितः स्यात्तर्हि सहसा विनष्टस्वापतया अस्मत्सैनिकास्संभ्राताः किङ्कर्तव्यतामूढाः अन्धकारे स्व-परविज्ञान-विधुराः परस्परं शस्त्रप्रहारेण नश्येयुः। अथ एकस्यैव मे वीरपुरुषत्रयाभिगमनं मृत्युदेवताव्हानमेव। विचारकरणेऽपि नास्तीदानीमवसरः इति विचारयन्नेव कृतनिर्धारो रत्नसिंहः स्वयमेक एव तेषु प्रतिवीरेषु व्यापारयामास शस्त्रम्। क्षणमश्रूयत प्रचालितानामायुधानां मिथस्संघर्षजो ध्वनिः। क्षणादेव विलीनस्सः। पुनःस्तब्धं तत्कटकम्। तत्र वीरत्रयं यमपुरीमवाप। एकस्तु मूर्च्छया निश्चेतनः पतितः।

प्रातस्तु प्रबुद्धा चिन्ता सहसा ददर्श भूमौ पतितान् चतुरःपुरुषान्। चकम्पे हृदयं तस्याः। समीपमुपसृत्य सा आक्रमणार्थमुपागतमपश्यत् वैरिवीरत्रयं परासुम्, श्वासोच्छवासानुमेयजीवितं रत्नसिंहं च। वृत्तमवागच्छत्सर्वं केनाऽप्य-निवेदितमपि। जितं शूरत्वेन नारीत्वम्। पितृमरणेऽपि बाष्पकणिकाम-प्यमुक्तवती कुमारी सा चिन्ता इदानीं विपुलनयनकासारतः अवाहयदश्रुकुल्यामे-वाविरतप्रवाहम्। रमणीरत्नोपमाना सा निश्चेष्टं रत्नसिंहमात्मन उत्सङ्गे

आदाय हृदयविवाहमण्टपे प्रेमकुसुमग्रथितां स्वयंवरमालामर्पयामास वीरवरस्य तस्य कण्ठे।

गतेऽपि मासे नोन्मिमील लोचनयुगलं रत्नसिंहस्य, नापि निमिमीलतुः चिन्तातुरायाः चिन्तायाश्चक्षुषी। क्षणमपि न परिजहार तस्य सान्निध्यं सचिन्ता चिन्ता। न सस्मार निजं राज्यमपि। अचिरादेवाभियोत्स्यमानं नाजीगणत् रिपुगणम्। सर्वस्वमपि समर्पयद्रत्नसिंहाय। पुनःकतिपयेषु दिनेषु यातेषु प्रोन्मीलितचक्षुः रत्नसिंहः पर्यङ्के शयानमात्मानं सविधे समुपविश्य व्यजनेन वीजयन्तीं चिन्तां च सममेवालोक्य प्रतिभटानामुपकारं मनसा मन्यमानो मूर्च्छामपि बहुमानयंश्च 'कोमलाङ्गि अलमायासेन। व्यजनग्रहणेन द्विगुणीभूतश्चारुणिमा ते पाणितले' इत्यवादीदस्फुटस्वरेण।

चिन्तायाःहृदयमिदानीमखंडमपारं च स्वर्गसुखं समीपमन्वमंस्त। मासात्पूर्वं मूर्च्छया निश्चेतनता मापन्नशरीरस्य रत्नसिंहस्य पुनरद्य वदनतो निसृतममृतायमानं वचनं निशम्य चिन्तायाः सीमानमतीयाय प्रमोदभरः। स्नेहपूरितस्वरेण मञ्जुभाषिणी बभाण -प्राणनाथ, व्यजनवीजनं यदि दुःखावहं स्यात्तर्हि जगति किंवाऽन्यत्सुखाय कल्पेत। नाहंजाने' इति। 'प्राणनाथ' इति प्रेमाव्हानशब्दे विलक्षणा काऽपि शक्तिरासीदन्तर्हिता। यामाकर्ण्य किमपि तेजो दधार चक्षुर्युगलं रत्नसिंहस्य। प्राद्योतत म्लानमुखमुद्रा। संचचार नवजीवनमङ्गेषु स्फूर्तिमयम्। तस्मिन् जीवने महीयानेवोत्साहः, अपरिमितं माधुर्यं, समुत्कटश्चोल्लासः सहजा करुणा च सममिलन्। आत्मनो भुजे किमप्यलौकिकं बलं स्यादित्यमंस्त रत्नसिंहः। सकलमेव जगतीतलं नूनं जयेयमेवेति तस्य चेतसि समुदपद्यत कोऽपि विस्रम्भः। उत्पत्य गगनं **स्पृशेयम्,** गिरिमपि विदारयेयमिति समजन्यात्मप्रत्ययस्तस्मिन्। कदाऽप्यननुभूतां तृप्ति**मध्यगच्छत्सः**। प्रसन्ने परमात्मनि वरान्दातुं सन्निहितेऽपि न तस्माद् वृणे **वरान् इति** भावमाविरभावयन्मुखमुद्रया। न कस्मिन्नपि वस्तुनि बबन्धाभिलाषं **तन्नारीरत्नमन्तरा**। कोऽप्यभिमानोऽपि संजातस्तस्य मानसे 'न कोऽप्यस्ति **मत्तस्सुखाधिको** भाग्यशाली इति।

चिन्ता पुनराचचक्षे **'नूनं मत्कृते** महत्येव संकटे निपातितश्चात्मा नितरामायासितः'।

समुत्तिष्ठन् रत्नसिंहो जगाद 'विना तपो नाभीष्टसिद्धिः'।

चिन्ता रत्नसिंहमुपवेशयन्ती कोमलकरकमलेन तस्य पाणितलं परामृश्य 'नैतत्सिद्धयेऽकारि किमपि कार्यम्। कुतो वा वृथा निगद्यतेऽसत्यम्। अबला इति मामरक्षद्भवान्। अन्याऽपि यदि काचन स्त्री तदाऽभविष्यत् तर्ह्यपि एवमेव दयालुर्महाभागो नूनमरक्षिष्यदेवेति बाढं वेद्मि। सत्ये हृद्गते कथनीये 'आजन्मकौमार्येणैव स्थातव्यमिति निश्चितमासीन्मया। परं भवदीयोऽयमात्मोत्सर्गो भग्नामकरोन्मे प्रतिज्ञाम्। वीरवरस्य पितुरुत्सङ्गे पोषणमधिगताया मे हृदयं मरणादभीरवे एव समर्पणीयं नान्यस्मै सार्वभौमायापि। रसिकानां हास्यविनोदविलासाय मल्लानां शक्तये न दास्यामि तिलमूल्यमपि। तेषां नटनं विनोदमात्रमेवावगच्छाम्यहम्। भवतो हृदय एव निजां त्यागशक्तिमवालोकयम्। अतो भवतो दासीभूताऽस्मि न केवलमद्यप्रभृति बहोः कालादपि'।

प्रथमा प्रणयरात्रिस्तयोः। प्रेमियुगलहृदयसागरे आशानुरागतरङ्गा अनृत्यन्। सर्वत्र प्रासरत् प्रेममयी ज्योत्स्ना। तस्मिन् मृदुस्मितकौमुदी तेजसि विहरतोः प्रेमिचकोरयोः प्रावर्तत प्रेमालापकलकूजितम्।

प्रायो विधिर्नसहते प्रणयिनोश्चिरं विलाससुखम्। प्रणयसंलापपरवशतया कमप्यननुभूतपूर्वमनिर्वाच्यं विस्मृतान्यव्यापारममन्दमानन्दमनुभवतोस्तयोरकस्मात् दुर्गमुपसन्ना रिपुवरूथिनीति वार्ता कर्णपथमियाय। चिन्ता संभ्रान्ता भयसहचर्या चिन्तया। शूराग्रेसरो रत्नसिंहः स्वीचकार करेऽरिभीकरं करवालम्।

चिन्ता भयकातरया प्रेमपूरितया दृशा विलोकयन्ती तमुवाच "अन्ये सैनिकाः प्रहीयन्तां शत्रुनिर्दलनाय। भवता नैव गन्तव्यमद्य।"

'बहवो दृश्यन्ते शात्रवाः। तदहमपि यास्यामि समरभूमिम्।' इत्यावेद्य गुलिकानलिकां दधार स्कन्धे रत्नसिंहः।

'तथा सति भवन्तमनुयास्याम्यहमपि वीरसुता वीरसतीत्वमाकाङ्क्षमाणा'

'मा तथा कुरु मुग्धे। शत्रुबलनिर्दलनं कृत्वाऽचिरादेवागमिष्यामि त्वत्प्रेम कटाक्षातिथ्यसुखमनुभवितुमहम्। प्रणयरात्रिरियं विजयरात्रिर्भूयादिति दृश्यते किलेश्वरसंकेतः।' 'कुतो वा न जाने मनो मे विक्लवीभूतमधुना। भवतो रणयात्रां नानुमन्यते मदीयं चेतः। रत्नसिंहस्तेन सहजरमणीय प्रेमप्रवाह-वाहिनाऽऽग्रहेण विव्हलितान्तःकरणश्चिन्तां निरन्तरमाश्लिष्य समाचचक्षे-'प्रिये अलं भयसंभ्रमेण। प्रभातादर्वागेव विजयश्रीसपत्न्यास्ते मधुराधरमधुपानेन रणपरिश्रममपनेष्यांमि'।

चिन्ता रत्नसिंहस्यांसे विन्यस्य कोमलभुजलतां बाष्पपूरितनयना न्यगादीत् 'विजयादनन्तरमत्रागमने नैव विलम्बो विधेयः क्षणमपि। देहमात्रेणात्र स्थिताऽस्मि। मनसा भवन्तमेवानुगन्ताऽस्मि। वीरसुता वीरसतीचाहं कथं निरुन्ध्यां रणप्रयाणम्। प्रतिदिनं निवेद्यतां रणवार्ता चारमुखेन। समयं निरीक्ष्य रिपुरभियुज्यताम्। दूराद्दर्शनमात्रे सहसा वीरावेशेन परेष्वाक्रमणं भवतस्स्वभावः। सर्वतो जागरूकतया स्थेयं प्रमादबहुले समरे। समराङ्गणाभिमुखं गच्छतो भवतो वैरिजनादृश्यपृष्ठभागमवेक्षमाणाऽचिरादेव समरापराङ्मुखस्य विजयिनः प्रसन्नं वदनं मन्दस्मितोत्फुल्लया दृशा दिदृक्षामि प्रमोदपरवती।"

चिन्ताया नितांतमासीदन्तरङ्गं दुरन्तचिन्तासंतत्याऽक्रांतम्। विजयलालसा-साम्राज्ये भोगलालसा प्राधान्यं प्रापदधुना। प्रतिभटान् निजशौर्येण कम्पयन्ती वीरबाला चिन्ता नितरां चकम्पे रत्नसिंहस्य भाव्यत्याहितशङ्कया। हयमारूढं रत्नसिंहं विलोक्य सा मनसा प्रार्थयामास विजयाय भगवतीं कुलदेवताम्। दुर्ग शिखरमारूढा यावद्दर्शनं तमेव निर्निमेषया दृष्ट्या पश्यन्ती अदृश्यतामुपगते च तस्मिन् तां रात्रिं तत्रैव निनाय किञ्चिदिव लब्धनिद्रा निशावसान शिशिरसमीरसंपर्केण। प्राभातिकेषु सुवर्णसोदरेषु बालभास्कर-किरणेषु तरुशाखासंधिजालेभ्यो धरां स्पृशत्सुपुनर्मोहविस्मृतिमधासीत्। शून्यतामयासिषुर्दशदिशः। चिन्तानलज्वालातप्ता सा दुर्गादग्रतोऽवरुह्य शयनागारं प्रविश्य शय्यायां निपत्य वसनाञ्चलेन मुखमावृत्य विललाप बाला दैवविहतं प्रेमपरिपाकमजानाना।

सहचरैस्सैनिकैस्सह रणाभिमुखं पदं निक्षिपन्नपि मनसा गृहाभिमुख एवासीत् रत्नसिंहश्चिन्ताप्रणयपाशबद्धः समागमसुखलालसागृहीतचेताः। रमणीप्रणयो हि रुणद्धि रणप्रवणतां पराक्रमिणोऽपि पुरुषस्य। अतस्समासन्ने समर-प्रदेशेऽनुयायिवर्गं सहसा विहाय तेनाज्ञातः क्वाऽपि निलिल्ये रत्नसिंहःसकृदपि वा प्रणयसुखानुबुभूषया। ततश्च नायकविहीनां शिथिलितोत्साहां च चिन्तादेव्याश्चमूं सकलां शौर्यसंभृतामपि भृशमवासादयद्विपुलं रिपुबलम्।

अद्य चिन्ताया हृदयं कुतोऽपि वा कारणात् नैकविधाभिः शङ्काभिः पर्याकुलमासीत्। धीरायास्तस्या दृढं चेतः पुरा कदाऽपि वा नैवं दौर्बल्यमवाप। शूरपुरस्सरा बुंदेलसैनिका न कदाऽपि पराजीयेरन् इति दृढप्रत्ययोऽपि तस्या अद्य शिथिलीभूतः। हन्त अभागिन्यास्तस्या ललाटे ब्रह्मणा नैवालेखि प्रेमसुखानुभोगः। तथा न चेत् बाल्य एव तस्याः कुतो वा परलोकमगान्माता। आसन्नयौवने पिताऽपि वा कुतस्तत्याज भूलोकम्। आजनकनिधनादियत्समयं दिनमपि नैकं सुखेन निनाय सा मनस्विनी बाला। नाधुनाऽपि शान्तं दुर्विधेस्ताण्डवनृत्यम्। दुर्बले तस्याश्चेतसि किलाद्य नवीनैका भावना प्रादुरभूत् 'प्रवर्तमाने समरे यदि प्रियतमं रत्नसिंहं रक्षेद्देवस्तर्हि कस्मिंश्चन क्षुद्रतमे ग्रामे सानन्दमुषित्वा ऽनवरतं पतिदेवतामाराध्य कुर्यां जीवनसाफल्यम्। पुनरेवं युद्धवार्तामपि न श्रुणोमि' इति। एवं तस्या हृदि प्रथममेवोदभूदियं नारीत्वभावना।

संध्यासमयः। भगवान् भानुरपि पराजितसैनिक इवावनतशिरा कुत्रचिदपि निलीनभवनाय स्थानमन्वेषयन्निव बभासे। तस्मिन् व्यतिकरे कश्चनाभ्येत्य निश्शस्त्रस्सैनिकस्तूष्णीमतिष्ठच्चिन्तायाः पुरतः। तदवलोक्यैव वज्रपात वेदनामनुबभूव सा। मर्माहतेव क्षणमुपविवेश वसुधायाम्। पुनरुत्थाय तं भटं कातरस्वरेण पप्रच्छ -'रणे के केऽवशिष्टाः' 'न कोऽपि, न कोऽपि'।

चिन्ताऽधोमुखी दुःखभरेण स्थातुमशक्नुवाना भूमावुपविष्टा पुनरपृच्छत्। 'किं वैरिणस्समासन्नाः'।

'नितरामेव दुर्गसमीपमनुप्राप्ताः'।

'तथा चेत् सत्वरं सज्जीक्रियतां चिता'। 'अधुनाऽपि वयं भवत्याः कृते रिपुभिर्योद्धुं सन्नद्धा एव स्मः तृणीकृतप्राणाः'।

'यदिष्टं तत्क्रियतां भवद्भिः। मदीयं कर्तव्यमवसितमद्य'।

'पुरद्वारं निरुध्य चिरं योद्धुं प्रभविष्यामो वयम्। कृतमेतेन साहसेन'।

'भवतु। पराक्रमन्तां भवन्त आयोधने। युद्धकथा मे परिसमाप्ता'।

दुर्गे सज्जीकृता चिता। सायं दीपप्रज्वालनसमये चिताऽपि प्रज्वालिता। साध्वी चिन्तादेवी सर्वालङ्कारमण्डिता सहगमन वेषभूषिता निरुपमकान्तियुता प्रसन्नचित्ता हुताशनपथेन पतिलोकयात्रां कर्तुं सज्जीबभूव।

चितां परितो मिलितो महानेव कदम्बो दिदृक्षूणां स्त्री-पुरुषाणाम्। दुर्गं पर्यवृण्वन् शात्रवाः। परं तत्कोऽपि न लक्ष्यीचकार मनागपि। शोकसंतापेन परिमम्लुः सर्वेषां मुखानि। कतिपय दिनेभ्यः प्राक् तस्मिन्नेवप्रदेशे चिन्तादेव्या विवाहमण्टपो व्यराजत। अद्य प्रज्वालितायाश्चितायाः स्थान एवासीत् लाजाहवनकुण्डम्। तदाऽपि एवमेव जनास्सम्मिलिता आसन्। एवमेव पावकः प्रजज्वाल। परमद्यतन तदानीन्तन दृश्ययोः हन्त महदेवान्तरम्। स्थूलदृशा हुताशन कुण्डौ भिन्नावेव। परं वस्तुतो विचार्यमाणे विवाह काले प्रारब्धस्य हवनस्य पूर्णाहुतिरद्य। तदानीं विहितायाः प्रतिज्ञायाः पूर्तिरधुना।

सहसाऽश्रूयत वाजिनः खुरपुटध्वनिः। कोऽपि सैनिकस्सत्वर मुपाधावदश्वमापतन्निव। क्षणे खुरपुटस्वरश्शान्तः। कोऽपि सैनिकवेषधारी युवा प्राविशत् तत्प्राङ्गणम्। जनास्साश्चर्यमपश्यन् - सोऽयं रत्नसिंहः।

रत्नसिंहश्चितासमीपमागत्य कम्पमान शरीरो गिरमुदैरयत् - प्रिये अद्यापि प्राणिमि रत्नसिंहोऽहम्। किमिदमारब्धं त्वया सांप्रतमसांप्रतम्'।

तदा प्रज्वलितप्राया चिता। चिन्ताया वसनतो निस्सृता अग्नेर्ज्वालाः। रत्नसिंहश्शोकग्रस्त इव चितां प्रविश्य चिन्तायाः पाणिमागृह्य समुत्थापयितुमुदयुङ्क्त त्वरया। जनश्च सानन्दं चितायाः कानिचित् काष्ठानि आहृत्य दूरतश्चिक्षिपुः। परं चिन्तादेवी न ददर्श चक्षुरुन्मील्य तम्। केवलं दक्षिणपाणिसंज्ञया पश्चाद्गन्तुमसूचयत्तं रत्नसिंहम्।

रत्नसिंहश्शुचाऽऽक्रान्तोऽब्रवीत् 'हन्त प्रिये कोऽयं व्यामोहस्तव। जीवत्यपि मयि वल्लभे किमिदमनुचितं प्राणार्पणसाहसमारचितम्। प्रेक्षणेनापि नानुगृण्हासि माम्।

निर्ययौ चितायाश्शब्दः। 'भवतो नाम रत्नसिंह इति स्यात्। परं भवान्न मदीयो रत्नसिंह :।

'प्रियतमे तावदवलोकय माम्। भवत्याश्चरणदास उपासको वल्लभश्चास्मि'।

'मदीयश्शूरपतिराजो वीरस्वर्गमध्यास्तेऽधुना'।

'हन्त हन्त। कथं प्रतिबोधयाम्यात्मानम्। अयि जनाः। प्रशामयत शीघ्रतरं ज्वलितं वैश्वानरम्। प्रिये अहमेव त्वदीयो रत्नसिंहोऽस्मि। कथं मां न प्रत्यभिजानासि रूपेण परिचितस्वरेणापि'।

कृशानोर्ज्वालाश्चिन्ताया मुखं परिवव्रुः। मुखकमलमनलेन कवलितम्। तदानीमपि चिन्ता स्पष्टस्वरेणाह - 'सर्वं जानामि।. भवान्न मे रत्नसिंहः। मदीयो रत्नसिंहः सत्यं शूराग्रेसर आसीत्। आत्मरक्षणाय एतत्तुच्छदेह-रक्षणायात्मनः पवित्रक्षत्रियधर्मात् न कदाऽपि प्रच्युतो भवति। यस्याहं चरणदासी स रत्नसिंहो विभ्राजते देवलोके। मा दूषय रत्नसिंहस्य पावनं नामधेयम्। स वीरो रजपूतः। भयात् रणाङ्गणात्पलायमानः क्लीबः'।

चरमशब्दे समुच्चार्यमाण एव ज्वलनज्वालास्समाच्छादयंश्चिन्तायाश्शिरः। क्षणादेव साऽनुपमरूपा वीरताया आदर्शायमाना समुदासिका साध्वीशिरोमान्या निलिल्ये जातवेदसि। रत्नसिंहो विभ्रान्त इव ददर्श तं भीकरं दृश्यम्। अन्ततःश्चैकं निश्वासं निस्सार्य चिन्ता प्रेमपारवश्यात् आत्मापराधदोषक्षालनाय प्रायश्चित्तं विधातुं प्राविशत्सहसा चिताम्।

अहो प्राचीनानामार्यललनानामोजस्विता।



# २४. मुरलीधरस्तोत्रम्

मूकीभावमवाप कोकिलगणो नाके सुधर्माङ्गणे
नृत्यन्त्योप्सरसोप्यपस्वरभिया गातुं त्रपन्तेतमाम् ॥
वीणां वादयितुं निरुत्सुकमनागन्धर्वराजोभृशं
यं श्रुत्वामधुरः सबल्लवशिशोर्वंशीरवः श्रेयसे ॥ १ ॥

निष्पन्दाखिलवर्णराजितरुभिश्चाकर्णितं प्राङ्मृगै
र्हित्वा चर्वणमानने धृततृणग्रासस्य बद्धादरैः ॥
गोपीभिर्ननुविस्मृतान्यकरणव्यापारमामोदितं
श्रीशौरे मुरलीरवं सुमधुरं मामातुरं श्रावय ॥ २ ॥

ध्यातोन्तः प्रविशन् प्रसुप्तहृदयाम्भोजं समुल्लासयन्
चैतन्यं समुदञ्चयन् कमपि चानिर्वर्णनीयं क्षणात् ॥
आनन्दानुभवंव्यनक्तिविषयव्यामोहमुत्सारयन्
श्रीराधारमणस्य वेणुमधुरध्वानो धुनोतु व्यथाम् ॥ ३ ॥

## श्रीनारदोपदेशः

स्वप्ने रम्यमये ममोषसि शुभे मार्गे च राकातिथौ ।
सन्मन्त्रैः प्रतिपाद्य नारदमुनिप्रेष्टौपदिष्टैर्हृदा ॥
श्रीनारायण वासुदेव भगवन् श्रीकृष्ण लक्ष्मीपते ।
मां संरक्ष कृपारसोक्षितमुरुक्षेमं कटाक्षं क्षिपन् ॥ १ ॥

श्रीनाथनारायणवासुदेव श्रीकृष्णमन्त्रान्परमोदयालुः ।
ममोषसि स्वप्न उपादिशद्यः श्रीनारदं तं मुनिमानतोस्मि ॥ २ ॥

श्रीनारायण वासुदेव भगवच्छ्रीकृष्णमन्त्रान्परान् ।
दिव्यान् योऽनुजिघृक्षयोषसि शुभस्वप्ने ममोपादिशत् ॥
भक्तिं श्रीशपदे विमुक्तिफलदां दत्वानुगृह्णाति यः ।
संसारार्तिजनकृपावशतया तं संश्रये नारदम् ॥ ३ ॥

(श्रीमत्पितृव्यचरणरामाचार्याणां स्वप्ने
नारदोपदेशसारः पत्रद्वारा प्रेषितः ।
निजाषाढ शु - ५ सौम्यसंवत्सर

*श्री नारायणाचार्य सु. गलगली)*

# श्रीमज्जयतीर्थस्तोत्राष्टकम्

नाकाधीशपदोचिता अपि शची स्वीकारमुग्धा अपि
श्रीकान्तप्रणयास्पदान्यपि सुधापाकाशनोत्का अपि ॥
लोकार्तिक्षपणाय ये भुवि भवं प्राकामयन्तादरात्
टीकाकृच्चरणा ममास्तु शरणं शोकापनोदक्षमाः ॥ १ ॥

काकस्पृष्टकमण्डलूदितपयस्तोकप्रवाहं तटं
नाकश्रीपरिजुष्टमाकलयितुं पाकद्विडेषोऽचिरात् ॥
कोकस्पर्धिघनोन्नतस्तनतट श्रीकम्रदिव्याङ्गना
भीकत्वं समपास्य मौनिवपुषा प्राकट्यमाशिश्रिये ॥ २ ॥

रम्भायाः स्तनकुम्भसम्भ्रमपरीरम्भादयो विघ्निता
रम्भानिष्प्रभपारिजातलतिकारम्भादिकं नन्दनम् ॥
दम्भोलीरिपुडिम्भशेषदलने दम्भोज्झितोदृश्यते
जम्भारे भवति व्रतीशपदवीं सम्भावयत्यादरात् ॥ ३ ॥

कर्माकर्म विवेकविच्युतिरुजा मर्मान्तदुःखातुरं
धर्माभीषणभेषजेन हि जनं स्वर्मानिनीमानदः ॥
निर्मायाशु सुधामशेष वसुधा शर्मावतारोत्सुकां
निर्मायासमयामयं समतनोत्कर्मन्दितामाश्रयन् ॥ ४ ॥

पौलोमीतनुहेमयष्टिमहसामालोकमुत्सारयन्
भूलोकोद्धृतये हि नीरसमयीं श्रीलोऽभजद्वैणवीम् ॥
वेलोत्पृष्टसुधारसाशनमहालीलोदधिं लङ्घयन्
यो लोभं स्वकृतेश्च नाम्नि विदधे मे लोपयत्वापदः ॥ ५ ॥

माया नैव शशाकदुष्परिहरा जाया विलासावलेः
आयासेन विनागतापि महती नो यामिनीशस्वसा ।
ध्येयोऽध्येय विवेकहारि न कृता श्रेयोनवं यौवनं
छायां स्पृष्टमपिक्षणाद्विदलितापायां यतेश्चेतसः ॥६॥

अक्षोभ्याभिधया हि विश्रुतयशोभिक्षोर्वहन् शिष्यताम्
अक्षोदग्रबलापकर्षि विषयैरक्षोभ्य चेतःसदा ॥
प्रेक्षोदाररुचा शुचं वरशचीवक्षोजकौतूहला
स्राक्षोद्वीक्षणभूषितः खलुसहस्राक्षोऽपि दुर्मायिनाम् ॥७॥

रामाम्भोरुहपादसेवनरतो रामाद्वयानादरः
सीमातीतकृपाकरः सुरवधू प्रेमाभिकामोऽनिशम् ॥
क्षेमाय प्रथितक्षमो हि विहताक्षामाशुभश्चान्वहं
भूमावेषममास्तु भासुरमहाभूमा परिव्राट्पतिः ॥८॥

इष्टार्थावलिदानतो भुविमहानिष्टापहारेण च
शिष्टानां निजगानपूतमनसां तुष्टावमन्दादरान् ॥
काष्ठातीत यशोविशोभितमुनिप्रेष्ठांश्च पद्याष्टक
स्रष्टा गालवरामनामककविस्तुष्टाव हृष्टान्तरः ॥९॥

# २५. श्री श्री सत्यध्यानतीर्थपट्टाभिषेक रजतमहोत्सवः

जगति विरलाः खलु तादृशामहात्मानो ये चाभिजनवन्तोऽपि सरस्वती प्रणयभाजः, सरस्वतीप्रणयभाजोऽपि कमलाकृपाकटाक्षगोचराः कमलाकृपा-कटाक्षगोचरा अपि महोदाराः, महोदारा अपि वैराग्यभाग्य शालिनः, वैराग्य-भाग्यशालिनोपि तपःपावनाः, तपःपावनाअपि दिशान्तविश्रान्तनिशाकान्त-कान्तयशसः, पावनतामुपनयन्ति भुवनमशेषम्। तेष्वेव प्रथमगणनीयाः, प्रातस्स्मरणीया मङ्लनामधेया अगणितगुणमणिगणभासुरा भूसुरामरतर-वस्तीर्थीकृतधरातला व्यर्थीकृतकलिपराक्रमास्स्वार्थीकृतमोक्षाः कदर्थीकृत-कलुषकदम्बा अर्थीकृतभूपाला वैराग्येण शुकवामदेवादि मुनिसार्थसतीर्थ्यायमाना अन्वर्थीकृतनामानः श्री श्री सत्यध्यानतीर्थ गुरुसार्वभौमचरणाः।

महानुभावा अमी वसुधातलेऽपि सुधास्वादनसुखभाजो विबुधादृतास्सहस्राक्ष विमलचरिता विदलित दुरितास्सुराधिपमपहसन्तीव। तेऽमी गुरवोऽपि न काव्यप्रतीपाः, द्विजराजा अपि न सकलङ्का दोषाकराः, दण्डधरा अपि समवर्तिनोऽपि न कृतान्ताः, विलसल्लक्ष्मणान्वित रामानुरागिणोऽपि विरक्त शिखामणयः।

वेदान्तविद्यासाम्राज्यसिंहासनमधिरूढानाममीषां पञ्चविंशति वत्सरात्मक-श्शुभमयस्समयो व्यतीत इति सर्वत्र जरीजृम्भते जम्भारिकुम्भि बधिरीकरणक्ष-मजयघोषमेदुरोऽधुना रजतमहोत्सवः।

विद्यारत्नाकरा एते समुद्भावित नैकसुधाकरा न्यक्कुर्वन्तीवैकसुधा करसुधाकरप्रसुवं क्षीरसागरम्।

वेदान्तसिंहासनमधिष्टितेष्वेतेषु गुरुसार्वभौमेषु पारावार इव भूसुरवृन्देऽपि नदींनता, शेषे इव चाहीनता, राज्ञीव सदाचारदृष्टिता, देवलोक इव सुधर्मप्रणयः, पयोद इव पवनागमसादरता, भूमाविव मानवाल्लभ्यं विलसति।

विद्यामृतवर्षिस्वेषु जाड्यं जले, मुग्धता वधूमुखे, व्यभिचारवादो नैय्यायिकेषु, मायिता परमतेषु, तमस्स्पर्शस्सूर्याचन्द्रमसोः निरक्षरत्वं नश्वरेषु

वस्तुषु सरोगत्वं सारसेषु शुभविचाररहित्यं विभावर्यां साधिवासो नवदेव प्रतिमासु, अनुदारता विषयलम्पटेषु, भक्तसंकटो देवालयेषु, पीताम्बरवैपुल्यं विधवासु, नभोगविद्वेषो नारीषु, मुक्तवृत्तता पातित्यंच जरतीवक्षोरुहेषु पतिताभिमानः परिणीतेषु, दुर्वासःपीडा पाण्डवेषु, गुरुद्रोहो दैत्येषु, कुशास्त्रसंगः काकरूपधरे पाकारिपुत्रे दर्शनवैधुर्यमन्धेषु अविनीतता विष्णुभिन्नेषु देवेषु श्रुतिपराङ्मुखता बधिरेषु, स्मृतिवैकल्यं सुरामत्तेषु, पश्चात्कृत पुराणता वर्तमानसमये श्वपाकसंपर्को विश्वामित्रे शुचित्यागो वर्षासु, सदवमान-कृतिर्वनरक्षकेषु सुमनोनिराकरणमरसिकेषु सुराप्रियत्वमुच्छ्रङ्खलेषु खलेषु विषयार्जनाभिलाषो भूपालेषु, आमोदराहित्यं धत्तूरपुष्पेषु, वेदनास्तिता चार्वाकेषु, न भूसुरेषु।

महाप्रभावशालिनां समुज्ज्वलतेजसामनवरतं कनकरजतवितरणेन स्वर्णाचल-रजतशैलापायशङ्कया निजावासचिन्तां सुर - शङ्करचेतस्युपजनयतां 'श्री श्री सत्यध्यानतीर्थ' चरणानां वर्णनापथातिगमहिमोदाराणां विदुषां भवनानि रजतपात्रमयानि कुर्वतामन्वर्थको रजतमहोत्सवस्सर्वत्र समुज्जृम्भमाणः कं वा हर्षपुलकाङ्कितं न कुर्यात्।

धन्यास्ते मान्यतमा वदान्योत्तमा अनन्यसामान्य वैदुष्य - वेराग्यादि गुण संपत्संपन्ना गुरवो ये भक्तिपरवशशिष्यसमुदयसोत्साहनिर्वत्स्यमानमहोत्सवाः। धन्याश्च ते शिष्या ये च बहुजन्मचीर्णपचोलिमसुकृतपरम्पराः सुरवल्ली-फलायमानानीदृशान्गुरुसार्वभौमान्सेवमानाः पावनतामुपगच्छन्ति। श्री रमारमणः श्रीरामः काममैश्वर्यायुरारोग्यादिक्षेममक्षाममाकलयतादमीषां धरातलोद्धारायैव गृहीतावताराणामिति तमेव करुणावरुणालयं कमलानाथमनन्यभावेन नाथामहेऽनवरतम्।

## श्रीमत्सत्यध्यान गुरुस्तवनम्

लक्ष्मीः खेलति पाणिपल्लवतले यस्य प्रदातुस्सदा
वाग्देवी रसनाङ्गणे ननु नरीनर्ति प्रसन्नान्तरा ॥
नित्यं मानसमन्दिरे विहरतो भक्तिर्विरक्तिर्मुदा
सन्यासेऽपि दमेऽपि नैकललनाश्लिष्टं तमीडे गुरुम् ॥ १ ॥

सत्यध्यानमुनीशदिव्ययशसा व्याप्ते हि लोकत्रये
स्वर्गे भूमितलाद्विशिष्टगरिमाभावाद्विषण्णो वृषा ॥
धावल्यातिशयेन कीर्तिमहसो व्रीडाप्तवैवर्ण्यत -
स्स्वर्ङ्गङ्गा यमुना बभूव करिराट् कृष्णस्तथैरावतः ॥ २ ॥

रामादूरतरान्तरोऽपि सततं रामाङ्घ्रिपद्मार्चकः
लब्धाशान्तमना अपीह नितरां शान्तात्मनामग्रणीः ॥
नित्यं दण्डधरोऽपि किञ्चिदपि वा चण्डो न कस्मिंश्चन
प्रातस्संस्मरणीयदिव्यमहिमा भूयाद्गुरुःश्रेयसे ॥ ३ ॥

किं कर्पूर विमुक्तवानसि सखे स्वाभाविकीं शुभ्रतां
सत्यध्यान मठेऽमलाशनभुजां चित्तैर्हता सा बलात् ॥
हे चंद्राऽऽयसकालतालतुलनां धत्से कुतस्सांप्रतं
तस्यैवोज्ज्वलकीर्तिभासुररुचा पीतं मदीयं महः ॥ ४ ॥

❑❑

# २६. कस्यचिन्मदिराभक्तस्य प्रलापः

**(विडम्बनप्रबन्धः)**

अहो कियती मे सुखपरम्परा। सुधातः स्वादीयसी खलु मदिरा। तपःक्लेशसाध्या लोकान्तरप्राप्या सुधा। मदिरा तु परमसुलभा भूलोक एव सुगमा। मदिरे प्रमोदमेदुरे सुखजलमुदिरे कियन्तं वर्णयामि कियद्वाऽवर्णयामि ते महान्तं महिमानम्। त्वयि पीतायामेव साक्षादन्तरिक्षमिहैवावतीर्य मम मूर्धानमास्पृशति। त्वयाऽऽहितशक्तेर्मे भारेण मेदिनी भ्रमतीव। अयि मुग्धे मदिरे तवाक्रीतदासोस्म्यहम्। मदिरे त्वत्कृते मदिरेक्षणां क्षणादेव दूरतः

पर्यहरम्। विनयान्वितानपि तनयान् नयेयं दर्शनागोचरताम्। कुलपत्यजम्। मानमजहाम्। व्यलुम्पमपत्रपाम्। धनमतनवं पराधीनम्। किंबहुना। त्वदर्थं सर्वस्वमप्याहुतीकर्तुमुत्सुकोऽस्मि। इयदवधि तव स्वादुलवानभिज्ञेन यत्तवास्पर्शनेन मया यदपराद्धं तत्क्षम्यताम्। नूतनतया वार्धक्ये तव पाणिग्राहिणं मामवलोक्य निन्दंत्यपहसन्ति च मन्दाः। परं किं तेन मे हानिः। तेऽपि यदि ते स्वादसुखमन्वभविष्यंस्तर्हि न कदाऽपि मामनिन्दिष्यन्। नाप्यहसिष्यन् प्रत्युत मां शिरसि संस्थाप्यानर्तिष्यन्। परं ते दुर्दैविनः खलु यत्तवास्वाद-सुखवञ्चिताः। उच्चपदाधिरुढोऽपि निगृहीतकरणोऽपि जनानां मार्गदर्शकोऽपि मद्यपाननिषेधप्रवर्तकोऽपि अयं मदिरामेदुरमातनुते स्वीयमुदरमिति समुदीर-यन्तोऽपहासगर्भाणि वचनानि यन्माहात्म्यमपसारयितुं केचन समुद्युञ्जते दुरात्मानः। मुष्टिमेयानां तेषां कःश्रुणोति प्रलपनम्। विविधवेषधारिणा मया इयती महती संपादिता या न केनाप्यपसारयितुं शक्येत। अतः कुतो बिभेमि त्वामासेवितुम्। पुरा चक्रधारिणस्सहोदरेण वरीयसा हलधरेण किं न पीता मदिरा। केन वा दूष्यते काल्पनिक पुराणप्रथितो रेवतीरमणः। कुतोऽधुना दूष्योहममीभिर्दुर्मतिभिः। अहमपि चक्रधरोऽस्मि। एतेषां दुर्मनीषया क्रियमाणदूषणपरिजिहीर्षयैव मदिरे 'नीरा' इति संबोधयामि त्वाम्। मास्माऽन्यथा मन्यथा अस्मान्। नामभेदेऽपि गुणभेदं नैव संभावयामि त्वयि। सद्गुणक्षालननीरे 'नीरे' कियन्मञ्जुलं ते नाम। अयि नीरे सुखनीरे मां प्लावय। प्रातःपेयतया त्वामासेवमानस्य मे स्वर्गः अङ्गुलिद्वयान्तरित इव भासते। नीरे भवतीमनुभवतो मे यत्सुखं तत्केनाऽपि न शक्यते वर्णयितुम्। ईदृशमपरिमितं सुखं न जातिभ्रंशकरणे-नाध्यगच्छम्। न वा. धर्मविध्वंसनव्यापारेणवाप्नुवं। नापि शास्त्रदूषणेन समासादयम्। न वा अश्लीलतादूषणपराक्रमेणास्पृशम्। न वा श्वपाकानां प्रवेशेन पावनतमदेवालय-पावित्र्यसमुच्चाटनेनालभे। न वा प्रतिलोम विवाहकरणेनाविन्दे। नापि वर्णसांकर्यवीर्येण समपादयम्। नवा धर्मविरोधि महाग्रन्थनिर्माणेनान्वभवम्। नाप्याश्रमे तरुणकुमारीसहचारेण। न च रुग्णता व्याजेन गोमारणेन। नापि धार्मिक जनतिरस्कारेण।

मदस्य दिग्भ्रमस्य राक्षसस्य च नाम्नामाद्यैकाक्षरैः समन्वितनामधेयाया मदिरायास्ते पूर्वावस्थामेव नीरानाम्ना प्रथितां पायं पायं नितान्तं धन्योऽस्मि,

मान्योऽस्मि च। मुग्धे, मदिरे, नहि-नहि नीरे, न कदाऽपि त्यजामि त्वाम्। यदि वल्लभं त्यजेयम् राजगोपालं मुञ्चेयम्। सर्वं परिवारं परिहरेयम्। किंबहुना प्राणानप्यर्पयेयम्। परं भवतीं न कदापि विरहिणीं करवाणि। अयि नीरे प्रसीद। त्वदीयमोहेनैव मे नाम सार्थमभूदिदानीम्। त्वद्गन्धप्रभावेणैव मदीयमुपनामाप्यन्वर्थतामयासीत्। किंबहुना त्वदास्वादनमहिम्ना मम जन्मैव पावनतामयासीत्।

जयतु जयतु नीरा नीरजस्कैरलभ्या
निरयनयनधीरा नीरजाक्षीमनोज्ञा॥
नरवरमतिवृद्धौ तन्वती द्राङ्निराशं
निरुपम सुखनीरं शोषयन्ती नितान्तम्॥
जयनीरे, जयनीरे, जय नीरे.

□□

## २७. चिरात्प्रज्वालितं तेजः

कौरवपांडवसमरदावानले तत्कालीनेषु आतरुणादावृद्धं सर्वेष्वपि वीरेषु सममेवाहुतीभूतेषु परम्परागतमविच्छिन्नं समुज्ज्वलं विदेशीयरावणादि प्रबलारातिसमाक्रमणनिवारणदक्षं कंस- जरासन्धादि स्वदेशीय नीचराज दुराचारोपशमनक्षमं क्षात्रं तेजश्चिराय विनष्टप्रायमासीत्। तदनु किञ्चित् समुन्मिषितमपि क्षत्रियेषु चरमेण नन्दनाम्ना भूपालेन सममयासीत्समूलमन्तम्। स्वावमानासहिष्णुना परमकोपनस्वभावेन परिणामे दूरदृष्टि विरहितेनार्यचाणक्येन प्रतीकारैकलक्ष्यतया परकीयाभियोगनिराकरणसमर्थं स्वदेशसंरक्षणक्षमं क्षत्रकुलं समूलमुन्मूलितम्। येन "नन्दान्तं क्षत्रिय कुलम्" इति स्मर्यते। चाणक्येन न केवलं क्षात्रकुलं विनाशितं भारते, किंतु समुत्कटा वीरवृत्तिरपि रसातलं नीता। उत्पथं प्रतिपन्नेषु राजसु यथातच्छासनं ब्राह्मणैर्विधेयम् तथा वीरक्षत्रियवंशरक्षणद्वारा वीरवृत्तिस्थिरीकरणमपि अवश्यमापादनीयम्। परं भवितव्यतया तादृशी मतिर्नोत्पन्ना सकलविद्यापारङ्गतस्य राजनीतिशास्त्रग्रन्थ-

प्रणयनेन पाश्चात्यपंण्डितैरपि स्तूयमानबुद्धिवैभवस्य राजकीय कार्यचतुरस्या-प्यार्यचाणक्यस्य चेतसि अमर्षणप्रकृत्या। तेन-नष्ट वीरवृत्तौ भारते निरसत्त्वतया परकीयाक्रमणस्य लब्धोऽवकाशः। तदनु पुरस्तनैस्तपःप्रभावैर्विप्रैः पुनर्वीर-वृत्तिस्थिरीकरणाय स्वयं वा क्षत्रवृत्तिरवलम्बनीयाऽसीत् द्रोणाश्वत्थाम-कृपादिभिरिव। अथवा पुनरन्यद्राजकुलं क्षत्रियत्वेन निष्पादनीयं सम्माननीय-मासीत्। यथा वेनराजं विनाश्य पृथुराजः पुनराविष्कृतो क्षमाक्षेमापेक्षया क्षमासुरैः क्षमावद्भिः तपश्शक्त्याऽभ्दुतकार्यक्षमैः। पारमार्थिक दृष्ट्या परलोकसुखैक प्रवणचेतस्कतया जगति नश्वरताबुद्धया स्वयं क्षात्रवृत्तिर्नाश्रिता। 'कलावाद्यन्तयोस्स्थितिः" इति क्वाचित्कपुराणवचनमनुसृत्य राजन्यत्वेन न किमपि राजकुलं समुत्तेजितम्। तस्यच दुष्फलं पुरातनैर्भारतीयैरनुभूत-मिदानीमप्यनुभूयतेऽधुनातनैः। यदि तदानीन्तनैस्तेजस्विभिर्विप्रवरैः क्षत्रियकुल-मुद्धृतमभविष्यत् वीरवृत्तिस्फूर्तिपालनमकरिष्यत् तर्हि भारतस्येतिहासोऽन्यो-ऽभविष्यत्समुज्ज्वलः।

ततश्च सर्वशून्यवादिभिस्सन्यासधर्मप्रवणैर्बौद्धैरहिंसाधर्मप्रचारेण सामान्य-प्रजास्वपि किञ्चिदवशिष्टा वीरवृत्तिस्समूलमुत्सादिता। प्रथितानन्य-सामान्येऽन्यैरनभिभवनीये सर्वमान्ये पराक्रमे शुन्यतामुपगते दुर्बलतामुपगते भारते परकीयाक्रमणं सुलभमेव संजातम्।

निश्शङ्कं प्राविशन्साहसिका विदेशीया विरोधशक्तिशुन्यं भारतम्। उप्तवन्तः कलहबीजं प्रजासु। उदपादयंश्च राजसु मिथो भेदम्। आत्मसाद-कुर्वंश्च क्रमेणैकैकप्रान्तम्। तदनु समग्रमेव भारतमाक्रम्य प्रास्थापयन्सा-र्वभौमताम्। अनन्तरं दृढमूलाश्च मानैश्वर्योच्चपदवितरणादिना वशीकृतलोभि-वीरजना यथेच्छमप्रतिबन्धमन्वभुञ्जन्निमां सुवर्णभूमिं भारतरत्नगर्भां स्वकीयामिव। अपाहरंश्चामूल्यानि रत्नानि ललनामणिभिस्समम्। न्यपीडयंश्च तपस्विनीः प्रजाः। बलादाहरंश्च शिरःकरा (डोयीपट्टि) दीनि। व्यध्वंस-यन्पावनान्देवालयान्। अभञ्जयंश्च देवप्रतिमाः। अमथ्नन् धर्मम्। अवासादय-न्संस्कृतिम्। अदहन् संस्कृतग्रन्थरत्नभाण्डागारान्। अमन्यन्तद्विजशिखामग्नि-शिखामिव। अजानन् यज्ञोपवीतं यमपाशमिव येन तदुच्छेदाय प्रायतन्त बहुधा अभ्रंशयंश्च शीलात्कुलीना ललनाः। अदीक्षयंश्च हठादेव लक्षशो

जनान्निजधर्मे। तदानीमेवोप्तवन्तस्ते नवखली (नौखाली) यात्याचार विषतरोर्बीजम्। वीरवृत्ति विरहितेस्वाभिमानाविधुरे मिथःकलहायमाने च दैवदुर्विपाकग्रस्ते भारते सर्वात्याचारास्सुशका एवासंस्तेषाम्। न कोऽपि वीररतदाऽसीत् भारतीयः यः खलु सरभसं पुरसृत्य तेषां हस्तं प्रगृह्य शासनेन प्रतिबद्धुं तान् धैर्येण। अतःतैः भारतनन्दनवने यथेच्छं चरितं दुश्चरितं संचरितमविशङ्कमभयलेशम्। तदसहमानाः केचन स्वाभिमानिनः प्रतापसिंहप्रभृतयो महानुभावाः सिंहप्रतापाश्शूराग्रेसराः पुरस्सृत्य निरोधाय तदुत्सेदाय च प्राणपणेनापि प्रायतन्त कृतसर्वस्वत्यागास्समनुभूय दुस्सहक्लेश सहस्राणि। अग्निसादकुर्वंश्च साध्वीशिरोमणीस्स्वरमणीः। परं स्वदेशबन्धुजनानामानुकूल्यविरहेण प्रत्युत प्रातिकूल्येन तेषां सर्वोऽपि महीयान् चिरस्मरणीयो रोमाञ्चकारी वीर्यप्रकाशप्रयासः नद्याः प्रवाहे तिन्त्रिणी फलक्षालनमिव विफलतामगमत्सकलोऽपि।

अथ केषुचित् वर्षशतकेषु व्यतीतेषु तदेतद्दुस्सहपरिस्थितिमन्वालोच्य क्षात्रवृत्तिसमुत्तेजनमन्तरा भारतस्य नैव समुन्नतेः प्रत्याशेति निश्चित्य कर्नाटके विजयनगरे श्रीमाधवाचार्यनामा (विद्यारण्य इतिप्रथितः) तपस्वी तेजस्वी महानुभावो विप्रकुलावतंसः कञ्चित्कालं पारमार्थिकदृष्टिं पार्श्वतोऽपसार्य जनसेवैव तदन्तर्गतजनार्दनसेवेति विज्ञाय भारते भारतीय साम्राज्यस्थापनद्वारा आर्यधर्मसंस्कृतिसंरक्षणं परदास्यशृङ्खलाबन्धं मातृभूमिबन्धमोक्षमेव. मोक्षसाधनं मन्वानः शूराग्रेसराभ्यां हुक्कबुक्कनामधेयाभ्यां सोदराभ्यां क्षात्रवृत्तिदीक्षां प्रदाय तद्वारा हिंदुसाम्राज्यं प्रतिष्ठाप्य तयोस्सचिवतां स्वयमङ्गीकृत्य भारतभूमातुर्गौरवं वर्चस्वमवर्धयत्सर्वतः। कतिपय वत्सरशतकपर्यन्तं तेजस्वितद्राजकुलं निजप्रभावेण स्वप्रतिष्ठां संरक्ष्य पुनरन्तःकलहव्यसनाधीनतादिदोषैर्विलयमयासीत्।

महाराष्ट्रेऽपि शिवप्रभुःक्षात्रवृत्तिमवलम्ब्य निस्सत्त्वमकरोद्वैरिगणम्। अपालयद्विनाशोन्मुखं भारतीयधर्मम्। जुगोप च रिपुजठरानले प्रवेश्यमानाधेनूः। तथा 'पेशवे' इतिप्रथितैर्वीरवरैर्भूसुरैर्भूप्रभुतामुपगतैः क्षात्रं तेजस्समज्ज्वालितं कतिपयवासरं भारतयज्ञभूमौ। परं पुनरन्तर्भेदादिना तत्तेजश्चिराय निर्वाणदशामासादयत्।

एवं परिस्थित्यां प्रथममेव भारते स्वार्थसाधनाय वाणिज्यमिषेण प्रविष्टैरनुकूलकालप्रतीक्षिभिर्विदेशीयैरात्मसात्कृतो भारतदेशः क्रमेण भेदनीतिचातुर्येण न तु शौर्येण। वाणिज्यापदेशेन लब्धचञ्चूप्रवेशा इमे धूर्ता भिक्षुपादप्रसरणन्यायेन मुसलप्रवेशमधिगम्य समग्र भारत देशस्याधिपत्यमवापुः। ततश्च क्रमेण स्वीयसाम्राज्यस्थिरीकरणायावश्यके जनदौर्बल्ये आपातरमणीयान् परिणाम विषोपमानुपायान्प्रायुञ्जत सफलान्। माण्डलिकनृपाणां संरक्षणव्याजेन तद्राज्ये निजसैन्यनिवेशनेन तत्स्वातंत्र्यमपाहरन्। शिक्षणव्याजेन प्राचीन संस्कृति -धर्माभिमानं वीरताभावनां चोदच्छिनन्नविदितमेव। मिथःकलहभयमिषेण शस्त्राण्याच्छिद्य क्वचित्कोणे विलीनं क्षात्रंतेजः पुनराविर्भावशङ्कया समूलमुदचाटयन्। संपन्नाःप्रजाः राजकीयात्याचारप्रक्षुब्धाः कदाचिदत्या-हितमाचरेयुरिति तासां द्रव्यशोषणेन दुर्गता अकुर्वन् विविधैश्शासनैः। एवं सुवर्णभूमिरिति प्रथितां भारतभूमिं शान्तिव्याजेन स्मशानसमदशामनयन् कुटिलैः राजतन्त्रैः। एवं दुस्थितिमापन्ने भारते नरके सुखस्येव विदेशराजपुरुषे प्रजावात्सल्यस्येव कुतस्स्वाभिमानज्योतिषोऽवकाशः, कुतस्तरां वीरताभावनायाः कुतस्तमां क्षात्रतेजसः।

एवं स्थितेऽपि सप्तपञ्चाशदुत्तराष्टादशे (१८५७) क्रि. श. सैनिकविद्रोहमिषेण किञ्चिदिव स्फुरितं भारतीयेषु क्षात्रं तेजः शरन्मेघेषु सौदामिनीव। हन्त तदपि विलीनमचिरादेव। पुनर्भारतीयेषु नवचैतन्यमुत्पा-दयितुं लोकमान्यतिलकमहाभागप्रभृतिभिर्जागृतस्वाभिमानैर्बहुधा प्रयतितम्। किञ्चिदिव सफलं जातं जनेषु देशभक्तिसमुत्पादनेन। ततः महात्मनः श्रीगान्धिमहाभागस्याहिंसामयान्दोलनेन जागृतेऽपि स्वाभिमाने समासादितायामपि कारावासादि कष्टसहिष्णुतायां सीमान्तगतेऽपि स्वार्थत्यागे 'शठं प्रतिशाठ्यम्' इति भावनया समुद्दीप्यमानं स्वातंत्र्यसंपादने प्रधानं साधनं नकेवलं नोत्तेजितं किंतु पुनरनुत्थानाय प्रस्वापितम् तत्तेजः।

एवं क्षात्रतेजसोऽस्तंगमनेन सर्वत्र निराशामयान्धकारे सर्वत्र प्रसृते स्वातंत्र्यमार्गेऽदृश्यमाने च भारतस्य सौभाग्येन वङ्गगगनाङ्गणे सुभा-सोद्दीपितश्चन्द्र इव प्रादुरासीत् श्रीसुभाषचन्द्रो नाम महातेजस्वी महाप्रतापवान्

महापुरुषः। येन विनाशितस्सर्वतः प्रसृमरो गाढान्धकारः। दर्शितश्च पूर्ण स्वातन्त्र्यमार्गः राष्ट्रीयसभाया मन्दगामिना चिरादपि पूर्णस्वातंत्र्यप्रासादसोपान-स्पर्शाक्षेमेणाऽहिंसामयेनान्दोलनेन समुद्विग्नस्ततो दूरीकृतः सुभाषितचन्द्रबोस महाभागः। अहिंसान्दोलनेन मुग्धतया कृतशीर्षान्दोलने भारते क्षात्रतेजस्स-मुत्तेजनमशक्यमितिमन्वानो सदा जागरूकाणां राजकीय पुरुषाणामक्षिषु धूलिं प्रक्षिप्य सुगुप्तं बहुप्रयासेन स्वदेशमतिक्रम्य विदेशे दूरदूरस्थितान् स्वदेशवान्धवान् संगमय्य स्वतंत्रसेनां निर्माय बहोस्समयाद्विलीनं क्षात्रं तेजः वीरवृत्तिंच पुनःप्राज्वालयत। प्रास्थापयच्च 'स्वतंत्रभारत सर्वकारम्। किञ्चित्समयं सोत्साहं प्रचलितेऽपि तत्सर्वकारे कालस्य प्रतिकूलतया विलयं गतेऽपि सकृत् श्रीसुभाषचन्द्रमहाभागेनानन्यसाध्यं प्रज्चालितं क्षात्रतेजो न कदाऽपि शाम्येत्। समुद्दिष्टं संपूर्णं स्वातंत्र्यं च संपादयेदित्यत्र न काऽपि विप्रतिपत्तिः।

एवं पाण्डव-कौरव समरेण समं विनाशपथमुपगतं पृथ्वीराज - प्रतापसिंह - विद्यारण्य - शिवराजप्रभृतिभिः महाप्रतापशालिभिः मध्ये प्रदीपितमपि क्षात्रं तेजः मध्येऽवसन्नं पुनः प्रज्चालितं प्रतिकूलेऽपि काले इत्यहो भारतभूदेव्या-स्सौभाग्यम्। अहो साहसनिस्सीमता, अहो स्वातंत्र्यैक निष्ठा, अहो स्वार्थ -स्वप्राणनिरपेक्षा स्वमातृभूसेवातत्परता च सुभाषचन्द्रस्य। सर्वात्मनाऽ-लौकिकोऽयं महापुरुषोऽनन्यसामान्यसमुज्ज्वलगुणो धन्यतमःसर्वेषामादर्श-भूतदिव्यचरितः।

❑❑.

# २८. अहो योषास्वपि पौरुषमुद्भावितं

**श्रीसुभाषत चद्रेण**

स्त्रियो नाम गृहकार्यान्यकार्याक्षमाः। साहित्यादिकलाज्ञानस्याप्यनर्हाः। किमुत शस्त्रविद्यायाः । केवलमुपभोगसाधनानि वस्तूनीति अधुनाऽपि भूयांसो मन्यन्ते। तैःप्रायो न श्रुतास्स्युः पुराणादिकथाः। श्रूयते च भागवते पारिजाततरुहरणप्रवृत्ते श्रीकृष्णे सत्यभामादेवी स्वयमेव सशरं धनुरादाय देवान् जिगायेति। महाभारते क्लीबस्यापि पौरुषापादकं विदुला - पुत्रसंवादमनुवाच्य श्रुत्वा वा कस्य वा चेतसि नोत्पद्येत स्वाभिमानज्योतिः। कस्य वा तनुर्नजायेत रोमाञ्चकञ्चुकिता। कस्य वा नाडीषु न संचरेन्नवचैतन्यम्। कस्य वा रुधिरमुष्णतामासाद्य चलविचलं न स्यात्। कस्य वा न दक्षिणः पाणिर्मुष्टीभवेत्स्वयम्। कस्य वा करो न पुरस्सरेत् शस्त्रग्रहणाय सति स्वस्य पशुभिन्नताज्ञाने मानवताप्रत्यये। श्रुतिष्वपि श्रूयन्ते वीरभावनोद्भाविन्यो भामिनीनां भीमपराक्रमकथाः।

परमिदानीं संस्कृतभाषायाः अप्रचारेण तादृश कथाश्रवणमेव दूरापेतम्। तेन यदा पुरुषेषु नवचैतन्यविरहः, पौरुषपराङ्मुखता, स्वाभिमान वैकल्यं, वीरवृत्तिशून्यता, अवमानसहनाभ्यासः, अत्याचाराप्रतीकारः, प्रक्षोभाभावश्च तदा किं पुनस्सीमन्तिनीषु। वीरताविरहे को वा भेदस्सीमन्तिनीभ्यस्सीमंतालंकृत-शिरसां मुण्डितश्मश्रुमुखानां पुरुषाणाम्।

संस्कृतज्ञाने पुराणादिषु समुद्बोधकवीरचरितश्रवणानुवाचनादिभिः समुत्पद्यते नराणां नारीणां च चेतसि नवस्फूर्तिः। अतः पुनः पुनराहूयते मया संस्कृतमवश्यमभ्यसनीयं सर्वैः पुरुषैः योषाभिरिति भारतीयजनैः! अस्तु। इतिहासे केन वा न श्रुतानि झांसीमहाराज्ञी लक्ष्मीदेवी, श्री कित्तूरचन्नम्मा प्रभृतीनां वीररमणीनां नवस्फूर्तिदायीनि नामानि। ताभिः बाल्य एव शस्त्र विद्याशिक्षणमधिगत्य पुरुषाणां व्रीडावहं चैतन्योत्तेजकं कीदृशं शौर्यमाविष्कृत्या-जरामरकीर्तिसखी समालिङ्गितेति जानन्त्येव प्राथमिक शाला बाल-बालिका अपि।

वैदेशिकशिक्षण परिणामवशात् पुरुषेष्विव योषित्स्वपि प्रवृद्धा भोगलालसा। समुत्पन्ना विवेकविधुरता। संजाता चासदनुकरणप्रियता। समेधिता च मेधादुर्बलता। प्रकर्षं गता शरीरे कार्याक्षमता उदिताच चेतसि विवेचनाऽसमर्थता। विगतस्वाभिमानः। अस्तंगता वीरवृत्तिः। अवसन्नं नवचैतन्यम्। प्रध्वस्ता नवनवस्फूर्तिः। शान्ता स्वातंत्र्यतृष्णा। अपक्रान्ता विजिगीषुता। निरस्ता निरसलता। अपसृता प्रतिक्रिया शक्तिः। दूरीभूता दुरात्मनिर्दलननिष्ठता च।

तदेवंपरिस्थित्यामपि अद्भुतसाहसकारिणाऽनन्यसामान्यता धन्येनासाधारण-मेधाशक्तिनाऽसदृशनिरतिशयधैर्यशालिना अपूर्वक्रान्तिकारिणा नव्यपथदर्शिना निरुपमस्वार्थत्यागेन स्वातंत्र्यसंग्रामे पुरोगामिना श्रीसुभाष महाभागेन निभृतं सुकौशलं च परदेशं प्रस्थाय यथा पुरुषसैनिकान्सज्जीकृत्य तेषु पुरुतमं पौरुषं समुद्भावितं, तथा सहस्राधिकान् स्त्रीभटानपि सम्मेल्य तेष्वपि अभूतपूर्वा शौर्यभावना समुद्भाविता। अपरा अभिनवा झांसीलक्ष्मीदेवीति विश्रुतायाः 'क्याप्टन् लक्ष्म्या नाम केन वा भारतीयेन. न श्रुतम्। या किल सहस्राधिकानां स्त्रीसैनिकानां सैनापत्यमवहत। सैनिकवर्गप्रवेशे सुभाषितचन्द्रेणैकोऽवश्यं-पालनीयो नियमःकृतः वनितानां कृते। या किल स्वशरीररक्तेनैव निजनामोल्लिखितुं प्रभवति सैव सैन्यविभागे प्रवेष्टुमर्हतीति। तदा सहस्रशः सुकुमार्यः शौर्यसंभृताः कुमार्योऽनूढास्समूढास्सीमन्तिन्यश्चाहम-हमिकया पुरस्सृत्य सानन्दं सस्फूर्तिकं सवीरावेशं सधैर्यं प्राणनिरपेक्षं च करधृतच्छुरिकया जातक्षतशरीरभागात् समुत्सिक्तरक्तधारायां लेखनीमाप्लाव्य तया स्वमातृभू-स्वातंत्र्याय प्राणार्पणप्रतिज्ञाक्षराणि सुवाच्यानि मानसोल्लासपिशुनानि समालिखन् प्रतिज्ञापत्रे। अहो हिन्दूरमणीनां साहसम्। अहो मातृभूमि स्वातंत्र्यो-त्कटेचचार्यललनानां कुटिलालकानामपि सरलचेतसाम्। अहो वक्तृताकौशलं श्रीसुभाषचन्द्रमहोदयस्य। अहो परचेतोवशीकरणचातुर्यम्। भारते विद्यमानानां विदेश शिक्षणसंस्कार प्रभावेण गलितधैर्याणां चलितवीर्याणां स्खलितशूरचर्याणां विध्वस्तस्वाभिमानानामपास्तस्वातंत्र्याकांक्षाणां च पुरुषाणामपि कदाप्यसंभावितं समराङ्गणसाहसं पौरुषं योषास्वपिसमुन्मेषितं सुभासचन्द्रेण सुभाषणपटुनेत्यनेनैव ज्ञायते तस्येतरासाधारणं महत्त्वम्। समयेऽनुकूले भारतीया भगिन्योऽपि

पौरुषमात्मीयमुद्भावयितुं प्रभवन्तीति सुभाषसैनिकस्त्रीनिदर्शनेन स्फुटीभूतमिदानीम्।

पाकिस्तानीयान्दोलनसमये नारीणामपि स्वप्राणरक्षणाय स्वप्राणेभ्योऽपि प्रेयसःपातिव्रत्यस्य पालनाय च शस्त्रग्रहणं शस्त्रविद्याशिक्षणमत्यावश्यकमासीत्। यदि नवखालीयाः कुलीना ललनाश्शस्त्रविद्यामलप्स्यन्त तर्हि नैवाभविष्यत् गर्हणीया क्षोभकारिका शोचनीया रोमाञ्चकारिणी शीलभङ्गादिदुर्दशा। असहकारान्दोलने स्त्रीषु कारावासदुःखमनुभूतवतीष्वपि न वीर-वृत्तिरङ्कुरिता। न वा पौरुषभावना समुद्भूता। न वा शस्त्रग्रहणलालसा समुत्पन्ना। नापि प्रतीकारशक्तिस्संजाता। न च समुत्कटप्रतिभटनार्भटी संघटिता। यन्मानिनीनां गौरवास्पदं सर्वस्वायितं शीलं तद्रक्षणायेदानीन्तनेऽत्याचारमये समये यत्पौरुषमत्यावश्यकमासीत् तदुद्भावितं स्वातंत्र्यसंपादनोद्देशेन महापुरुषेण सुभाषचन्द्रबोस महाभागेनेतिचिरं कृतज्ञताभावो वोढव्यो मानिनीसमाजेन। सर्वाभिरपि स्वसर्वस्वायमानशीलपालनार्थिनीभिर्भामिनीभिस्सर्वदा तत्पौरुषज्योतिस्संपाद्य समुज्ज्वाल्य च भारतकीर्तिस्समुद्दीपनीयेति समाशास्यते।

❑❑

# २९. प्रणयिनीपत्रम्

अयि प्राणनाथ। प्रणयगुणग्रथिता प्रमोदमकरन्दमेदुरा मनोभ्रमरविहारभूमिः प्रणाममाला मदीया सुकृतैकसुलभ श्रीमच्चरणारविन्दयोश्चिरवासकृतार्थतामन्विच्छति। मदीयवपुरिव सुवर्णालङ्कृतं द्राक्षाफलमिव मधुररसनिष्यन्दि भवदीयं पत्रमवलोक्य सुधासागरनिमग्नमिव मे मनः। अपूर्वदृष्टमिव पुनः पुनरवालोकयमतृप्तमनास्तत्पत्रं प्रेमामत्रम्। मुहुर्मुहुरवाचयमवाचीनमुखविस्फुरत्स्मितरुचिद्विगुणितधवलिमान्तर्हितवर्णमाला-परिचिचीषयेव। पत्रप्रापकहस्तात् गृहीतमात्रे पत्रे कां कामवस्थामन्वभवं तल्लेखने विमलतरचन्द्रिकारसधौतो विहायसो यदि पत्रपात्रमावहेत् पारावारो

मषीपात्रतामासादयेत्कल्पलताशाखा लेखनीभूमिकां धारयेत् तर्हि कथञ्चिदीशे भवत्प्रसादमहिम्ना। अवलोकनपथगतमात्र एव पत्रे स्वयमेवाविरभून्मे वपुषि विपुला पुलकावलिः। प्रवासश्रमक्लान्तमिव पत्रं करकमलगलत्स्वेदसलिलेन स्नापितं मया। दन्तक्षतविरहजनितविरसीभावमपसारयितुमिव विमलतम-कपोलतलमक्षालयन् प्रमोदभरसम्भवा बाष्पबिन्दवो मुक्ताफलविडम्बिनः। प्रथममातुरमनसा समग्रमेव पत्रं तदनु प्रत्येकं वाक्यं ततः प्रत्यक्षरं क्षरत्सुधारसं वाचनविषयतामनयम्। प्राणवल्लभ, किं तत्पत्रिकायां मनोमोहनक्षमं निहितं किमपि। यद हठादेवाकर्षन्मानसं मे विषयान्तरेभ्यः। सा खलु पत्रिका धन्यमूर्धन्या या भवदीयपाणिगृहीता सुवर्णभासुरा मषीमलिनाऽपि मनोज्ञा कलङ्ककलितां शशाङ्ककलामवहेलयति। भाग्यभासुरं तत्पत्रं श्रीमतां करकमलमिव करेण सादरमग्राहि। अधारि हृदये। पर्यचुम्बि प्रेम्णा। न्यधायि च शिरसि। पुनरवाचि मुहुरवालोकि। सीमातिगप्रेमान्धया मया कतिवारमेवमकारीति नाज्ञायि प्रमत्तयेव। मुहूर्तमात्मानमेव व्यस्मरमहम्। तदा सखीं शारदामन्तरा काऽपीतरा मत्सविधेऽभविष्यत् तर्हि नूनं मामवागामिष्यदुन्मादिनीमेव। विदितप्रेमपारम्या हि सखी केवलं स्मितविकसित मुखी विस्मृतनिमेषनयनाभ्यां विलोकयन्ती मुहूर्तं शालभञ्जिकासमदशामयासीत्। दयित तदनु व्यतीतासु कतिपयकालकलासु प्रकृतिमापन्ना प्रेमपरवशतया विहितविविधचेष्टास्मरणलज्जमानमानसा मनाक् मौनमधारयम्। नाथ, जीवितनाथ नाथे भवन्तं पत्रमिदमनुवाच्य नोपहासपदवीमुपनेतव्योऽयं जन इति। जानात्येव भवान् प्रेममहिमानम्। अस्याः प्रेमदेवतायाः प्रभाव एवान्यादृशः। इतरदेवतानिजोपासकेषु प्रगल्भतामुत्पादयन्ति। मन-श्चाञ्चल्यमपहरन्ति। परमियं हि प्रेमदेवी प्रगल्भानपि बालिशचेष्टान्विधत्ते। धीरानप्यधीरान्विदधाति। अस्या एव महिम्ना पितामहोऽपि निरन्तरं वेदपठनैकपरचतुराननोऽपि सदोत्सङ्गे धारयति मानिनीं सरस्वतीं। लोकशङ्करः शङ्करोऽपि निजार्धाङ्गीमतानीत्सर्वमङ्गलाम्। भगवान् खगवाहनोऽपि वक्षोनिलयामाकलयामास कमलाम्। अजराजो जीवितमहासीत्। रघुकुलनन्दनः श्रीरामचन्द्रस्सर्वज्ञशिखामणिरपि काञ्चन मृगमनुससार ! ययातिः निजकुमारतरुणिमापहरणेऽपि नात्रपत् किञ्चिदपि। तपोधनो गाधितनयो गाधेतरतपोराशिं पुण्यं सहस्राधिकहायनैः बहुलायासेन संपादितमपि

निरवशेषतामगमयत्। न केवलं पुरुषाणामियमवस्था। ललना अपि देवतयाऽनया विडम्बिता साजात्यसहजसौहार्दसहकृतया। तथा हि असूर्यम्पश्या हि विदेहराजदुहिता महाराजदशरथस्नुषा सुकुमारतनुरतनुलावण्या सती सीतादेवी समं वल्लभेन वनवासदुःखमनुबभूव। साध्वीकुलशिरोमणिर्दमयन्ती वासन्तीकुसुमपेलवा दुःखलवानभिज्ञा बहुक्लेशभाजनतामुपनिनायात्मानं रिपुकुलदावानलेन नलेन समम्। पतिव्रतासु प्रथमगणनीया प्रातस्स्मरणीयनामधेया पञ्चपाण्डवप्राणायमाना पाञ्चालराजतनया संचारिणी लावण्यमूर्तिरिव पञ्चजनवासानुचिते पञ्चाननसंचारप्रपञ्चभीकरे विवृतवृकानने कानने महतीमेव विपत्परम्परां सुखसोपानपङ्क्तिममन्यत। हृदयेश्वर तादृशीनां महानुभाव-महितानां महिलामणीनां प्रेमप्रभावेण यदि तादृशी दशा, तदा का कथा मे वराक्याः मुग्धायाः।

प्रणयपरवत्या मे स्थितिमिमामालोक्य विहसेयुरेव सुशिक्षितास्सारसेक्षणाः। कियन्मुग्धेयं कमला यत्पत्यां सीमातिगं प्रेमाणमावहतीति। हसन्तु नाम, स्वैरं हसन्तु, पातंपातं हसन्तु। का मे हानिः। अव्यभिचारप्रेम्णि यत्सुखं तत्स्वर्गेऽपि नोपलभ्यते। अत एव प्राचीनास्सतीमणयस्तृणमिव गणयामासुर्गीर्वाणप्रार्थनीयमप्यनल्पमैश्वर्यम्। मनुचक्रवर्तितनुजा भगवती देवहूतिर्निर्धनकुलमूर्धन्यं जटाजटिलशिरसं सन्ततं तपोनिरतं प्रबलेनापि विकारहेतुना विषयजातेन दुर्दममानसं कर्दमं नाम मुनिमुपयेमे। लावण्यापहसितसुरकन्या गुणगणमान्या धन्या सुकन्या जरापलितशिरसं स्मरावेशविधुरमपि नावधीरयामास श्रीलपदच्यवनं च्यवनं महर्षिम्। एवमितरा अपि सुतरां साध्वीमणयो युवत्यो निर्व्याजप्रेमैकजीवनाः प्रासादं मनःप्रसादकरं न मेनिरे। सुवर्णं दुर्वर्णमिव निर्वर्णयामासुः। अजीगणन्मणिभूषणानि पथि पतित शिलाशकलानीव। मुक्ताहारमपि शुक्तिमालामिवावहेलयामासुर्मुक्ताहाराः। अङ्गदं भङ्गदं व्यजानन्। रत्नवलयं दुःखनिलयं कलयामासुः। नूपुरं रिपुमममन्यन्त। मेखलां शृंखलामिवागच्छन्। ताटङ्कमातङ्ककरं शशङ्किरे। चूडामणिं व्रीडाकरमबोधन्। किंबहुना सर्वाण्यप्याभरणानि दुःखभरणानि बभूवुस्तासां पतिप्रेमैकजीवनानाम्। भोगसाधनानि कुपितभोगिभोग-समान्यभूवन्।

इदानीन्तनानां प्रेममहिमानभिज्ञानां भोगैकमयजीवनानां राजीवदृशां सुवर्णं सुखार्णवतरङ्गायते। कंठमाला स्वर्गसोपानमालायते। सीमन्तमणिः प्रमोदसीमान्तं प्रापयते। अङ्गदमङ्गमङ्गलमामन्वते। केयूरवार्ताऽपि मायूरकेकायते। हारो विस्मारयत्याहारम्। काञ्चनकाञ्ची समुदञ्चयति काञ्चन सम्मदलहरीम्। कङ्कणो नय्रनपङ्कजयोः प्रमोदकङ्कणानुत्पादयति। तुलाऽप्यतुलानन्दमूलतामयते। सर्वेऽप्यलङ्कारा अनलङ्कारगोचरा भवन्त्यह ङ्काराय। दुकूलानिआनन्दनदीजलायन्ते। भोगा नभोगामिनीरिव विधत्ते भामिनीराशापिशाचिकायामिनीः।

पुरातनपथानुसारिणीनां हरिणीदृशामियं दशा। परं शिक्षणान्धदुर्विदग्धानां विषयाभिलाषानलदग्धानां धर्मसंदिग्धानां दुग्धायमाननवमतानां वर्णचूर्णदिग्धानां मुग्धाङ्गनानामन्यैव रीतिर्दृश्यते।

भारायमाणालङ्काराणामपि तासां वामभ्रुवां मङ्गलसूत्रमपि अमङ्गलगल पाशायते। ललाटतटे कुङ्कुमरेखा पतिकिङ्करतादेशिका स्वातंत्र्यहनन समुद्भूतशोणितपङ्कावशेषशङ्कामङ्कुरयति चेतसि । साधव्यबोधको वलयः कुवलयदृशां वेदनावलिनिलयायते। पतिसेवा निरयवासायते। गृहे पाको दुर्विधिपाकायते। गृहकृत्यानि कृत्यायन्ते। गुरुजनशुश्रूषा गुरुवेदनया मुमूर्षामापादयति। श्वश्रूरश्रूण्युत्पादयति। श्वशुरश्चासुहरायते। देवाः पूर्वदेवायन्ते। यातरः कातरतां जनयन्ति। ननान्दा नानन्दाय भवति। गृहसम्मार्जनं दुरितोपार्जनमिव, जलकुम्भावहनं कुम्भीपाकदुःखद मिव, गोपूजनं दुरितभाजनमिव, चुल्ली विपल्लीलेव, तुलसी वृन्दावनं अशुभवृन्दावनमिव, देवताभक्तिः कुकर्मपङ्क्तिरिव, हरिनैवेद्यान्नं हालाहलमिव, अतिथयः क्षयतिथय इव, भूसुरा भीकरा इव, भासन्ते। कुङ्कुमादिमाङ्गल्यलक्षणविधुरा अमूर्जीवत्यपि धवे हन्त वैधव्यशोभां बिभ्रति कुलाचारमेव दुराचारंमन्यमानाः। ईदृशानां महाविद्यालये सुलभप्रमादेऽविनयप्रासादे दुर्दम्यकरणस्वैरविहारवने नवयौवने समं तरुणैरधीयानानां वधूनां वल्लभसागरगामिप्रेमसरिदवगाहनं दुर्लभमेव। तासामपहासेन नाहं मनागपि दुनोमि। प्रत्युत जुगप्से सकरुणम्।

आशासे च तासामपि मत्समसौभाग्यम्। अस्तु बहुदूरमाकृष्टाऽस्मि विचारलहरीसख्या। प्रकृतमनुसरामि।

निलये कमलावल्लभस्य शुभपूरणया करुणया सर्वे कुशलिनः। सदा श्रीनाथध्यानलीनान्तरास्सुखमयं समयमतिवाहयन्तः प्रीणयन्ति मां दुहितरमिव स्नेहार्द्रवचनैः। जरत्पतिपरिचर्यापरायणा मूर्तिमतीव वत्सलता तनयायामिव स्निह्यति मयि श्वश्रूः। नन्दयति ननान्दा सादरं सखीभावेन वर्तमाना। स्नेहातुरा मयि यातरः। देवस्वभावो देवरोऽपि प्रजावत्यां मयि मातरीव श्रद्धामादधाति। नितान्तं धन्यमात्मानमाकलये। यस्या मे गुणलेशहीनाया अपि सकलगुणसंपन्नस्सदा प्रसन्नान्तरो वल्लभः, अपुण्यकृतामसुलभास्स्निग्धा बन्धवः। ईदृशासदृशसुखसाम्राज्यतृप्ता नाहं कामये नाकसुखमपि। अपि भव्यं सर्वेषां बन्धूनां सद्गुणबन्धुराणां दृढस्नेहबन्धानाम्। श्वश्रूश्वशुरचरणेषु प्रापणीया भक्तिपूर्वकाः प्रणामाः। ननान्दरि यातृषु च गाढाश्लेषपुरस्सरं कुशलानुयोगिनी निवेद्यतामियमहम्। मदीयशुभाशीर्भिर्योजनीयो वत्सो वस्सहोदरः कनीयान्। कथञ्चिदपि कदाऽपि न विस्मरणसरणिमुपयान्ति मे रहस्संगताः ते हृदयङ्गमा विषयाः। अकूलाः प्रेमलीलास्स्मृता एव समुदञ्चयन्ति रोमाञ्चं वपुषि। व्याकुलीकुर्वन्त्यन्तरङ्गं मे। अचिरादेव श्रीमच्चरणकमल-दर्शनसुखमनुबुभूषति मानसम्। अतःपरं देव एव प्रमाणम्। पुनरेकान्ते मेऽभ्यर्थना-धनाधिगमाय नात्यायासनीय आत्मा। नैव जागरणेन क्लेशयितव्या सुकुमारातनुर्वाचनप्रवणचेतसा। गुरुजनशुश्रूषणे नानवधानैर्भवितव्यं भवद्भिरिति स्वतएव सदा तत्र तत्पराणां प्रार्थनैवाऽनुचिता लघिमावहेति न खलु न जानाम्यहम्। तथाऽपि वाचालयति मां कृतज्ञतानुबद्धा श्रद्धा। विरहव्याधिग्रस्ताया मेऽत्र पितुरादररो मातुरुपचारो भ्रातुस्सत्कारोऽपि नाति सुखाय। आस्तामियं मत्कथा। बहुलीभूतं मे पत्रलेखनम्। विरसीभावभयेन लेखनीं विश्रामयाम्यधुना। परमेकमानन्दावहमुदन्तमावेदयितुमपत्रपते चेतः। तवाऽयमात्मा ममोदरसन्निहितो दोहदममृतदोहदं विधत्ते इति। अधुनाऽपि बंहीयानेवास्ति मे लेख्याशः। विरतो वासरमणिः। आकारयति मां जननी दीपप्रज्चालनाय। अत इयतैवेदानीं विरम्य पुनरचिरादेव पत्रिकां दूतीं प्रेषयिष्यामि भवत्सविधम्। नातिचिरादेव शुभोत्तरमन्विच्छत्ययं

निस्सीमप्रेमामृतजीवनो जनः। क्षम्यतां लेखनस्खालित्यं ललितैकग्रहणेने त्यभ्यर्थ्यमाना –

समाश्रितश्रीमच्चरण कमला "कमला"

(कमलापुरम्)

❑❑

# ३०. उदारः प्रतीकारः

भाद्रपदेऽभद्रपदं गाढान्धकारमयो जनितभयामयो निशीथसमयः। अविनीतजनप्रियेऽस्मिन् समये विविधप्राणिकुलशरण्यस्य दण्डकारण्यस्य निर्जने विस्तीर्णे च प्रदेशेऽद्य किल महान्कोलाहलः। पारिभद्र शाल्मलीवटकादि तरुवरविराजितेऽस्मिन्नुद्देशे झञ्झानिलाहतिपरित्रस्तेव नितान्तं वेपमाना पताका पातकिविजयमाशंसति स्मेव। आलम्बिनिम्बानोकहविशीर्णपर्णपूरणानि तोरणानि पुराणसंप्रदायविदारणोत्सुकदुराग्रहपिशाचकरालरदनावलिविभ्रममबिभरुः। दिनकरविरहवेदनादीनमानसायाश्चिरादप्यलीनो दिवसश्रियो बाष्पबिन्दुविसर इवाबभावन्तरिक्षे तारकानिकरः। तत्र तत्र भीकरो घूत्कारस्वरो मङ्गलवाद्यकार्यं निरवहत्। अचिरादेव सर्वतः समागता वालेयकुलललामायिता यथार्हं स्वं स्वमासनमलङ्ञ्चक्रुः। अभिनवयौवन महिम्ना आत्मानमप्सरसोमन्यमानाः खरकन्याः सुमधुरामङ्गीचक्रिरे मङ्गलस्वागतसंगीतभङ्गीम्। रासभवंश-मुक्तामणिः दीर्घश्रवाः स्वागताध्यक्षपदमध्यारुरोह। हेयगर्धनो गर्दभः कश्चन समुत्थाय वक्तुमुपचक्रमे। "मान्या महाशया अद्य खलु अस्मन्नाम-रूप-स्वरादि विषये विधातृविहितान्यायनिषेधाय विजातीयैः प्रदर्श्यमानाव-मानप्रतीकाराय सजातीयैःकृततिरस्कारपरिमार्जनाय, स्वपुरःकर्तव्यकार्य-निश्चयायचेयं सभा सम्मिलितेति विदितमेव वस्सर्वेषाम्। तदस्या अपूर्वाया विषयैर्महत्त्वोपेतायाः परिषदो विद्वदग्रेसरः समाजहितायैव निरन्तर बद्धपरिकरः अगणितक्लेशभरस्तृणीकृतस्वार्थो दुर्निवारेण लत्ताप्रहारेण प्रतिपक्षहृदविदारण-पटुतरः सर्वात्मना मान्यो धन्यश्चालम्बधिषणो गुणपूर्णो लम्बकर्णोऽध्यक्ष-

पदमध्यारोहेण विराजयतु नितरामिति सूचयितुं प्रमोदते मे चेतः।" इति। तदनु तदनुमोदने कृते केनचित् गभीराशयो गर्दभमहाराजो विश्रमसुखाय समास्तृतभसितभूमितले किञ्चिदुत्तानमालुठन् दीर्घतरघर्घररवबधिरितदिगन्तरालः सरभसमुत्थाय फुरफुरायमाण-स्फुरन्नासापुटःसभिकखरखुरनिकरप्रखरतर-स्वरेणाभिनन्द्यमानोऽध्यक्षीयमा-सनमासाद्य पुरोनिहितोन्नतपीठे पूर्वपादखुर-युगमाघुट्य कर्णरसायनायमानया गिरा व्याहर्तुमारभत रभसात् रासभसभिकानु-दिश्य। "पुरः प्रसारित वामपूर्वपदेन तिर्यक्संकुचितदक्षिणचरणकमलेन च संसूचितसंकुचित पुरातनधर्मतिरस्कारसहकृतनवक्रान्ति पुरस्काराः सभ्याः सत्स्वपि मदपेक्षया सर्वात्मना समुचितेषु विचक्षणेषु सबहुमानं वितीर्णमध्यक्षसिंहासनमारुढा भृशं कृतज्ञाःस्मो वयम्। महाभागा जगतीतले सर्वेषु प्राणिषु प्रगतिपथमुपगच्छत्सु उदासीनतया संप्रदायान्धतया परप्रत्ययनेयबुद्धितया वा नैजहितमनालोच्य परकृतविविधवेदनाशत-दूयमानमानसानात्मबान्धवानुद्वीक्ष्य नितान्तमुद्विजते चेतः। अस्माकं दर्शनमात्रमपि न क्षाम्यन्ति क्षमासुराः। अस्मान् चतुरङ्गसेनायां नाङ्गीकुर्वन्ति राजानः। नोपयुञ्जते वैश्या वाणिज्यव्यवहारेषु। न क्षुद्रा आद्रियन्ते स्वीये कर्मणि। केवलं रजकाः शिलाकुट्टनकर्मिणश्चाधमजातीया अस्मान् केवलं भारवहनकर्मणि नियुञ्जते दूरीकृतारोहणाः। हिंसन्ति सिंहाः, उद्वेजयन्ति गजाः, कोपिनस्सन्ति द्वीपिनोऽस्मासु। हत, सरूपा अपि वाजिनो मानवसमासादितमानसमुदिताभिमानान्धाः पक्षपातं वहन्ति नास्मासु (धिक्धिक्शब्दः)। सृष्टिकर्ता चतुर्मुखोऽपि जनतिरस्करणीयां दशामदिशन्नः। (धिक्धिक्) एवं सर्वैर्जन्तुभिर्बुद्धिपुरस्सरं प्रतिक्षणं क्रियमाणामवहेलनां कियत्समयं वा सहामहे। इयत्कालमज्ञानवशात् यद्दुःखमन्वभावि तदलमियतैव। इतःपरं नैव सोढुं प्रभवामो वयमीदृशीं दीनतमां दशाम्। (श्रूयतां श्रूयतामिति शब्दः) अयं नवीनो युगः। नवक्रान्तिसमयस्समासन्नः। इतरप्राणिसाधारणगुणानस्मासु अननुगृहीतवन्तं विधातारं बहुवारं धिक्कृत्यापि न मे तृप्यति चेतः। विजातीया अपि मानवापसदा अस्मत्सजातीयान् हयानिव सत्कर्मस्वनियोज्य वसन शिलादिभारवहननिन्द्यकर्मणि नियुंजंतीति संतप्यत्यन्तरङ्गं नितान्तं नः। महाशयाः विचारयत, स्वार्थसाधनाय परहिंसापरेभ्यो द्विपादपशुभ्योऽपि बुद्धिमत्तया बलवत्तया च वयमेव वरीयांसः (सहासस्तुमुलः खुरध्वनिः)

परानुपद्रवकारिणः । सजातीया इमे मदोत्तुङ्गारत्तुरङ्गारतु गन्धर्वा इति व्यपदिश्यन्ते। वयं खरा इति क्रूरशब्दैर्निर्दिश्यामहे। तदनुमोदन्ते नीचप्रकृतयो वाजिनः। हन्त श्रेष्ठम्मन्या सुरा अपि - मेषमहिषादीनपि वाहनीकुर्वन्तो नास्मानुररीकुर्वंत्यारोढुम्। परं दयामयी भगवती संक्रान्तिदेवता यदा कदाचित् अस्मान्वाहनत्वेन वा उपवाहनत्वेन वा स्वीकरोतीति दुःखराशौ किञ्चित् सुखास्पदमिदम्। तां विना अन्येषां दुस्सहतरं दुर्विलसितमालोक्य कोपदहनज्वालाजटालोऽपि सन् किं कुर्वे। लोकोत्तरप्रज्ञा महाभागा ईदृश्यामवस्थायां दुर्बलैरस्माभिः किं कर्तव्यम्। दुर्विलसितस्यास्य को वा प्रतीकारः करणीयः, अन्यप्रतिक्रियोपायः कीदृशस्समाश्रयणीयः, संतापःकथं वा प्रकटनीयः इत्येतदखिलं साधु विमर्शनीयम्। इदानीं नैजमाशयं श्रीमतां मतिमतां पुरतः प्रकटयामि स्फुटतरम्। यदि रुचितं गृह्यताम्। इतरप्राणिनिकृष्टगुणतया अस्मान् सृष्टवतः विधातुः प्रतिमा, निन्द्यतया निर्दिशन्त्यः स्मृतयः तथा दुस्सहदुःखदातृमनुजप्रतिकृतयश्च सर्वतः प्रसृमरज्वालावलीजटिले प्रचण्डप्रज्वलज्ज्वलने दन्दह्यन्ताम्। देवताप्रतिमाश्च छिन्नविच्छिन्ना विधाय पथि प्रक्षिप्य कठिणतर लत्ताप्रहारशतैश्चूर्णीक्रियन्ताम्। (प्रचण्डः खुरध्वनिः)। दैवदुर्बलानामपरः को वा विद्यते साधीयान्संतापसूचकोऽन्यायप्रतीकारोपायः। न केवलं संतापप्रदर्शनेन सुखसमुन्नतिमासादयति कश्चन लोके। अतस्समाजहिताय क्रान्तिकरः पन्थास्समाश्रयणीय इति बहुकालविचारेण निर्धारितम्। सोऽयं पन्थाः सुगमस्सरलश्च। "खेचरा" इति नाम स्वीकरणीयं देव-गन्धर्ववाचकमस्माभिरितः परम्। (विजयतां लम्बकर्णो विजयतां लम्बकर्ण इतिमुहुर्मुहुर्जयजयकारो गगनभेदी खुरध्वनिश्च)। नामान्तरसुरतरुसेवनमन्तरा नैवास्मत्समाजः कदाऽपि कल्याणभाजनतां भजेत्। विषमतादुर्विषहविषबाधापरिहारकाङ्क्षिभिरवश्यं नामान्तरामृतमास्वादनीयमेव। (खुर घट्टनम्) उदारहृदयाः क्रमेलकादयः सादरं सानन्दं च प्रदाय समानाधिकारं निजजात्यां समावेशयितुमस्मानहमहिकया समुत्सहन्ते। अतश्चिरानुबद्धं दुःखानुभवैकफलं जात्यभिमानं परित्यज्य समतासुखोपभोगाय नामान्तर स्वीकरणमेव सर्वात्मना श्रेयस्करणमस्माकमिति पुनः पुनस्साग्रहमावेदयन्नात्मनः कर्णमिव दीर्घतमं भाषणमिदानीमुपसंहरामि"।

एवं गर्दभगर्जनया अभिलप्य विरतवचसि अध्यक्षमहाशये खुरध्वनिनाऽखिलैः खरैरभिनन्दिते निषण्णे अध्यक्षभाषणमेव चरमं निर्णायकं मन्यमानेषु सम्मतिसूचकखुरध्वनिव्यग्रेषु सभिकेषु व्यक्तीकृतायामध्यक्षादिषु कृतज्ञतायां सरभसं प्रवृत्ता रासभसभा विरामशोभामभजत्। सभावसानेचाध्यक्ष-महाभागस्य कोमलतरचरणकमलतलेन चतुर्मुखादिदेवमूर्तिषु लत्ताप्रहारसुखं मनसाऽप्यकल्पितपूर्वमनुभवन्तीषु अध्वरप्रथालोपेन बुभुक्षित इव वैश्वानरे आहुतीकृतेषु निजशकृत्पिण्डेषु भस्मावशेषेषु तस्मिन्नेव भस्मराशिशयनीये सोन्मादं सोल्लासं च विलुठतां सभिकानां जयजयकार घर्घररवेण त्रस्तासु दिग्देवतासु प्रचण्डलत्ताप्रहारै र्वेपमानायां वसुन्धरायां रसाभासभासुरा रासभानां सा सभा विभावरीसमये समाप्तिमगमत्प्रज्ञयासमम्।

❑❑

## ३१. पणबद्धः परिणयः

अधुना सर्वत्र जरीजृम्भते पणबद्धः प्रणयपरिणयो राजशासनानुगृहीतः यः खलु प्राचीनतमस्य पावनतमस्य सुखैकपरिणामस्य गार्हस्थ्यतरोर्मूलोच्छेदकः वर्णबाह्यसंततिप्रसारकश्च। विवाहोऽयं प्रणयपरवशतया समुच्छ्रङ्खलयोः परमनुभूतभोगसुखयोरेव भविता तरुणीतरुणयो स्सजातीययोर्विजातीययोर्वा। अविवेकियौवनम् धर्मश्रद्धाक्षपणदक्षं शिक्षणं तत्रापि स्त्री-पुरुषयोस्सहैकत्र शिक्षणं स्वच्छन्दवृत्तिश्च कं कं न कुर्यादनर्थम्। "एकैकमप्यनर्थाय किमु यत्र चतुष्टयम्"। यदीदृशोऽनर्थो नस्यात्तदेव विस्मयावहम्। चित्रीयते चेतः विषीदति च यत् अमार्गगामिनं युव-युवतीजनं न कोऽपि रोद्धुमिच्छति। न वा यतते। प्रत्युत ईदृशोऽनिष्टानुबन्धी चायं विवाहस्समभिनन्द्यते समाजेन अनुमोद्यते च शासनमण्डलेनेत्यहो मतिभ्रष्टता समाजस्य, यद्भाविनमनर्थं मनसाऽपि नाकलयति। घटस्फोटपणफणाटोपभयङ्करोऽयं विवाहाशीविषो-ऽविषह विषादविषप्रसारणेन विचेतसस्समाकलयते पुरुषान्विशेषेण। ईदृश एव विवाहः "उपयमः" इति स्वनामधेयमन्वर्थीकरोति। यदात्मना बद्धान्नरान्नयति यमसमीपम्। परिणयात्प्रागेव घटस्फोटनिर्धारणेनैव तात्कालिक

भोगलालसतया विवाहपाशबन्धमन्विच्छतोर्वधूवरयोश्चञ्चले नव-नवविषयाभिलाषिणि मानुषस्वभावेऽनुभूतविरागशालिनि चात्मनि बहुपुरुष परिचयोन्मुखे मानसे विलीने लज्जासंकोचभावेऽन्तर्हितायां धर्मश्रद्धायाम् अस्तंगमिते च परलोकभये दूरीभूते समाजभयेऽनुकूले च राजकीये शासने कथं नाम सहजोच्छृङ्खलप्रवृतावच्छलितायां नीतिरीतिषु निर्बंधपरीतासु विपरीतासु कथं नाम सुखं भूयादिति विचारपथातीतोऽयं विषयः। पतिपरित्यागे आत्मनोऽनन्यगतिकतां जानाना अपि काश्चन ललनाः स्वच्छन्दवृत्त्या न गणयन्ति पाणिग्रहीतारम्। परं घटस्फोटस्फोटक द्रव्यमवलम्बमाना मानिन्यः कथं नाम बिभृयुरादरं धवेषु। प्रायः प्राक्तनबलवत्तरसंस्कारवशाद्वा समाजभयाद्वा आनुकूल्यविशेषाद्वा स्वच्छन्दाचरणे बहुलानाकूल्यसत्त्वाद्वा दधते सुदत्यः प्रेमाणं पतिषु। विरलाःखलु ता महिला याः स्वभावत एव स्नेहभारं वहंत्युदूढेषु कलियुगेऽस्मिन्। ता एव पतिव्रताशिरोमणिपदमधिगच्छन्ति लोकेषु याः किल अन्धे मूके बधिरे खञ्जे रोगार्ते दरिद्रे व्यसनिनि कोपने च पत्यौ न दर्शयन्ति किञ्चिदप्यनादरं प्रत्युत देवबुद्धया चार्चयन्ति भक्तिपुरस्सरं धर्मैकदृष्टयः। परं तादृशी सहस्रे लक्षे वा सारसाक्षीणां चक्षुर्गोचरतां यास्यति नवेति संदेग्धि चेतः। तद्दौर्लभ्यादेव सीता-सावित्रीप्रमुखा स्साध्वीमणयोऽद्यापि स्तूयन्ते। अत एवास्माभिरुदीर्यते यत् न सहजः खलु प्रेमा प्रणयिषु प्रणयिनीनाम्। परम्परागतसंप्रदायदोषदर्शनवैमुख्याद्वा ऽऽनुकूल्याद्वा पतिभावनयाऽङ्कुरितः प्रेमा- स्थेमानमालम्बते तदा, यदा जागर्ति धर्मभावना विद्यते समाजभीतिः वर्ततेचागतिकताबुद्धिरात्मनः पतिपरित्यागे। सांप्रतं घटस्फोट व्याजेन विवाहान्तरे पर पुरुषसहवासम् अर्थात् व्यभिचारमादावपेक्षमाणैव यदि विवाहबन्धमभिलषति योषामणिस्तर्हि हन्त एनामुदूढवतो महामतेः पुरुषस्य किंनाम कथंनाम सुखप्रत्याशा संसारे। एतस्यामवस्थायां किं वापराद्धं वाराङ्गनासहवासेन।

निश्चिते तु कालान्तरेण घटस्फोटे यःकश्चित् क्षुद्रोऽपि प्रसंगः पर्याप्तो भवति प्रणयभङ्गे। सहजमेव खलु स्खालित्यं संसारे मनुष्यधर्मणाम्। प्राक्तनसंस्कार संस्कृता सीमंतिनी न पत्युःस्खलने ददाति मनोयोगं प्रतिक्षणमनुसन्दधाना मिथस्संबन्धं जन्मव्यापिनम्। दोषादर्शि गुणग्राहि च चेदृशमनुसंधानमेव प्रणयपरिपाकं पुष्यदेव निस्सारयति संसारस्यासारतां,

जनयति च मनोवाचामगोचरं सुखम्। परं घटस्फोटमहोत्सवोत्कटौत्सुक्या घटस्तनी तादृशानुसंधानकथानभिज्ञतयाऽल्पीयस्येव कारणे पत्युःस्खालित्यं सहजं व्याजीकृत्य पुरुषान्तरमन्वेषयति। निश्चितदुष्परिपाकमीदृशं विवाहं कथं वाऽनुमन्यन्ते विवेकिनः पुरुषा इति नैव जानीमो वयम्। अहो मोहस्य महिमा।

अन्यदप्यालोचनीयम्। घट इव घटस्फोटेन स्फुट्यमानोऽयं परिणयः कुतो वा सुखपरिणामस्स्यात् हरिणाक्षीणाम्। निश्चितविच्छेदाः खलु प्रमदाः प्रायो मदोद्धता एव तावन्न दर्शयन्ति विनीतताम्। प्रणयान्धा अपि पुरुषाः प्रथममुपेक्षमाणा अपि प्रतिक्षणमुपचीयमानमविनयं न सहन्ते कथमपि। ततो वैमनस्य प्रादुर्भावः। तदनु कलहः। अनन्तरं विवाहविच्छेदनिर्धारणम्। विवाहविच्छेदाय प्रबलं कारणं दर्शनीयम्। अर्थात् स्त्रिया पुरुषस्य सदोषता पुरुषेण स्वयोषाया व्यभिचारो न्यायालये निवेदनीयः। ततश्च न्यायाधीशैरन्यतरस्योभयोर्वा दोषख्यापनेन विवाहविच्छेदो निर्णयस्स्यात्। एवं च वितथा ऽवितथा वा व्यभिचारवार्ता बहुजनमुखसंचारिणी दिक्षु विदिक्षु च प्रथिमानमाभजति सर्वत्र। अतो दुःखकरं नु किं कुलीनायाः मानैक प्राणाया मानिन्याः। "संभावितस्य चाकीर्तिर्मरणादतिरिच्यते"। सर्वास्वकीर्तिषु इयमेव मर्मच्छेदनी मरणाधिकवेदनामुपजनयति जलजायतदृशाम्।

अथवा घटस्फोट पणेनैव निजाकूतं स्फुटं प्रकटयन्तीनां परपुरुषभोगाधिकारमविहायैव तात्कालिक विवाहमनुमोदमानानां प्रमदानां कुतो दुरपवादभयम्। अतः पुरुषैरेव समालोचनीयं यत् ईदृशे विच्छेदावकाशे विवाहे कथं वा प्रणयपरिपोषः कथं वा तदायत्तं सुखं कथं वा कुलमर्यादारक्षणं भवेत्। ईदृशानां विचाराणामेवानवसरस्तेषां हृदयेषु तर्हि कोवा विशेषः पशुभ्यः। अतस्समयेऽवधातव्यं पुरुषैः पश्चात्तापमननुभूषुभिरिति संसूच्यते ऽस्माभिरिति।

□□

# ३२. कोऽहम्

अष्टादशवर्षदेशीयाऽहमिदानीं कष्टां दशामापन्नाऽस्मि परां काष्ठामधिगतस्य कुसुमशरस्य निशितनाराचपरिस्पृष्टा। विद्या विनयं सौख्यमादधातीति जरतां वचनं वितथमेव मन्ये। यतः कौमारमारभ्य सहचरीक्रीडाविनोदमननुभूय निद्रादेवीमनुग्रहोन्मुखीमप्यनादृत्यागणितकायक्लेशं निपुणतरमासेव्य समासादिता विद्या स्मरशरशरव्यायमाणायां मयि नितान्तमौद्धत्यमुत्पादयति चेतसि समुदञ्चित चाञ्चल्ये दुस्सहतमां वेदनां च। अपौरुषेयतया प्रमाणाग्रणीरिति प्राचीन पण्डित प्रवरैः शिरसि निधायानवरतं जेगीयमानाऽप्युपनिषदहो "विद्ययाऽमृतमश्नुते" इतिबाढमनृतमेव तत्वमुपदिशंति। अथवा सूनृतवादिनीमप्युपनिषदं पण्डितम्मन्याः पामराः स्वेच्छानुसारमर्थमाकलय्य अनुचितपदच्छेदादिना वितथवाचमाकलयन्ति। वस्तुतोऽधीतविद्या हृद्यावयवा युवतय विद्यया मृतिमश्नुते इत्येव सा भगवती वेदमाता साधूपदिशति समाजस्य। कियद्रमणीयोऽयमुपदेशस्सूनृतमयः। सत्यमेव विद्याङ्गना सपत्नीमात्सर्येण रमणीमणीनां तरुणिमानमभोगविरसमाकलय्य मृतप्रायतामेव नयति ताः। विद्याच्छलेन विलीनतामुपगते यौवनतेजसि हिमानीम्लानायाः कमलिन्या इव ललनायाः का नाम सरसता जीवने। भोगैकफलं यौवनं नाम क्षणमपि वा निर्वाणसहोदरसुखनिधानं सर्वेषां विशेषतो योषिताम्। ईदृशदुर्लभतमयौवनविफलीकरणोद्यतां विद्यामनवद्या हृद्या चेति हृद्याकलयेत् का वा कल्याणकाङ्क्षिणी कमलाक्षी कामिनी। नैव "ऋणकर्ता पिता शत्रुः" किं तु "विद्यादाता पिता शत्रु" रिति सुभाषितमभिनन्दनीयम्। वनिताजनोन्नतिबद्धकङ्कणास्सुधारकधौरेया हितशत्रव इव विद्यादानमिषेण मृत्युदेवतागर्ते निपातयन्त्यस्मान्। क्षणमात्र वेदनादायिनो मृत्योरपि तीव्रतरास्तापपरम्परा जनयति भोगविधुरीकृतयौवनानां युवतीनाम्। इतः पूर्वं धन्याः कन्याः किंवा सुकृतमकुर्वत याः बाल्ये एवानुरूपेण वरेण परिणीताः क्रमेणोपचितप्रेमभरास्सरसतरं स्वसंवेद्यमनिर्वचनीयं यौवनसुखमन्वभवन्ननवरतं नवरतसंमुल्लसितचेतसो विस्मृत विषयान्तरा रसपरवशाः। स्मृतिपथमुपगता -हन्त कुतोऽननुभूत तादृशसुखाया मे मन्दभाग्यायाः स्मृतिसौभाग्यम्।

कल्पनासरणिसंगता सा भाग्यदशा समुदञ्चितरोमाञ्चकञ्चुकितमातनोति मे शरीरम्। किंपुनरनुभूता कलयेदिति कल्पयितुमपि न कल्पाऽस्मि। कियद्वा हृदयङ्गमं बाल-बालिकाविवाहदृश्यं! नदत्सु मङ्गलवाद्येषु सकुतूहलमवलोकयत्सु बन्धुजनेषु, मङ्गलाक्षतानां प्रथमप्रक्षेपणप्रोत्साहनपरेषु वधूवरपरिवारजनेषु, मन्दं मन्दं मन्दस्मितेन कर्णे रहस्यमिवोपदिशन्तीषु सखीषु, सानन्दाश्रु प्रेक्षमाणेषु गुरुजनेषु पतिरित्येव पवित्रया विषयसुखकल्पनालेशविदूरया भावनया विकसितचेतसो बालवध्वा मन्दाक्षसंकुचिता कुतूहलेन किं-चिद्विस्तारिता संभ्रमोत्तरलिता सरला दृष्टिः कस्य वा मानसे न पावनां जनयेद्विचारलहरीम्।

परं दिवाऽनिशं विषयाशाविदूषिताशयानां प्रौढकुमारिकाणां विद्यावलेपविनष्टविनयानां नवनवविलासलालसमानसानां गुणतोऽपि सौन्दर्यप्रदर्शनेनैव धन्यतां मन्यमानानां क्व तादृशी परमपावना भावना, क्व तादृशी निर्व्याजमनोहर प्रेमसारवृष्टिस्सरला दृष्टिः। वारविलासिनीनामिव नर्तितभ्रूलतानां वक्रापाङ्गानां शृङ्गाररङ्गदेवतानां चञ्चलदृशा संसूचित-चित्तचाञ्चल्यानां वक्रीकृतसीमन्तरेखया स्वभाववक्रतामाविष्कुर्वतीनामा-कुञ्चितकञ्चुकेन व्रीडासंकोचं निदर्शयन्तीनां शिथिलित केशपाशेन नीतिशैथिल्यं पिशुनयन्तीनां कुङ्कुमतिलककार्श्येन धर्मश्रद्धाक्रशिमानं भाविवल्लभा-युर्ह्रसिमानंचावेदयन्तीनां अन्तर्दृश्यमानावयववसनसूक्ष्मतया सदाचारसौक्ष्म्यं गोचरीकुर्वाणानां वरवर्णिनीनां कन्येतिव्यपदिश्यमानानामस्मादृशां नीतिं रीतिं च विलोक्य चित्रीयते चेतः। अपत्रपते मनः। जुगुप्सते च हृदयम्। विवाहमङ्गलमहोत्सवे तुङ्गतुरङ्गमारूढौ बालवधू-वरौ परस्परसंपर्क विकारविरहितौ तत्रापि व्रीडाऽवनतमुखीमर्धोन्मीलित नयननलिनां वधूं निशाम्य नितान्तमुल्लसति मानसं मे। परं बाष्पयानं (मोटार) समारूढौ प्रौढौ वधू-वरौ अचिरादेव भाविसमागमसंकल्पसहजरोमोद्गमगाढौ गुणा-वरौ जुगुप्सामेव जनयतोऽवलोकयतां जनानां मानसे। अहो सुदूरमपनीताऽस्मि प्रसक्तानुप्रसक्त विचार परम्परया। पञ्चसायक प्रपञ्च चञ्चलीकृतचेता विचेता इवास्मि संजाता। किं करवाणि। क्व वा प्रयामि। को मे पुरस्तनो मार्गः।

बालवैधव्यभिया हि सुशिक्षितम्मन्या आधुनिका शिक्षाप्रगल्भता-कैतवेन विवर्धिताः सुकुमाराङ्गीः कुमारीः कुसुमशरशिलीमुखासारविशीर्णशरीरा अपि

हन्त नितान्तमुपेक्षन्ते। वृद्धकुमारीभावादपि बालवैधव्यमेव परं वरम्। बालविधवास्तु मृतं पतिं देवताभावनया सश्रद्धं स्मरन्त्यः प्रेमगद्गदं गतपतिगुणान्गायन्त्यः तत्प्रतिकृतिं प्रेमाश्रुभिस्स्नपयन्त्यः सुरभिप्रसूनैः परमादरेणार्चयन्त्यश्च समयमतिवाहयन्ति निर्मलतरविचारेण। परं वर्षीयस्यः कन्याः कया वा विधया हृदयं समादधीरन् विलापकलापमन्तरेण। प्रलापं विना को वा समाधानोपायस्तासाम्। विलापो वा केषां कृते। माता जीवति। पिता प्राणिति। भ्राता श्वसिति। पतिर्नाद्यापि प्रापि। यत्सत्यमात्मैव मे हासमुपजनयत्यधुना। हन्त पुनर्विचारधारा प्रवाहपतिताऽस्मि। नेदानीमीदृशीं विषमां दशां क्षणमपि सोढुं क्षमाऽस्मि।

शाकुन्तले नाटके दुष्यन्त-शकुन्तलयोः, मालती माधवे मालतीमाधवयोः, सरसप्रणयालापाननुवाच्य नितान्तमशान्तं मे स्वान्तम्। मयाऽपि कोऽपि दुष्यन्तो वा माधवो वा किमासाद्येत, तावदुपदुष्यंतः उपमाधवो वाऽन्वेषणीयः। (सभयं सकम्पम्) किमिदमनार्यमस्वर्ग्यमकीर्तिकरमधर्म्यमनुचिन्त्यते मया भ्रष्ट मनीषया। कुलकन्यकानामीदृशविचारलेशोऽपि पातित्यमापादयति। किंपुनस्तथाऽनुष्ठानम्। औपपत्यमुभयलोकभ्रंशकमिति शास्त्राणि रुदन्ति रोदयन्ति चास्मान् प्रौढ कुमारीः। तथैव विलपन्ति स्मृतयः, जल्पन्ति च पुराणानि। (पुनर्विचार्य सानन्दं) स्वैरं शास्त्राणि क्रोशन्तु स्मृतयो रटन्तु । पुराणानि च प्रलपन्तु। नवशिक्षण प्रगल्भा का वा तान्गणयति। नवमतीयो रसमयोऽयम् समयः। नवमतनावमाश्रितानां न दुःखसागरमज्जनभयकणि-काऽपि। भगवति नवमतदेवते दूनेयं प्रौढकुमारी मारणोद्यतमारकिरातत्रस्ता त्वां शरणं गताऽस्मि। अशरणानां तरुणीनां शरणमसि त्वम्। जातिके सरिणीभीतानां वर्णशार्दूलत्रस्तानामाश्रमपुण्डरीकपीडितानां धर्ममत्तमा-तङ्गदलितानां नीतिपिशाचिकाग्रस्तानां भवतीमंन्तरेण न कोऽपि प्रभवति परित्राणे। त्वयि समाश्रितायां नास्ति जनापवादः सन्नपि न बाधते मनागपि। किं बहुना। भवती चिन्तामणिरिव चिन्तितप्रदा कामगवीव कामितदायिनी कल्पलतेव संकल्पपूरण कल्पाऽसि सर्वेषाम्।

मयाऽधुना मत्तमारविजयाय को वा सहायतया स्वीकर्तव्यः। (स्मृतिमभिनीय सामोदम्) लतिकाया मधुकरमन्तरेण को वा प्रीणयिता।

(पुरोऽवलोक्य) अहो स्मृतमात्र एव समागतः प्रेमाकरो वदनविजितसुधाकरो यष्टिविराजितकरो केलीकरो मधुकरः। साधूक्तं कविकुलतिलकेन "अव्याक्षेपो हि कार्याणां प्रथमं सिद्धिलक्षणम्" इति। (समीपमुपसृत्य) अये मधुकर समये समागतोऽसि। शतायुर्भवसि विलासललितजीवनः। मकरन्द-रसममन्दमास्वाद्य स्वच्छन्द-मानन्दय लतिकां नवरस कौतुकोत्सुकां त्वदेक गतिकाम्। विना मधुकरोद्दामलीलां नैव बहुकुसुमोद्गमरसफलतामधिगच्छति कथञ्चिदपि। किं सफलप्रार्थना भूयासमिति। एषा लतिका चिरादपि मधुकरमार्गं प्रतीक्षमाणैव परमरमणीयेऽस्मिन्नुपवने पवनेरिततरुनिकरे विलसति विलासलालसा। (इति प्रथमः प्रवेशः)

### अथ द्वितीयः प्रवेशः

लतिका- हा हताऽस्मि मन्दभाग्या। दुरात्मनो मधुकरस्य दुर्विलसितेन लतिका फलवती जाता। नित्यं नवं नवं कामयमानो नीचप्रकृतिः कृष्णात्मा मधुकरः फलसंपन्नां भुक्तभोगां लतिकां दूरतः परिहायान्याः पुष्पवतीर्लतिका अन्विष्यन् गतः। परं फलवत्याः लतिकायाः का वा गतिः। लोके फलवतीं लतिकामवलोक्य सकुतूहलमभिनन्दन्ति जनाः। परमिमां लतिकां फलवतीं यदि जानीयुर्जनास्तदा नूनं सतिरस्कारं दूरात्परिहरेयुरेव। वृत्तान्तमेनं यदि कोपनः पिता श्रोष्यति, मानधना जननी चाकर्णयिष्यति, लोके लब्धप्रतिष्ठो भ्राता निशामयिष्यति, कुलमर्यादैकप्राणा बन्धुजना अवगमिष्यन्ति, हन्त कीदृशोऽनिष्टावहः प्रसङ्गः परापतेदिति विचार एव दुर्विषहः। तेन कम्पते शरीरम्। पुरतः प्रसृत इवान्धकारो नयनयोः। मस्तिष्कमाघूर्णत इव। कर्तव्यमौढ्यमापन्नोऽयमात्मा। कस्य वा पुरतो वेदना-मिमामाविष्करोमि। कस्मा अपि दुर्मुखमिदं दर्शयितुं न प्रभवामि। मासात्पूर्वं परीक्षोत्तीर्णां स्नेहनिर्भरः पिता कियद्वा समभ्यनन्दन्माम्। सविधे समुपवेश्य शीतलेन करतलेनाङ्गे परामृश्य समुत्साहवर्धिन्या गिरा समलालयत। हन्त पुरतस्तस्य गन्तुमपि न शक्यते मयेदानीम्। वात्सल्यमूर्तिर्माता बाल्यादारभ्य मम वत्सा लतिका मनोमोहिनी गृहकर्मकुशला शीलवती गुणवतीति सर्वेषां पुरतस्साभिमान-मावेदयति स्म। तथा मामहरहरहरुपदिशन्ती विनीतां सद्वर्तनवतीं कर्तुं

प्रयतते स्म। वरीयान् सोदरोऽपि मदभिलषिताखिलवस्तुवितरणेन निरतिशयं प्रेमाणमाविष्करोति स्म । हन्त हन्त इदानीमीदृशीं दशामापन्नां विच्छिन्नशीलां मामालोक्य दिङ्मूढः पिता निजशिरो व्याघट्टयेच्छिलातले। मानमयजीवना जननी जनजनिष्यमाणावमान कल्पनयैव विदीर्णहृदया वृश्चिकसहस्र-दंशनादप्यधिकां वेदनामनुभवन्ती "हा लतिके किंकृतवत्यसि मूढे" इति साक्रोशं व्याहरन्ती दीर्घमुष्णं च निश्वसती प्राणानेव परित्यक्तुमुद्युक्ता भवेत्। निजप्रतिष्ठामूलकुठारायमाणायां मयि कुसुमकोमलहृदयोऽपि दयामयोऽपि कठोरतामापन्नो ज्यायान् सोदर्यः "कुलकलङ्कापादिनि कलङ्किनि किमिदमाचरितं दुर्विनीतया त्वया। चण्डाले दूरमपसर । वर्षा-कालदर्शनिशान्धकार निकरादपि नितरां कृष्णं ते मुखं न मनागपि दर्शय। साधु समुद्धृतं कुलमस्मदीयं त्वया। उच्चशिक्षणं सम्यगेव गौरवास्पदमुपनीतमीदृशाचारेण। शिक्षणप्रदानाय तनुक्लेशमतनुमगणयित्वा धनमर्जयते ताताय निरुपमं प्रतिफलं दत्तम्। बहुलं तोषितस्त्वया जन्मदः पोषयिता पिता। अनुसूयादि साध्वी-शिरोमणिषु गणनीया ते माता दुश्चरणेनानेन कां वा दशामनुभवे दिति किञ्चिदपि किमालोचितम्। सर्पिणीमुखे प्रेम्णा सेचितं क्षीरमिव दुर्मनसि त्वयि मातुस्सदुपदेशामृतं हालाहलात्मनैव परिणतम्। हालाहलमात्मनःपानकर्तारमेव हन्ति। मूढे, दुर्मतिके दुर्गतिभाजनीभूते सत्कुलपावनोपवनजातविषलतिके लतिके दुराचारा त्वं राकासुधाकर करनिकरन्यक्कारकुशलधवलयशःपटलसमुज्ज्वलं निखिलमेव कुलं कलुषयितुं प्रवृत्ता। मम सोदरी सुस्वभावा सरला सुशीलेति मुधा मन्यमानोऽहं तव प्रार्थनाक्षण एव त्वदभिलषितं करतले समधारयम्। तस्येदं प्रतिफलमुपहारीकृतं प्रेयसे ज्यायसे सोदराय। अथवा तवायं नैव दोषः। तव शिक्षणप्रदातुः पितुरेवायं महानपराधः। यत्सुधारकाग्रणीरिति लोके महतीं प्रतिष्ठामन्विच्छता तातेन धर्मप्राणया अस्मज्जनन्या बहुधा साग्रहं निवारितेनापि निसर्गचञ्चलचेतसः अतएव कामिनीपदभाजः स्त्रियः इति किञ्चिदप्यनालोच्य प्रौढा त्वं शिक्षणमिषेण समुचितेन वरेण गृहीतपाणिर्नकृता। महाविवेकवत्या त्वया अपराधिनो जनकस्य समुचित एव दण्डो विहितः। तव दुश्चरितेन मित्रसमाजं प्रवेष्टुमपि न शक्नोमि। लज्जावनतं मुखमुन्नमयितुमपि न प्रभवामि वीथ्याम्। हा पांसुले कुलमस्मदीयमुन्मूलं

जातम्। कष्टार्जिता प्रतिष्ठा नष्टा। तव दुश्चरित तिमिरे सर्वतः प्रसरमा हा, अस्तमितश्चाभिमानभानुः। अम्लायंश्च मानसकमलानि। सहस्रशस्संचरन्ति परितस्तिरस्क्रियापिशाचिकाः। सर्वत्र श्रूयन्ते निन्दाघूत्कारस्वरा भीकराः। विद्वेषिद्वीपिन्यः व्यात्तानना भक्षयितुमेव परापतन्ति परितः। निरूढदुर्गुणगाढे मूढे दूरमपेहि। क्षणमपि मेऽभिमुखं मा तिष्ठ। त्वरितमपसर न क्षणमपि ते दुर्मुखं निरीक्षितुमपेक्षे। दुरन्तविचारपरम्परया भ्राम्यतीव मे शिरः। सद्य इतो नापसरसि चेत् प्राणैरेव वियुज्यसे इति वज्रसारकठोराभिर्वाग्भिः प्रहरन्विमूर्च्छयति माम्। कनीयान् सुस्वभावो बालकोऽनुजः "सहोदरि कुतस्ते पाण्डुरं वदनमकस्मात्। कुतो वा श्वेतिमानमावहन्ति तवावयवाः। कुतः कृशतरमुदरमिदानीं दिने दिने पीनतामधिगच्छति। पूर्वमिव नाहारे कुतो रुचिः। को वाऽऽमयस्त्वां परिबाधते। ताताय मात्रे भ्रात्रे च निवेद्य वैद्यादगदं किं न सेवसे" इत्यविदित तत्त्वतया यदि परिपृच्छति तदा किमुत्तरं दातव्यमनया दुर्विधिदूनया। भगवन् दयानिधे ईदृश-दुस्सहावस्थानुभवात्प्रागेव मां यमालयं प्रेषय। अथवा अपवित्र चरित्रायै मे कुतो वा वैवस्वतो निजनिकतने स्थानं दास्यति। "संकटसमये वेङ्कटरमणः "इत्यधुना भगवान् स्मर्यते। पुरा शिक्षणमत्तया न कदाऽपि स्मृतिपथमायातो भगवान्। कुतो वा स इदानीं दीनायाः मे रोदनं श्रुणोति। श्रुत्वा कुतो वाऽनुकम्पते। देवैरप्यननुकम्पनीयाः खलु दुराचाराः। हन्त ईद्दश्यामवस्थायां किं करवाणि। कं वा शरणं यामि। त्वत्समागमेनापन्नसत्त्वां बन्धुपरित्यागेन विपन्नां प्रपन्नां मां परिणीय देशान्तरे संसारसुखमनुभवेति सपादग्रहं साग्रहं सकण्ठग्रहं संप्रार्थितोऽपि नीचतरो मधुकरःक्षणादेव प्रणयभरं विलासरसं तांस्तान् स्मतिरमणीयान् अनुभवहृदयङ्गमान् प्रसंगान् सहसैव विस्मृत्य पुनरन्याः प्रौढकन्याः शिक्षितम्मन्या मादृशीः दुर्दशां प्रापयितुं प्रयात एवान्यत्र। नवनवरस कामुकेषु भ्रमरेष्विव पुरुषेषु विधीयमानो विस्रम्भस्तत्रापि रहो विस्रम्भः पश्चात्तापमुत्पादयत्येव। परं कदा? परिणामे तदानीन्तनः पश्चात्तापो हि निर्गते नीरे सेतुबन्ध इव नितान्तं निष्फल एव। अथवा पश्चात्तनः पश्चात्तापः स्वस्यानुपकुर्वन्नपि मादृशानां प्रौढकन्यकानां निदर्शनं गतो बाढमुपकरिष्यत्येव। आस्तामियं परोपकारकल्पना। सांप्रतं किं वा कर्तव्यम्। पापो हि गर्भात्मना परिणतो न कथमप्याच्छादयितुं सुकरः। अद्य श्वो वा

बहिः प्रकटो भविष्यत्येव। ततो मदीया दशा सूकर्याः सारमेयाया अपि हेयतमा स्यात्। इदानीं सौहार्दवशतया क्षणमपि वियोक्तुमक्षमाः प्रियसख्यो दूरादपि मद्दर्शनं न क्षमन्ते विदितोदन्ताः। नूनमुपहसन्ति समन्दस्मितम्। दूरादेवाङ्गुल्या "इयमनार्येति" सतिरस्कारं निर्दिशन्ति। निन्दन्ति बान्धवाः। परिहरति परिवारजनः संपर्कमपि। हा धिक् धिङ् माम्। बहुवारं धिक्कृत्यापि नालम्बुद्धिर्जायते। यदि शास्त्रविधिना परिणीताःपत्युस्सकाशात् गर्भवत्यभविष्यं तदाऽनिर्वचनीयमानन्दमन्वभविष्यम्। दौहित्रस्मितोन्मुख मुखकमल-विलोकनकुतूहलकुलः पिता बहुलमलालयिष्यत्। दुहितृवत्सला प्रसवित्री मम दोहदपूरणैकपरायणा ऽप्रीणयिष्यत् प्रणयपूरैराहारादिभिः। सखीजनस्सुकर-क्रीडाभिः प्रमोदमाम्रेडितमकरिष्यत्। सर्वे बान्धवाःप्रेष्टगृहं सानन्दमामंत्र्य मृष्टान्नभोजनैरातर्प्य हरितवसनदानादिना ऽतोषयिष्यन्माम्। पतिगृहे सीमन्तमहोत्सवो महता संभ्रमेणाजृम्भयिष्यत्। हन्त तादृशं कुतस्सौभाग्यमस्याः केवलं दुःखायैव गृहीतजन्मनो मे। हा कियद्वा विलपामि, क्रन्दामि, निन्दामि, जल्पामि। यल्ललाटलिखितं न तत्केनाऽपि, कदापि परिमार्ष्टुं शक्यते। यद्भावि तद्भवतु। "आत्मकृतानां दोषाणां फलमनुभवितव्यमात्मनैव।"
(इति द्वितीयः प्रवेशः)

### अथ तृतीयः प्रवेशः

लतिका - सुकुमार! कुमार! वृथा जातोऽसि दुर्भगाया अस्याः लतिकाया उदरकुहरतः। मयेव त्वयाऽपि पूर्वस्मिन् जन्मनि को वा समाचीर्णो दुरंन्तो दुरितभरः। येन मातापितृसौख्येनान्तरितो भविष्यसि। बाल! प्रियबाल! प्राणेभ्योऽपि प्रियतम बाल! विषयाशाविदूषिताशयया मया कृतापराधस्य निरागसा त्वयैवेदानीमनुभूयते दण्डः। लौकिकराज्ये येन मन्तुस्सन्तन्यते स एव दण्डभाग्भवति। परमीश्वरसाम्राज्येऽलौकिकेऽलौकिक एव न्यायः। "करोति चैको दुरितं यथेप्सितं फलोपभोगं लभते परोऽनघः।" पूर्वं विविधविलासलालसमानसया मया भावीदं दुःखं नैव चिन्तितम्। मधुकरेण दुष्कृतैकपरेण सममसुखपरिणामनीचप्रणयप्रवणया सरसवनविहारे सुरभिसुमकन्दुकलीलाविलोलया नैव कल्पनापथमानीतमिदम्। मन्थरसमीर

समीरणतरलतरतरङ्गनिकरैः स्वर्गसोपानपरम्परामिवाकल्पयन्त्यां तरङ्गिण्यां चटुलनौकाक्रीडाक्रोडीकृतसुखसंभारया मया नैवेतदाकलितम्। श्रृङ्गारोत्कटनाटकचलच्चित्रावलोकनकुतूहलया नैव संभावितम्। काञ्चनशलाकोल्लसत्काचयुगलद्विगुणितविलासलोचनद्वयेन चतुर्नेत्रतां दर्शयन्त्या धर्मोपदेशकं भगवन्तं त्र्यंबकमुल्लङ्घयन्त्येव मया द्विचक्रयाने सायं समुपविश्यागणितोत्तरीयविस्रंसनया कामुकपान्थतरुणसतृषलोचनविक्षेपेण किञ्चिदपि व्रीडासंकोचमलभमानया प्रत्युत धन्यमात्मानं मन्यमानया सरभस संचारेण पवमानमासेवमानया नैव मनस्यालोचितम्। परमिदानीं तस्येदं कर्मणः फलमनुभूयते। मधुकरसंगमात्पूर्वतनां तदुत्तरां च मे दशां सम्यगेव पद्यात्मनाऽवर्णयत्सतीर्थ्यः कोऽपि कविः।

"शम्पादीपरुचा निलिम्पनगरीसंस्पर्धिसौधान्तरे
पर्यङ्कास्तृतहंसतूलशयने पार्श्वे शयाना शुचा"॥
दीर्घश्वासवती मुहुर्विलुठती बाष्पाविलाक्षी मुहुः
नित्यं ध्यायति वल्लभं मधुकरं प्रौढाऽप्यनूढा वधूः ॥ १ ॥

कालेजेऽध्ययनच्छलेन नगरीवास्तव्यमातन्वती
स्वच्छन्दं तरुणैर्विलोलकरणैस्सार्धं सहाध्यायिभिः॥
श्रङ्गारोत्कटनाटकोज्ज्वलचलच्चित्रावलोकातुरा
नक्तं नव्यसुधारणाप्रणयिनी जागर्ति नित्यं वधूः ॥ २ ॥

वक्रीकृत्य समं निजेन मनसा सीमन्तरेखां परं
स्पष्टं दृश्यतमाङ्गमेव वसनं सूक्ष्मं वसाना नवम्॥
हस्ते पुस्तकशोभिता नयनयोः काचोल्लसत्काञ्चना
धृष्टा धिक्कृतपूरुषा पथि चरत्येषा हि विद्यावती ॥ ३ ॥

अस्तु गतं न शोच्यमिति कथयन्ति कोविदाः!

हा हन्त! किमिदानीं करिष्ये। एकतस्समाकर्षति मातृतासहजं वात्सल्यम्। परमन्यतो भीषयति समाजबहिष्कारः। मम मानसरणक्षेत्रे वात्सल्य-

साध्वसयोरिदानीं महानेव संप्रवृत्तः भीकरसमरः । ईदृशं नीलकुन्तलकलापैः, धूर्जटिमौलिसमुद्भासित शशाङ्काकारेण ललाटेन, चम्पककुसुमसुषमा-संपद्विलुम्पनकुशलया नासिकया, कुन्दप्रसूनापहासि मन्दस्मितेन, कमलदल श्रीमोचनेन लोचनयुगलेन च मनोहराननं स्तन्यपानैकजीवनं मदेकशरणं बालमनाथं तृणमिव क्वचनावकरनिकरे निर्दयं निक्षिप्य कथमन्यत्र प्रयामि। कथं वा सापत्या समाजतिरस्कृता जीवितुं प्रभवामि। को वा पन्थास्समाश्रयणी-यस्सांप्रतम्। उभयतः पाशारज्जुना दिङ्मूढं मे हृदयम्। दुरन्तादापदन्धकूपे पतितास्मि। को वा समुत्तारयिता विपत्तेरस्याः। दुराचारदूषितां दुरितमय-जीवितां मां दूरीकुर्वन्ति सर्वे जनाः। वृथा नवमतवादविचारकलुषितमनीषया कुमार्गोऽनुसृतः मूढया मया। साधु खलु दूषयन्ति नवमतवादं साधवः।

"नीतिस्सा व्यभिचारपद्धतिरहो प्रीतिः परा देवता
लोके गर्हितगर्भपातनमुखा दोषाश्च मान्या गुणाः॥
आनन्दस्फुटतापटू किल घटस्फोटस्तथा संकरो
यस्मिन्नुत्कटशङ्करो नवमतोन्मादाय दूरान्नमः"॥ इति॥

अलमतीतव्यर्थचिन्तया। प्रस्तुतं कर्तव्यं निश्चेतव्यमधुना मया। वत्समुत्सार्य वात्सल्यं तुच्छीकृत्य स्वेच्छानुसारं किं गच्छामि मत्सदनम्। किं वा निर्दयसमाजस्य दुस्सहावहेलनाभववेदनां विषह्य कुमारमेनमादाय देशान्तरमाश्रयामि। देशान्तरं गताया मे पथभ्रष्टायास्सवत्सायास्तरुण्याः को वा शरणं भूयात्। पुनर्मधुकरसदृशनृशंसजालपतिताया मे इतोऽपि महती समापतेदेव विपत्परम्परा। तदा न मे सुखं नापि बालस्य। अतो बालमत्रैव विन्यस्य निजसदनगमनमेव सर्वथा श्रेयस्करम्। भागधेयवशं पथि पतितमनाथं मुग्धाकृतिं बालकमेनं कोऽपि कारुणिको गृहीत्वा लालनपोषणादिना प्रीणयेदेव। अहो स्वार्थान्धता मे। यत्साक्षात्प्रसवित्र्या निर्दयं परित्यक्तं सुतं कोऽप्यन्यः पोषयेदिति विचारोऽपि न व्रीडामुपजनयति। पुनरन्या का गतिः। अहमपि गृहमुपेत्य विशुद्धकुमारिकावेषमुपगता अपरिचितेनाविज्ञातमच्चरितेन परिणीता संसारसुखमनुभविष्यामि। कदाचिद्विचक्षणेन तेन नवकान्तेन सुलभविज्ञेय-प्रथमपरिभोगा अन्येन भुक्तपूर्वेति यदि विज्ञाता स्यां तदा का मे गतिः। सूक्ष्मदर्शिनः खलु पुरुषाः विशेषतः शिक्षितयोषासु। कुतोऽधुना भाविकल्पनया

क्लेशयाम्यात्मानम्। यद्भावि तद्भवतु। भवितव्यं भवत्येव। तत्कल्पनया कुत आत्मानमायासयामि।

वत्स गच्छामि त्वां विहाय निष्करुणा। मातुरयं क्षन्तव्योऽयं मन्तुर्नितान्तमक्षम्योऽपि। क्षुधितस्य ते क्रन्दनमाकर्ण्य का वा स्तन्येन तृप्तिमादधाति। का वा कुर्यात्प्रत्यहमभ्यञ्जनादिकम्। का वा परिचरेत्प्रेम्णा व्याधिपीडितम्। समुचित कञ्चुकादिना का वा शैत्यबाधानिवारणे प्रयतेत। अम्ब अम्बेति समाक्रोशन्तं त्वां का वा वात्सल्योत्सिक्तहृदया निजोत्सङ्गे उपवेश्य कोमलकरकमलतलेन विमलमृदुलकपोलं परामृशन्ती गाढमाश्लिष्यन्ती मुहुर्मुहुश्चुम्बन्ती लालयेत्। ललितलीलालोलं बालं त्वामालोक्य का वोत्कूलप्रमोदप्रवाहा मन्यते धन्यमात्मानम्। वत्स वृथा ते जन्म। जीवन्त्या अपि जनन्या न पीयते यथेच्छं स्तन्यम्। पुत्र जन्मोत्सवपरितुष्टेन विकसितचेतसा परिफुल्लमुखाम्बुजेन समुदञ्चितरोमाञ्चकञ्चुकेन पूर्णपात्र प्रदानोत्सुकेन पित्रा विस्फारितनिर्निमेषनयनाभ्यां न दृष्टोऽसि दृष्टि दोषपरिहारार्थं मात्राकज्जलकलङ्कितकपोलस्त्वम्। नामकरणसंस्कारं पितृभ्यां नाधिगमिष्यसि। नोपनेष्यसे विधिपूर्वकम्। मातापितृसौख्यं नाप्नोः, नाप्नुषे नापि प्राप्स्यसि। जारिण्या जनन्याः उदरजननदुरितस्य समुचितमेव फलमनुभविष्यति भवान्। किं चतुरेण वत्सेन ज्ञातो ममाशयः। कुतोऽकारणं हससि, हस वत्स हस! यथेच्छं हस! पुनः पुनर्हस। ईदृश कुसुमभासुरहासो न कदाऽपि द्रष्टुं पार्यते मयेतः परम्। कियन्मनोहरं ते मन्दस्मितम्। ईदृश स्मितमालोक्य स्वर्गसुखमपि नाभिलषामि। स्मेरोत्फुल्लकपोलं ते वदनकमलं बहुवारं चुम्बन्त्या अपि न मे तृप्यति मानसम्। तव मधुरस्वराकर्णनेन क्षणेऽस्मिंस्तृप्तकर्णाऽपि पुनराकर्णनसौभाग्यविरहिततया समुद्विग्नाऽस्मि। सुन्दरावयवसंदर्शनस्य चिरकालासुलभतया लोचनौ न कृतार्थौ। ईदृश्यामवस्थायां कथं त्वां विहाय गच्छामि। कथं न गच्छामि। गच्छाम्येव निर्दया गत्यन्तर विहीना। कामभोगैकलालसचेतसां कुतोऽपत्यप्रेमसंस्पर्शः। वत्स! ते प्रथमं दर्शनमेव चरमं जातम्। दैवहस्ते भवन्तं निक्षिप्य यात्यधुनाऽनन्यगतिका लतिका। ललितायाः फलपुष्पोद्गमः परेषामुपभोगायैव विहितः खलु विधात्रा। यत्र कुत्राऽपि क्षेमेण वर्धस्व चिरं जीव। कल्याणमस्तु। दयार्णवो भगवानेव

भवन्तमवतु सन्ततम्। आशीर्वादमन्तरा किमन्यत्कर्तुं शक्यं मन्दभाग्यया मया। न कदाऽपि कुमार! स्मर, स्मरपरवशतया दुराचारां मातरम्। अतृप्तमनाः पश्चात्तापपरिशुद्धा जन्मान्तरे विशुद्धचरिता बाल्य एव शास्त्रविधिना परिणीता निजेनैव पत्या संगता भवन्तमेव तनयमासादयितुं भगवन्तं करुणावरुणालयं शरणागतवत्सलं श्रीवत्सलाञ्छनं विहित भक्तजनानन्दं नन्दनन्दनं श्रीगोविन्दमहर्निशमभ्यर्थयते दूषितमातृपदा विपदाहता हताशा स्वार्थाहुतीकृतनिजतनया दुर्नया निर्दयेयं लतिका। (इति तृतीयः प्रवेशः)

## अथ चतुर्थः प्रवेशः

पतङ्गरायः- लावण्यलालसतया शिक्षणपक्षपातितया च अविज्ञातशीलचरितां तरुणकुमारीं लतिकां प्रेम्णा पर्यणैषम्। रूपप्रलुब्धः खलु पतङ्गः प्रदीपज्वालायां पतन् परितप्तांगो नितान्तं पश्चात्तापमनुविन्दते। लावण्यसरसी शिक्षणसरसीकृतोदारविचारा लतिका संसारं ससारं अमरागारसमानमातनोतीति मुग्धप्रत्ययेन हन्त विप्रलब्धोऽस्मि। सत्यममरागारमेव संसारमापादयतीव भाति मेऽधुना। तैस्तैर्लक्षणविशेषैरनिर्वचनीयैर्लतिका नानन्यभुक्ता कन्या नाप्यप्राप्तप्रसवेति स्पष्टमावेद्यत एव। किंच स्वप्नेऽपि "दुष्ट मधुकर भ्रष्टशीला कृताऽस्मि। हा कुमार क्वासि" इत्यादीन्युत्स्वप्नायितवचनानि नितान्तमेवोपोद्बलयन्ति मदीयं तर्कम्। ललनासु तत्रापि सुशिक्षितललनासु विस्रम्भकारिणः पुरुषान्नान्योऽस्ति जघन्यो मूर्खः। श्रृङ्गारमयकथा-नाटकादिवाचनप्रेक्षणादिना कलुषीभवन्ति चेतांसि विशेषतो निसर्गतश्चंचलाक्षितया प्रकटितचित्तचापल्यानां वनितानां तत्रापि विकारमयतरुणिमोद्दामवृत्तीनां मत्तकाशिनीनाम्। नवशिक्षणं हि संसारसुखभक्षणायैव संवृत्तम्। परलोकंगता प्रथमा कान्ता कियद्विनीता कियन्मन्दाक्षमन्दाक्षरा मामानन्दयति स्म। अनुत्थित एव मयि प्रथममुत्थिता प्रातः हृदयङ्गमसंगीतभङ्गीमङ्गीकुर्वन्ती कोमलाङ्गी कुरङ्गीनयना भगवतो रङ्गनाथस्य मङ्गलमयनामानि भक्तिरसपरिपूरितेन चेतसा गृणन्ती निशान्तसमये सकलमेव निशान्तं नितान्तमेव प्रशान्तमातनोति स्म। इदानीन्तना हि समुत्थिते मयि युगान्तरमारूढे भगवति भानुमति, वृथा विरुत्य विरुत्य मूकीभूतेषु कुक्कुटेषु, अविश्वसनीयःखलु कामिनीजनः इति

लोके दर्शयितुमेव प्राचीदिगङ्गनायां मुक्तरागे चाम्बरमणौ, शयनं शनैश्शनैरुज्जिहाना, परिजनानीतपरिपीतकषायपेया 'बन्धनोन्मुक्ता' नामकमनीतिमयं कल्पितकथानकं तदेकतानमनसा वाचयन्ती शोचयति मां मम शुश्रूषाकृते कृतोद्वाहा। भक्ति परवशायाः प्रथमायाः पाणिगृहीत्या विनीतोपचारो नयनयोरानन्देन बाष्पमुद्गमयति स्म। नवनवप्रणयैकप्राणाया अपि द्वितीयाया द्वितीयाया अविनीतोपचारोऽविरतां वारिधारां स्रावयति लोचनाभ्याम्। परमयमेव भेदो बाष्पयोरुभयोः। शिरोधृतवसनाञ्चला व्रीडावनतवदना निजपादाग्रमात्रदृष्टिःमृदुस्मितोल्लासभासुरकपोला मृदुमञ्जुभाषिणी अनुद्धतगमना हरिगुरुपरिचर्यापरायणा विनीतवेषा विनीतरोषा विनीतभूषा सुकृतपोषा विहितपरिजनतोषा विषम- विषपरुषमाशीविषमिव परपुरुषं दूरतः परिहरन्ती, सद्गुणस्तोमा साध्वीषु प्रथमा, क्व प्रथमा भामा, क्वेयं द्वितीया तृतीयाध्वगामिनी दक्षकक्षाधोनिवेशितस्रस्तोत्तरीयतया व्यक्तवक्षस्स्थलाऽपि तदाच्छादनमनिच्छन्ती त्रपालेशविधुरा मदोन्नतमुखी चतुराशयेन चतुराशासंचरणचञ्चुचञ्चलदृगञ्चला प्रहासबधिरीकृत-पथिकजना समुद्धतभाषणा भूकम्पोत्पादन-पटुतरगमना देवमवहेलयन्ती गुरुजनं तिरस्कुर्वंती दृश्यमानावयवसूक्ष्माम्बरा कृतवाराम्बुजाक्षीविडम्बनदुरितमयचरिता बहिर्हसन्मुखीव दृश्यमानाऽपि लतिका केनापि हेतुनाऽन्तर्दुखसंविग्नेव लक्ष्यते। किं पूर्वभुक्तं स्मरति। किं वा·परित्यक्तं कुमारं चिन्तयति। इयता समयेन प्रणयिनीं प्रीणयितुं प्राणानपि नाजीगणमहम्। पानीयमिव द्रविणमपि व्ययीकृतम्। कातराक्ष्या अपेक्षानुक्षणमेव समस्तवस्तूनि संपाद्योपहारीकृतानि। सूक्ष्माणि विदेशीयानि, चित्रविचित्रवर्णानि कौशेयवासांसि, आमणिबन्धमामध्यं पुरुषोचितानि ऊर्णकञ्चुकानि । बाहुमूल एव लज्जया समं विश्रान्तिभा'ञ्जि' नवसुधारणाधोरणानि ह्रस्वकञ्चुकानि किंचान्यानि मोहकानि मोहनाङ्ग्यै मोहेन समर्पितानि। तथापि हृदयान्तरनिलीनशल्यसूचिकामुद्वेगचर्यां निर्वापयितुं नैव पर्याप्तानि तानि। इदानीं तु विदितवेद्यस्य मे समं प्रेम्णा समस्तं सुखजातमस्तमेव। असारः खलु संसारस्संजातः। भवनं वनमभून्मे। उत्सारितस्समुत्साहः। चारुवसनानि व्यसनान्युत्पादयन्ति। कलङ्किन्यास्संपर्केण अलङ्कारा अलं-कारगोचरा अभूवन्। अपवित्रचरित्रे कलत्रे का नाम सुखाशा कुलीनानामभिमानप्राणानां पुरुषाणाम्। पितरमवमत्य, मातरमनादृत्य,

बन्धून्विनिन्द्य, वयस्यान्निरस्य लतिकाया मधुकरोपभुक्तायाः पाणिमगृण्हाम् कोऽयं मधुकरः। यः कोऽपि वाऽस्तु पापी। कुतो मे तद्विचारः। उद्वाहे पुनरुद्वाहे धृतदुराग्रहेण मया समुचितमेव फलमासादितमद्य। अनिर्भेद्यं हृदयमर्मच्छेदि रहस्यमिदं कस्य पुरतः कथं वा निवेद्यम्। निवेदिते च किंवा फलमपहासमवहेलनां विना। देशान्तरं लोकान्तरं वा गमनमन्तरा विपदकूपारसंतारकः को वा सदुपायो विद्यते। "वरं माने म्लाने मरणमथवा दूरगमनम्" इति सन्तस्समाचक्षते। प्रथममुभयलोकविभ्रंशकमिति द्वितीय एव समाश्रयणीयः पन्थाः। देशान्तरं गते मयि साक्षीभूतं भगवन्तं जातवेदसमपि वञ्चितवत्या लतिकायाः का गतिः। हां! लतिका का मे। पांसुलायास्तस्या नामग्रहणेन किं दूषयामि रसनाम्। यस्याः कृते संपत्संपन्नं सदनं, विरहकातरौ वात्सल्यातुरौ वृद्धौ पितरौ स्निग्धास्सुहृदश्च परित्यज्य देशान्तरं वा लोकान्तरं वा गन्ताऽस्मि, तस्या विचारं भाविदशाचिन्तनं कुर्वाणो मूर्खशिरोमणि-रेवाहमस्मि। अस्तु। अलमतिचिन्तया। देशान्तरगमनात्पूर्वं तरुणा-निदमुपदेष्टुमभिलषति चेतः। "अयि सुहृदो युवानः केवलं रुप-यौवनमोहेन नैव परिणेया नवशिक्षणप्रगल्भाः पाप-पुण्यविवेकलवसंपर्कदूरीकृतमानसा नवनवविलासविलोला अपरिचितगृहकृत्याः प्रौढाः कुमार्यः ऐहिकामुष्मिक सुखप्रेप्सुभिः। मदुदाहरणमादर्शमन्वीक्ष्य कर्तव्यमकर्तव्यं वा निर्धारयन्तु" इति। (इति चतुर्थः प्रवेशः)

## अथ पञ्चमः प्रवेशः

लतिका-पुनरपि प्रविष्टाऽस्मि व्यसनरङ्गस्थले। प्रथमं कुमारीभूमिका-मङ्गीकृत्य नवमतोन्मादमथितमानसा सावद्याभिनवविद्यामदिराविकृतमस्तिष्कतया प्रत्याक्षिप्तप्राचीनपावनचारुतराचारविचारा दुरात्मतया किञ्चिदप्यदूरीकृतदुरिता भद्रकृतिदरिद्रा क्षुद्रकर्मसमुद्रा धिक्कृतकुला न्यक्कृतशीला पराकृतपरलोकभया निराकृतकुलनारीसत्पथा परित्यक्तव्रीडा समादृतविविधक्रीडा समुत्पादितगुरु-जनमनःपीडा, स्वभावपरुषा, विभावनवशीकृतपरपुरुषा रुषाऽवधीरितधर्मा धर्मराजभवनेऽनुभवनीययातनाशतकल्पनालेशविकला कलाविद्याधिगम-कुशलाऽप्यकुशलानुबन्धा अवधीरितनीतिनिर्बन्धा बान्धवावहेलनी, दुर्गणशालिनी,

मलिनीकृतवंशकीर्तिर्दुष्कृतमूर्तिर्जनितपितृजनार्तिः समुत्सिक्तस्वच्छन्दविहारस्फूर्तिः साध्वीजनदूरवर्तिनी वानरीव नरीनृत्यमाना गतमाना नितरामुद्दामवर्तनेन च्छिन्नसतीजनमर्माणि बहुलाशर्माणि कर्माणि व्यतनवम्। ततो गर्भिणीवेषभूषिता, समाजदूषिता, परं गुप्ततया पोषिता, कुलयोषितां समाजे कलङ्कायमाना सोढावमाना समुदितपश्चात्तापा प्रतिक्षणविजृंभमाणसंतापा समाचरितपापा कथमपि कतिपयवासरानपासारयम्। तदनु प्रसूतनारीनेपथ्यप्रसाधिता साधितशकलीकृतहृदयोपला सुकुमारकुमार दर्शनेन युगपदेव सीमातिगं प्रमोदं तादृशीं च वेदनां चानुभवन्ती निशाचर्या अपि कठिणहृदया पथि जठरजातबाला बालेव पुनः परिणीता काञ्चनभासा कञ्चन कालं कञ्चनाविदिततत्त्वं रूपमुग्धं पुरुषमवञ्चयम्। विदितोदन्तेन भृशमशान्तेन कान्तेन परित्यक्ताऽहमिदानीं विरागिणीपात्रमुररीकृतवत्यस्मि। पतङ्गरायेण प्रत्यादिष्टाऽस्मीति कोऽपि कोपः परिस्फुरति न मे मानसे। साधुस्वभावस्य पतङ्गरायस्य कोऽवाऽत्र दोषः। दोषाकरवदनाया अपि दोषाकरहृदयाया दयितायाः को वा दयते विवेकी पुमान्। हृदयङ्गमं हि दाम्पत्यसुखम्। कतिपयसमयं वा तदनुभवन्ती लोकोत्तरमानन्दममन्दमविन्दे। प्रातरेव समुत्थायासायं प्रसन्नचेतसा परिचर्या-प्रमुदितान्तःकरणस्य प्रियवल्लभस्य सहवासेऽनुभूयमानः प्रमोदो नूनं वाचामगोचर एव । शय्यात उत्थानसमये प्रेमपरवशतया गुरुभयसंभ्रान्तायाः पुनः पुनः पत्या शय्यायां समाकर्षणक्रीडा, मुखप्रक्षालनाय जलमुपहरन्त्याः छलाच्चैलमपाकृष्य रहस्यकथनव्याजेन कपोले मुखमुद्राप्रदानम्, अभ्यवहारसमये नीरसमपि मे पाकं सरसतया वर्णनेन समुल्लसितमानसायां मयि साकूतकटाक्षप्रक्षेपणं, ताम्बूलदानसमये ते ते विनोदतरङ्गा, नीतिमय-कथानकवाचनवेलायां विविधसरसलीला "किमपि किमपि मन्दं मन्दमासत्तियोगादविरलितकपोलं जल्पतोरक्रमेण। अशिथिलपरिरम्भ-व्यापृतैकैकदोष्णोः" अविदितगतयामायां यामिन्यां प्रेमगोष्ठी नर्मोक्तयश्च तदमी हृदयङ्गमाश्च प्रसङ्गाः त्रैविष्टपमपि सुखमधरीकुर्वन्तः प्रमोदपारावारे न्यमज्जयन्माम्। हा हन्त! पुनरुद्दामवृत्तिर्विदितदुश्चरिता अन्तरिताऽस्मि तादृशानिर्वचनीयामोदपरम्परया। नेदृशं सुखमास्वादयितुमस्ति पुनराशा। एकदैव कृतो हि व्यतिक्रमस्समग्रमेव मे जन्म विफलतामनयत् विरसतां दुस्सहतां च। यदि इतरकुलकन्येव सरलं पन्थानमन्वसरिष्यं तर्हि

सतीतिप्रतीतयशास्सती सदा सुत- मुखदर्शनसुखवती पतिप्रणयभाजनतां गता सभ्यजनाचरितसभाजना संसारं संसारमेव विदधती मन्देतरमानन्द-मन्वभविष्यम्। हा हन्त! दुर्दैववशात् - कुतो दैवं दूषयामि दुराचारवशात् मनो मलिनीकृतम्। अथवा मनोमालिन्येनैव दुराचारपरा कृताऽहम्। तनुरतनुशरपरवत्या चातनुदोषवत्यतानि। विलपामि! कियद्वा आत्मानं गर्हामि, कियद्वा दोषाकरमपि कलंकिनमपि तमपि तामसीप्रियमपि द्विजाधमं सकलानर्थनिदानं मधुकरं शपामि, कियद्वा प्रथममममृतमिव परिणामे विषोपमं पक्वेतरविचाराणां सुलभविकाराणां तरुणतरुणीजनानां धर्मगन्धविधुरस्य नवशिक्षणस्य प्रभावेण स्वतएवोच्छ्ङ्खलानामुत्पथमु-पदिशन्नवमतमशिवतमं निंदामि कियद्वा सदशनच्छददंशं साङ्गुलिभङ्गं गालीशतविषयतां नयामि। यदवलम्ब्य हीनाऽस्मि! दीनाऽस्मि। दूनाऽस्मि। इदानीं। शापेन कोपेन धिक्कारेण संतापेन वा किंवा फलम्। यद्भाव्यं तदभूदेव! एकदा दूषितं वपुरिदं शुनास्पृष्टो मृत्कलश इव न कदा-प्यस्मिन्जन्मनि केनाऽपि हेतुना कैरप्युपायसहस्रैः परिशुद्धताभाग्यमधिगच्छति। स्वैरमवधीरयन्तां नवमतोन्मादिनो जनजीवनघातिनो मतं मामकीनम्। निजानुभवसाक्षिणा स्पष्टमिदं सप्रतिज्ञमावेदयामि। पापमलीमसं चेतो वपुश्च नूनमसाधारणयोग्यतां विना, जन्मान्तरीयसुकृतराशिमन्तरा, प्रपन्नभगवत्प्रसादादृते च नैव पावनतां भजेत्पुनरिहेति। आस्तामियं पूर्वतनी वार्ता। गतविषयकः शोको नैव पुरस्तनं पन्थानमादिशति। किमिदानीं करवाणि। पतिःपर्यत्याक्षीत्। उपपतिः पूर्वमेव निरकाशीत्। सुतस्सुप्तः क्व जीवतीति न ज्ञायते। पिता कोपितामयासीत्। जननी जननीतिभीता दूरमहासीत्। सहोदरो दूरीकृतदयो दुरितमय्यां मयि दरमप्यादरं न दधाति। बान्धवास्स्नेहगन्धविधुरा अभूवन्। अवसितमैहिकं सुखम्। परास्तं परलोकसौख्यं च। कं वा आधारं समालम्ब्य मनस्समाधानमासादयामि ! अमार्गजातोऽपि कुमारो यदि सविधे ऽभविष्यत् तर्हि दुरन्त-दुःख कांन्तारे नैराश्यतिमिरे कञ्चिदपि सुखमार्गमदर्शयिष्यत् । हा कुमार क्वासि। कुत्र वा कथं वा त्वामवलोकयिष्यामि। का वा कल्याणी अनाथवत्सला महिला तव कल्याणाय यतते। का वा वात्सल्येन त्वां लालयति पालयति। धावमानमुत्तोलयति करकमलेन। अपि नाम नामसंस्करणमाप्तवानसि। किं ते नाम कृतं पित्रा। दुर्भागधेय कुतस्ते

पितृसंबन्धः पाल्केन। चन्द्रकान्त इति शोभते तवानुरूपं नामधेयम्। यत्सत्यं चन्द्र इव कान्तोऽसि। परं चन्द्रगता दोषाकरता परदारातुरता मधुकरे गता। कुतस्तस्य सहवासमलीमसीकृतशरीरा अमङ्गलनामग्रहणेन रसनां पुनर्विरसीकरोमि। हा चन्द्रकान्त काऽसि। अभागिनीमिमां जननीं कच्चित्स्मरसि। अपायितस्तन्याया अवकरमिवत्वां मार्गे क्षिप्तवत्या अकरुणाया मे कथं नु स्मरणं ते संभाव्यते। अपि कुशली भवान्। आलक्ष्यदन्तमुकुलमनिमित्तहासमङ्काश्रयप्रणयिनं त्वामुत्सङ्गे सन्निवेश्य कौ वा धन्यौ पितृस्थानमुपगतौ त्वदङ्गरजंसा मलिनीभवतः। पुरा भरतो हि प्रथमं पितृसुखान्तरितोऽपि मातृच्छायाविवृद्धः पुनर्दुष्यन्तलालनसुखमवाप। महात्मा ध्रुवोऽपि मातृसुनीतिदेवीविनीतो नवनीतकोमलहृदयो सापत्नमातृदुरुक्तिदूनो वनमुपेत्य समाराधितवासुदेवसेवानुकम्पया पुनरपि पूर्वाधिकं पितृप्रेमप्रमोदमविन्दत। जनकतिरस्कृतोऽपि सकलल्हादकः प्रल्हादः न प्रसवित्रीपरित्यागेनापवित्रीभूतः। भगवान्मुकुन्दोऽपि राजभिया मातापितृदूरीकृतोऽपि पुनरपि नन्दगृहादुपेत्य तावानन्दयामास। स्वयमप्यनन्दच्च। हा कष्टम्। क्व तादृशं सौभाग्यं सुकृतैकलभ्यं स्वैरिण्यां जारजातस्य ते। नास्मिन् जन्मनि मे सुजातादपि सुतात्सुखम्। नापि जीवन्त्या अपि मातुस्सकाशात्सुखम्। पापीयसः पितुः नामग्रहणमपि पापकरम्। जगतीतलेऽस्मिन् न केवलं पथभ्रष्टाया एव कष्टा दशा, परं तत्संततिपरम्पराया अपि। चन्द्रकान्त! चन्द्रकान्त! ते मुखचन्द्रं कदा द्रक्ष्यामि। कदा स्पृक्ष्यामि कुसुमकोमलममृतमिवानन्दकरं शरीरम्। कदा वा प्रक्ष्यामि तवानामयं कुशलम्। कदा नु वा वक्ष्यामि तव हितावहमुपदेशम्। "तव जनयितारं नीचतरमनुसरन् मादृशश्चञ्चलदृशश्चञ्चलचेतसश्चण्डालबुद्धया वञ्चयित्वा शापाक्षरगोचरो माभूस्तारुण्योद्दामवृत्तिः"। इति। अपत्यवात्सल्यं मामेवं वाचालयति। पापीयस्या अपि-मातुस्समुच्छिक्तमच्छलमच्छमपत्यवात्सल्यं न समुच्छिद्यते कस्यामप्यवस्थायाम्। वत्स कुत्रापि वा वर्धितश्चिरञ्जीवी भव। शुभाशंसनमन्तरा किमन्यत्कर्तुं शक्यतेऽनाथया स्त्रिया सुतकृते।

विदितोदन्ता जनास्त्वां कानीन इति मधुकरसदृशमुखोऽयमिति सतिरस्कारं यदि व्यवहरेयुस्तर्हि त्वयाऽनुभवनीयवेदनाकल्पनयाऽपि विदीर्यते मे हृदयमदयमिदानीमेव। हन्त भ्रान्ताऽस्मि। चिन्तापथसंचारेण नितान्तं

श्रान्ताऽस्मि। विषादेनाक्रान्ताऽस्मि। सुतविरहतान्ताऽस्मि। कान्तसुतरहिताया: कान्तारमेव शरणम्। शरण्याभावादरण्यमेव निखिलं भुवनम्। नीरसतां गतं दुःखैकभवनं जीवनम्। विरसजीवनादपि निधनमेव सुखनिधानं मन्ये। परम् "अन्धे तमसि मज्जन्ति ये केचात्महनो जना." इति शास्त्राण्युपदिशन्ति। तच्छासनोल्लङ्घनात् बिभेति चेतः। एकदा शास्त्रदेवताशासनमनादृतवतीदानीमपि महतीमेव विपदमनुभवामि। भगवति शास्त्रदेवते दुष्प्रज्ञाया अज्ञाया क्षमस्वापराधान्। अनुगृह्णीष्व माम्। उल्लङ्घिताज्ञेति मा मां दूरीकुरु। न पुनस्त्वां कदाऽप्यवहेलयामि। नितान्तं पश्चात्तप्ताऽस्मि। भगवतीमन्तरा कान्तारायमाणे को वा भवेत्राता। इदानीं भवन्नियममेव समाश्रित्य शिष्टमायु: शान्तेन मनसा भगवध्यानेनातिवाह्य भाविनीं जनिं शुभशोभिनी-मनुभवितुमभिलषामि। त्वया परमसेव्यतया यस्समुपवर्णितःस्तं ध्रुवाय ध्रुवंपदप्रदानेन प्रल्हादस्य समाल्हादनेन करिवराय करुणालुताप्रकटनेन पाञ्चाल्यै पटप्रपञ्चनेन च प्रकटित-भक्तवात्सल्यं भगवन्तं श्रीकान्तमेव सन्ततमाराधयन्ती जनुरिदं कृतार्थीकरिष्यामि। भगवन्! दत्तबदरीफलशबरीसमुद्धारक वितीर्णविलेपनकुब्जानुग्राहक! प्रसीद। दुरितैक निलयभूतां मामपि तव चरण कमलैकलीनमानसामनुगृहाण मामनन्यशरणाम्।

(इति पञ्चमः प्रवेशः)

## अथ षष्ठः प्रवेशः

कुमार : - कोऽहम्। का मे माता, को वा पिता, भगवान्नारायण इव किं स्वयम्भूरहमस्मि। किं द्रोणादिवदयोनिजोऽस्मि। किं शकुंतलेव मातापितृभ्यामुत्सृष्टोऽस्मि कामपरवशतया नीतिभ्रष्टाभ्यां समाजभीत्या। सत्यमित्थमेव संजातं स्यादिति मे प्रतिभाति। इन्द्रियतर्पण दुरभिलाषेण यथेच्छं रमणीभिर्विहृत्य पुनः पालनभारजिहीर्षया समाजापवादपरिजिहीर्षया निष्करुणं सहजमपि पशु-पक्षिसाधारणमपि अपत्य वात्सल्यमुत्सार्य कपूयकूष्माण्डमिवापत्यं परित्यजतां भगवान् विश्वामित्र एव प्रथमं मार्गदर्शि पुण्यवैभवभागिति मे प्रतिभाति। आनन्दग्रन्थिरिति प्रथिते तपसा विविधव्रतैः नानाप्रयत्नैरपि लब्धुमभिलषणीयेऽप्यपत्ये प्राणेभ्योऽपि प्रणयास्पदे जातमात्रे

अविरताश्रुधारं सगग्द्रदकंठं रमणीयरूपया रमण्या पुरः प्रसारित-कोमलकरकमलधृते सुकुमारेऽप्यपत्ये वामबाहुपिहितवामनयनोऽपि-स्निग्धदक्षिणेक्षणकटाक्षं विनिक्षिपन्नन्ते निर्दयतां वहन् ऋषिरपि कथं विश्वस्य मित्रं स्यादिति तं पुत्रशत्रुं साधु समाचख्युः विश्वामित्रमिति कृपालवो विबुधाः। परमविदितप्रेमतत्त्वतया ऋषिपक्षपातितया च भगवान् पाणिनिः "मित्रे चर्षेच" इति सूत्रं विधाय, नाम्ना कर्मणा च कौशिकस्य निष्कृपतामपिदधौ। स्वभावतः परुषस्य पुरुषस्यास्तामियं कथा। पल्लवपेलवहृदया देवजातीया मेनकाऽपि जननी निजगर्भजनितमप्यपत्यं क्षित्यां प्रक्षिप्य कथं स्वर्गमयासीदिति खिद्यते चेतः। अथवा स्वैरचारिणीनामात्मनो दोषगोपनाय मानरक्षणार्थमयमेव सुलभोपायो यन्निर्दयमगत्याऽपत्यपरित्यागो नाम। मलसन्तत्यां सन्तत्यां विसृष्टायां नास्ति कौमार्यभङ्गभीतिः। नापवादप्रसंगः। नैवापमानावकाशः। ईदृशं परमसुलभमुपायं प्रथमोपज्ञतया प्रदर्शितवती विबुधवाराङ्गना मेनका कुलीनानामपि विविधविलासैर्वारयोषितोऽपि ह्रेपयन्तीनां सुशिक्षितप्रौढकन्यकानां नितरामुपचकारेति मन्ये। यदि मेनकेयं राजमार्गं चोरमार्गं नादर्शयिष्यत्तर्हि इदानीन्तनकन्यानां नितान्तमनुकम्पनीया दशा प्राप्स्यत। भगवति मेनके कलिकाले किल सुशिक्षितः कुलकुमारीजनो भवत्या नितान्तमधमर्णीकृतः। परं कृतघ्ना खलु ललनाजातिः। तवोपकारस्मरणाय मेनकाजयन्त्युत्सवो न सविजृम्भणमाचर्यतेऽमूभिस्सानन्दं सोत्साहं प्रतिवत्सरं त्वत्कृतिमनुकुर्वन्तीभिरपि। वसन्तमासे कुसुमशरविजयोल्लासे विमलतरसुधाकरकरनिकरक-लितप्रमोदपरिपाकायां राकायां विविध विधिनिर्बन्धं धिक्कृत्य, नीतिं निराकृत्य, -स्वच्छन्दविहारेण इतः परमपि वा मेनकाजयन्ती यावच्छक्यं बहिरङ्गे वा न चेत् गौप्ये वा निर्वर्तनीया। येन कृतज्ञता प्रदर्शिता स्यात्। ईदृशेन सर्वत्र सोत्साहं प्रवर्त्यमानेन महता समारम्भेण प्रसन्ना मेनका सुलभं श्रेयस्करं पन्थानमुपदिशेदात्मानुकृतिमनुतिष्ठन्तीनाम्। अस्तु वृथा परकीय विचारः। इदानीमहं मम विश्वामित्रं मेनकां च कुत्रान्विष्यामि। अन्विष्टावपि किमुपलभ्येते। उपलब्धावपि किं स्वीयं सुतमभिजानीतः। अभिजानन्तावपि समाजे सम्मानभाजौ तौ मां स्वीकृत्य कुतो वा समाजद्वेष-रोषतिरस्कारगौचरौ भवतः। पूर्वं विवेकविकला मातरः पितरश्चं विषयादपि चञ्चलेन्द्रियतर्पणादपि तनयांस्तनीयसः प्राणेभ्योऽपि

प्रियतमान्मत्वा तत्कृते महान्तमायास- मन्वभवन्सर्वस्वत्यागेऽपि कृतनिश्चयाः। दशदिक्षु निरातङ्कं प्रचरद्रथो दशरथः पुत्रावाप्तये महता प्रयासेन वितेने यज्ञम्। साधुष्वप्रतीपो दिलीपो नृपोऽपत्यमुखदर्शनापेक्षया वसिष्ठाश्रमे सश्रमवने धेनुसेवनमतनोत् परित्यक्तराजभोगः। पुत्रैकप्राणो द्रोणोऽपि निजापत्यानृतमयनिधनवा-र्ताश्रवणमात्रेण प्राणोत्क्रमणमवाप तत्क्षणमेव। परमिदानीन्तनाःसुशिक्षितम्मन्या इन्द्रियप्रीतिरेवेन्द्रलोकसान्द्रसुखमित्यभिमन्यन्ते। भ्रातरमवहेलयन्ति। बान्धवा- न्निन्दन्ति। परिहरन्ति दूरतः परिवारजनम्। वयस्यानुदस्यन्ति। किंबहुना निजजठरजातमपि तनयं क्रिमिमिव कीटकमिव सुखकण्टकं विदित्वैकपदे अनाथमपि अगतिकमपि दूरीकर्तुं मनागपि नैव दुःख्यन्ति। नैव त्रपन्ते। पुनश्च यथेच्छं विषयोपभोगैकनिरता आत्मानमेव विस्मरन्ति। किंपुनरनीतिजातांस्तनुजान्। यौ जातमात्रमेव मां निष्करुणमत्यजतां तयोःपित्रोरुपलम्भे किं मे सुखं कामान्धयोस्सन्निधाने। किंचान्य एव विचारणीयोंऽशोऽत्र। यदि शास्त्रविधिपरिणीताभ्यां दम्पतीभ्यां जातोऽभविष्यं तर्हि कुतस्ताभ्यां परिहापित ईदृशीं दुर्दशामन्वभविष्यम्। कुतोऽत्रानाथालये पालनमलप्स्ये। तन्मन्ये प्रेमोत्तरसहवासयोः सहवासोत्तरप्रेम्णोर्वा कयोश्चन स्वेच्छाचारिणोः योषा-पुरुषयोर्मेऽमङ्गलं जननमिति। एवं व्यतिकरे मातापित्रोरेकत्रावस्थानं संभावयितुं न शक्यते। मधुपानेऽवसिते नैव लतिकां स्प्रष्टुमीहते मधुकरः। अतो भुक्तभोगलतिका-मधुकरयोरिव मम जननी -जनकयोः सहासिकानुसंधानं दुश्शकं साहसमेवेति जाने। जनकोऽन्यामेव कन्यां परिणीतवान्स्यात्। दुर्भगा माता पुनरनूढेव कस्यचिद्दुर्दैविनः पाणि- गृहीती भवेत्। अतस्तयोर्मार्गणे सान्निध्यसंपादने कथं वा प्रत्याशा विधेया। कथं वा सुखसंभावना मनसा तन्वा च दूरयोः दूरीकृतमानवतयोस्सकाशात्।

सच्छीलमातापितृभ्यां लब्धजन्मानस्सहचरा बालका धन्याः खलु ये प्रातरुत्थानमारभ्य सायमाशयनं लालिता भोजिता बोधिता यथासुखमभिनन्द्यमानलीलाःकालमतिवाहयन्ति। हा धिङ्मां पितृसुखस्याभाजनीभूतम्। पूर्वं चन्द्रहासः परलोकगतमातापितृभ्यां विरहितः समाजलालितोऽभूत्। पापी चायं जन इह लोके जीवद्भ्यां पितृभ्यां परित्यक्तस्समाजेनावहेलितोऽभवम्।

अनाथालये नैकै सन्ति मादृशा अनाथा बालकाः। सर्वे एते वयं नवशिक्षणविजयपताकायमानास्स्मः। सभ्यसमाजे नाऽस्माकं गणनाऽस्ति। सुधारकास्सुधामधुरैर्वचनैः प्रीणयन्तोऽपि न सव्यवहारतामनुमन्यन्ते। धार्मिकास्तु धिक्कुर्वन्तीत्यविवादमेव। एव- मवस्थायामविदितेषु पितृषु, समाजे समाजे (समाः अजाः यस्य तस्मिन्) सति किं करणीयमस्मादृशैः। मानहीनतयाऽवस्थानं नाम जीवतो निधनमेव । प्रौढोऽपि सुशिक्षितोऽपि सभ्य समाजे प्रवेष्टुं नैव शक्नोमि सर्वैस्तिरस्कृतो लज्जितः। एवं सर्वत्रागतिकतयाऽधुना अनाथरक्षकं पुलिन्द-पुल्कसादीनामपि स्वभक्तानां सद्गतिप्रदं श्रीरमणमन्तरा को वा शरणं यामि। दीनबन्धो दयासिन्धो स्वैरविहारिपितृदुराचारवशादगतिकमनागसं शरणागतं करुणया मां पाहि पावननामधेय प्रभो पाहि पाहि पाहि।

(समाप्तमिदम्)

□□

# ३३. देवी वासन्ती

## प्रथमं प्रकरणम्

### "विजयतां महाराजः"

सकलभुवनतलललामायमाने रामणीयकजितपुरन्दरपुरे कृतनिजनिखिलैश्वर्यसारे महीमण्डलविभ्राजमानाप्रतिमशूरैकायतनतयाऽन्वर्थितनामधेये कर्णाटकक्षोणीदेवताकर्णताटङ्कायमाने महीशूरनगरे महता समारोहेण संप्रवृत्तो विजयदशमी महोत्सवः। महोत्सवमेतमुद्दिश्य निजनयननलिनसफलीकरणकामास्सहस्रशस्समाज़ग्मुर्देश-विदेशतस्सपरिवाराः जनाः। इदानीमिवासत्यपि मार्गसौकर्ये विद्यमानायामपि विविधानानुकूलतायां प्रयाणप्रवणतेयं निदर्शयति स्म वैदेशिकानां नववस्तुदर्शनकौतुकं साहसिकतां, तदितरेषां च राजभक्तिमतुलाम्। सर्वतो जनसंकुलेऽस्मिन् पुरे स्थातुमक्षमतया सुदूरमपससार निरुत्साहता। सहकार तरुनवपल्लवतोरणसमलङ्कृता वीथयः प्रजानां

प्रेमसहकारमभिव्यञ्जयन्। रम्भाकोमलोरुतुलितरम्भास्तम्भा 'महोत्सवारम्भ-समारम्भसंभ्रमसमुत्सकताविजयस्तम्भायमाना दिदृक्षागत जम्भारिस्तम्बेरमशुण्डां विडम्बयन्ति स्म। प्रतिगृहद्वारं निहिताः पूर्णकुम्भाः हृदयपूरणावशिष्टं प्रजानुरागजलं बिभ्रतीव व्यदृश्यन्त प्रेक्षकाणाम्। निबिडतरतोरणानि तेजस्विनोऽपरस्य प्रवेशासहनतयेव भगवतो मरीचिमालिनोऽपि नावकाशमदुः किरणैः प्रवेष्टुम्। परम् अपूर्वोत्सवदर्शन निरतिशयोत्कलिकयेव चोरमार्गेणाऽप्यन्तराधिगतावसरो भानुमान् करनिकरमर्पयामास। मन्दमारुतान्दोलिता अम्बरतटचूम्बिन्यः पताकाः गगनतलसंचारिणां सुपर्वणां राजधान्युल्लङ्घनापराधमसहमाना निवारयामासुरिव। गणनातीतजन-जनितहर्षकोलाहलरवबधिरीकृत श्रवणं पुरन्दरं पराभूय परापतदिव सुरलोकश्रीर्महीशूरपुरं पट्टकरणराजवरणमाकाङ्क्षमाणा। इतस्ततस्संचरत्सु पुनस्सरभसं पुरोधावत्सु सम्मुखागतान् जनान् वेत्रलतया सनिर्भर्त्सनं निवारयत्सु राजभटेषु, उभयपार्श्वतःपङ्क्तिशो गच्छत्सु रश्मिनिग्रहव्याजेन महाराजदिदृक्षयेव वक्रीकृतवक्त्राणां वाजिनां नियमनव्यग्रेषु सादिषु, दानजलधारानिर्जितशरणागतधाराधरपरम्पराविभ्रमकारिणीषु करिघटासु निरीक्षणोत्सुकप्रासादतलारूढविलासिनीजनानुसृतगमनेन मन्दं मन्दं पुरःप्रयान्तीषु दानोदकप्रस्रवणेन समुपार्जितमहाराजोपमासु, शौर्यादिगुणैरात्मनः पश्चिमतां निदर्शयत्स्विव पश्चात्प्रयाणोन्मुखेषु तुरङ्गमातङ्गपुङ्गवसमारूढेषु सामन्तभूपालेषु, वाद्यमानेषु मङ्गलवाद्येषु, नरीनृत्यमानासु वारविलासिनीषु, घोषयत्सु वेदमन्त्रान्भूसुरेषु, संस्तुवत्सु बन्दिषु, जयजयकारं कुर्वन्तीषु भक्तिपरवशासु प्रजासु, कटाक्षविक्षेपच्छलेन प्रेम्णा नीलकमलमालां मन्दस्मितरुचिररुचिविकिरणव्याजेन नवमल्लिकास्रजमिवार्पयन्तीषु लाजा-कुसुमवर्षणेन निर्मलमात्मनो मानसमुपहारीकुर्वन्तीष्विव पौरललनासु, दर्शनोन्मुखेष्वपि धनवृष्टिभारावनतमस्तकेषु याचकवृन्देषु, सरससंगीत-भङ्गीमङ्गीकुर्वाणासु सुमकोमलाङ्गीषु, शुभकराशीराशीन् वितरत्सु ज्ञान-तपोवृद्धेषु, भृशमन्तस्तप्यमानेषु बन्दीकृतवैरिजनेषु, सादरमुपचरत्सु महार्घवस्तूपायनप्रापणेन सार्थवाहेषु, सुवर्णमालालङ्कृतस्य विजयनाम्नो वारणवरेण्यस्योपरि शोभमाने कनकमयमण्डपे सुशोभितमणिमयासनो विविधरत्नसारखचितकिरीटमण्डितमौलिः तनुरुचाऽमरीसमचारुचामीकरचा-

मरग्राहिणीवीजनवायुविचलितदुकूलो महाराजः श्रीमान् चामराजः प्रजानिरतिशयसत्कारप्रमुदितस्वान्तः कमलमुकुलानुकारिणाऽञ्जलिना वर्षीयसस्सम्मानयन् कुन्दकुसुमरुचिसुधास्यन्दिना मन्दस्मितेनाभिनन्दयन्नखिल-जनवृन्दं प्रतिवीथि प्रत्यापणं सादरं स्वीकृतसत्कारः प्रतिगृहं लावण्यापहसिताप्सरोभिः सारसाक्षीभिः स्नेहप्रज्ज्वलितेन दीपेन हृदयेन च नीराज्यमानः स्वाराज्यसुखमिहैवानुभवन् क्रमेणोपससाद द्वारं प्रसादद्वारमिव राजलक्ष्म्याः।

आधोरणसंकेतसंकुचितोन्नमिते दंतिनो जानुतले निधाय पादमेकं यावदवतरति महाराजस्तावदेव प्रज्ञोत्कर्षपराजितसुरदेशिकः प्रज्ञाकरो नाम सचिववरस्ससंभ्रमं सविनयमुपागत्य दत्तहस्तावलम्बः शनैश्शनैः प्रवेशयामास विशालतमं सुधर्मोपमं सभामन्दिरं श्रिया मनुष्यधर्मसदृशं धर्मात्मानं राजानम्। तदा मुहुर्मुहुःप्रजानां सहर्षकरताडनध्वानद्विगुणितश्चालोकशब्दो लोका-लोकाचलमतीत्य भगवन्तं क्षीरशायिनमुद्बोधयामास श्रीनारायणम्। पुरः प्रधावतां कञ्चुकिनां करतलनिवारितोभयपार्श्वगतजनसमुदायेन साञ्जलिबन्धं प्रत्युत्थानसत्कृतो मणिमयसिंहासनमध्यारुरोह दिवाकर इवोदयगिरिवरं राजशेखरः। महाराजस्य निदेशेन यथोचितमासनमलङ्कुर्वाणेषु निखिलसभ्येषु मृदुलहासविकसितकपोलतलो महीपालो व्याजहार भावगभीरां गिरम्। "अयि गुणलेभ्यास्सभ्याः समस्त शास्त्रपार-दृश्वानोऽमात्यवर्याश्च अद्य खण्डेन्दुमण्डल-चूडामणेः दोर्दण्डगृहीत-कोदंडखंडिताखिल रिपुमण्डलस्याखण्डलादि सुरजे-गीयमानस्य चण्डिकाप्रणयिनश्चामुण्डेश्वरस्याखण्डकृपाप्रभावेण प्रकृतिपेशलानां प्रकृतीनां सहजस्नेहमहिम्ना च निरन्तरायमुदजृम्भत निरन्तर स्मरणस्थायी सीमोल्लङ्घन महोत्सवः। राजनिष्ठप्रजासमाचीर्णसत्कारभारेण धन्यमात्मान-माकलयामि। नूनं नेदमस्या व्यक्तेर्मानं, किंतु पूर्वराजर्षिप्रतिष्ठापित-सिंहासनस्यैवेति जानाम्यहम्। भवतां सहकारेण निर्जिता नैकशो नैके प्रतिद्वंद्विनः। अद्य निष्कण्टकं राज्यमिदम्। यावच्छक्यमथवा शक्तिमतिक्रम्यापि प्रजासुखाभिवृद्धये प्रायते प्रयतिष्ये च सोत्साहम् । इदमेव राज्ञां राजपुरुषाणां प्रधानं कर्तव्यं परमो धर्मः। प्रजा नाम-सुरक्षिताःकल्पपादपायन्ते, अरक्षिताश्च

कल्पान्तपावकायन्ते चेति त्रिकालसत्यमिदं तत्त्वं दृढतया निरूढं मे चेतसि। न खलु न वेद्मि प्रजापालनमुभयलोक श्रेयस्करमिति। निर्जरलोक-सामीप्यसूचिकया मनस्याशाकार्पण्यं शिरसि श्वेतिमानं चोपजनयन्त्या जरयाऽऽक्रम्यमाणोऽपि अचिरोपचितभवदीयभक्तिरुचिरोपचार-समुदितप्रमोदररसायनोपभोगेन नवतरुण इवेदानीं संवृत्तोऽस्मि। पुरेव पुरोऽपि केनाऽपि हेतुना सिंहासननिष्ठा भवतां नैव कदाऽपि शिथिलीभावमावहेदिति दृढीयान्नः प्रत्ययः। राज्याङ्कुरवृद्धेः प्रजाप्रेमजलसेचनमेव निदानमिति विन्दंत्येव भवन्तः"। इति। ततो विरतवचसि राज्ञि प्रमोदातिरेकपरवशीकृतचेतसां निजानुमतिसूचक करतलताडनध्वनिमुखरितदिगन्तानां प्रजानां मुखेभ्यो युगपदेवाविर्बभूव तारस्वरेण 'विजयतां विजयतां महाराजः समेधतां समेधतां राज्यम् चिरं जीयतां चिरं जीयतां कर्णाटकसिंहासनमनेन, चिरंजीवतु चिरंजीवतु प्रजारञ्जन लब्धवर्णोऽवर्णनीयगुणसागरः क्षोणीश्वरः" इति गगनतलभेदी ध्वनिः। प्रियपाठकमहाभागाः धन्यःकिल स राजर्षिः यःप्रजाशंसनभाजनीभूतः, धन्यास्ताः प्रजाः याश्च स्वप्रजानिर्विशेषमुपलाल्यन्ते महीपालेन। धन्या सा वसुन्धरा या राजन्वतीसंज्ञामधिगच्छत्यसुलभाम्।

## द्वितीयं प्रकरणम्

"यः प्रातरेव वसुधातलचक्रवर्ती
सायं स एव विपिने जटिलस्तपस्वी"॥
"हतविधिलसितानां ही विचित्रो विपाकः।"

कुसुमशरसार्वभौम सामन्ते हेमन्ते प्रशांन्तमयो निशान्तसमयः। अविरतं शिशिरशीकरशरविसरानलं विकिरतो मन्दमारुतस्य दुस्सहवेगमसहमानो वेपमानो मानिनीजनः प्रणामसहस्रेणाप्युपशमसीमानमस्पृशन्तं शपथ परम्परयाऽप्यन-पगतापचयपथं सखीसौहार्दमयवचनामृतेनाप्यनुपरतं मानमेकपदे विसृज्य विमनस्कतया जागरणजनितारुणिमचक्षुषा हृदयरागमुद्भावयत इव प्रणयिनः प्रीणयामास सरभसाशिथिलतरस्वयङ्ग्रहपरिष्वङ्गेण दूरीकृताभिषङ्गेण।

प्रखरतरपराक्रमाक्रान्तभुवनतलस्यापि भानुमत उदयमसहिष्णुरिव हेमन्तो हिमानीसेनासनाथो विजगीषतीव। मन्दो हि गन्धवहः कामीव कामिनीनां मदनोपासनारहस्यजपमन्त्रायमाणं सीत्कारं विपुलीकुर्वन् बिम्बफलविडम्बि-मधुराधरपल्लवं व्रणयन् रोमाञ्चकञ्चुकं समुदश्चयंश्च जग्राह पार्ष्णिग्राहकतां हेमन्तस्य। शीतभीता विहङ्गमा मिथश्श्लेषसुख परवशतानिमीलितनयना विस्मृताहारकल्पना नोत्सहन्ते निकायाद्बहिर्गन्तुम्। वनस्पतयोऽपि निस्पन्द-तामगमन् हिममहिमवशतः। निजवल्लभस्य पौरुषापचयमवलोक्य कमलिन्यो मुमुचुस्तुहिनकणव्याजेनानवरतानश्रुबिंदून्। विहगविहारशून्यतया हेमन्तभयेन मूकीभावमवापेव गगनतलम्। जनसंचारविरलतया विशालाऽपि नगरी न गरीयसीं गृणाति स्म शोभाम्।

समयेऽस्मिन् निखिलपुरव्यापी समरदेवताकरकङ्कणरवानुकारी करालतर-करवालनिकरखणत्कारभीकरो निशितशरविसरप्रसरत्सरत्कारसंकरो हेतिसंहति-हतजनशतचीत्कारमेदुरो भयसंभ्रान्तबालकहाहाकारदारुणतरः कातरदुस्तरदुःखा-तुरकान्ताजनदीर्घाक्रोशप्रखरः प्रधावितवाजिराजिखुरपुटपटत्कारकठोरस्समश्रूय-तमहान् कोलाहलः। भासुररुचा सुरराजतुलितस्य चामराजस्य दिगन्तविश्रान्तां राकासुधाकरकरनिकरन्यक्कारिणीं कीर्तिं वासवाभिलषणीयं विपुलतमं वैभवं सततमप्रतिहतां प्रभुतां चालोक्य दायादतासहजासूयाकलुषचेताः स्वभावपरुषो रुषोपस्कृतद्वेषो नरसराजो नाम वीरः प्रियसुहृदा दुराशाशताशान्त स्वान्ततयाऽ-कान्तेनापि कान्तनाम्ना संगतो विविधायुधभीषणतमया सेनया राज्याक्रमण-लालसया प्रविष्टो नगरीं प्रववृते समास्कन्दितुममन्दसाहसेन। निरागसां पौरजनानां लुनीहि शिरांसि, कर्तयावयवान्, हर मणीन्, विहर रमणीय-रमणीभिः, प्रहर प्रहरणैः, संहर राजनिष्ठान्, परिहरान्तराय विधायिनः, कुरु साहसं, निराकुरु प्रतिभटान्, बहिष्कुरु चाधीरतामित्याक्रोशन्तो नरसराजभटाः साटोपमाटीकमाना विपाटयन्तश्च सम्मुखागतान् पुटभेदनमखिल-मातेनुः कटुवेदनाविलम्। रणदेवीसत्कारायेव रुधिर जलेनासिच्यन्त वीथयः। पूर्णकुम्भशोभामभिभरुर्नररुण्डमालाः। विच्छिन्नं पाणिपादम् आन्त्रसूत्रेण ग्रथनायेव विकीर्णमासीदध्वनि तोरणप्रतिनिधितामगात्। साध्वसवेपमानानां बालकानां, सोरस्ताडनं तारस्वरेण परिदेवनापरवशानां मुहुर्मुहुर्विमूर्च्छ्य

लब्धसंज्ञानामविरतबाष्पधारया निजदुःखशमनायेव धरादेवीमभिषिञ्चन्तीनां विकीर्णकेशभराच्छन्नवदनकमलानां सीमन्तिनीनां किङ्कर्तव्यतामूढानां वर्षीयसां च करुणालापेन कृतान्तस्यापि नूनं हृदयं विदीर्णमासीत्।

अकरुणो नरसराजः किञ्चिदप्यविकृतकठोरमनाः क्रमेणाचक्रमे राजमन्दिरं वीरवरूथिनीपरिवृतः।

समापित प्राभातिकविधिश्चामराजो बहुलाश्रुतपूर्व कलकलरवाकर्णन-जनितसवेदनकुतूहलः किमिदमिति यावदवलोकयति बहिर्निक्षिप्तचक्षुषा तावत्समा-पतदेव पुरतः पुराकृतावमानस्मरणस्तीक्ष्णकौक्षेयकरुक्षकरो नरसराजस्सरभसं यमसदनातिथीकृतप्रतीहारजनेन निशितहतिप्रहृतिविपाटितकपाटतटद्वारान्तर-सुलभप्रवेशेनानीकेन समं स कान्तराजः। स्वप्नेऽप्यसंभावितया सहसाऽऽपति-तया विपदाऽप्यविचलित-मानसो धैर्यधनश्चामराजो धीरोचितमुवाच नीरसचेतसं नरसराजम्। जाल्मापसद, कृतघ्न, कुलकलङ्क, दूरमपेहि द्रुततरम्। नचेदेष चिरादुपोषितश्चन्द्रकलङ्कापहासी चन्द्रहासस्ते। छिन्नावयव निस्स्यंन्दिरुधिर-पारणासुखमनुभवेत्। अपास्तकुलाभिमानस्त्वं द्वेषिकुलसमुद्भवं जन्मद्वेषिणं कान्तराजमस्मिन्पुरे तत्राऽपि राजमन्दिरे कथं न त्रपसे प्रवेशयितुम्। दायादिको द्वेषो हि मूलोच्छेदिनं कुलद्वेषिणमनुसर्तुं कथमपि नार्हतीति नैव विज्ञातमीर्ष्या कलुषित चेतसा त्वया। न स्मरसि किं पूर्वानुभूतस्य मदाहितस्य असह्यदण्डस्य। कृतापराधमपि वैरिजनकारागारे. दुस्सहतरविविध वेदनानुभवविदूनमानसं त्वामगतिकमनाथं शतायुषाऽप्यसंभावितमोचनं कुलाभिमानेन केवलं कुलाभिमानेन समुद्रिक्तमना वैय्यक्तिकं वैरं दूरतोऽपसार्यागणय्य च ते दुस्सहदोषगुणं यदमोचयं तस्येदं प्रतिफलं दातुमुद्युक्तोऽसि किमिदानीम्। कृतघ्न, 'फणी पीत्वा क्षीरं वमति गरलं दुस्सहतरम्' इत्यभियुक्तोक्तिम-वितथीकृतवान् कृतान्तसदनस्यातिथीभवितुमधुना। मूढ, तिष्ठ, संप्रत्येव त्वां प्रेषयामि नारकीयातिथ्यस्वीकाराय परेतराण्मंदिरम्"। इति ब्रुवन्नेव कल्पान्तकालोपमः दशनखण्डनद्विगुणितारुणाधरदलो ज्वलदनलज्वालावलीं किरतेव पाटलरोचिषा घटितकुटिलभ्रुकुटिना चक्षुषा तत्क्षणान्निर्दहन्निव क्रोधभारासहिष्णुतयेव वेपमानशरीरो वार्धकसहजामबलीयस्तामनाकलय्य रोषस्फुरत्त्वेषावेशवशात्रव-

तरुणिमोद्दाम इव क्रूरताराक्षसीनिशिततररसनायमानं पिपासितपिशितमसिं कोशाद्बहिर्निस्सार्य यावत्समुत्पातयितुमुदयुङ्क्त तावत्स कुलाङ्गारः कलङ्कित-चरितेन विरसीकृतसत्कुलसरो नरसराजश्चामराज कटुवचनशरविसरविदीर्ण हृदयोऽपि तत्कालसमुदितत्रपाभरावनतमस्तकोऽपि परसुखोन्मूलनकुन्तेन विषमताविषलताशकुन्तेन संस्पृष्टदुरितपाकान्तेन कान्तराजेन प्रचोदितः प्रबलया राज्यलालसया बलादेव प्रेरितः सुदूरतोऽपसारितसारासारविवेकस्समं सहस्राधिकै र्भटैयुगपदेवोपचक्रमे विविधायुधैःप्रहर्तुम्। भवपाशायमाना चाशाविषवल्लरी निष्करुणतामरुभूमिसमुत्पन्ना हृदयारामे समुन्मूलयति कृतज्ञताचूतलताम्। समुत्सारयति कुलाभिमानकुरबकम्। जनयत्यविवेकमूर्च्छाम्। अङ्कुरयति निरङ्कुशप्रवृत्त्युन्मादम्। त्रिचतुरपरिवृतं महाराजं रिपुजनप्रहारैकगोचरमालोक्य क्षणं विभ्रान्तं विचेतनतामयासीदन्तःपुरम्। अकल्पितदुस्सहप्रसंगकर्कश क्रकचकृत्तचेतसः परिदेवितुमप्यलब्धावसराया महिष्या मानवत्याः तथा बालाया अबालसुधाकरवदनविकीर्णघननीलकुन्तलाया दिशि दिशि शरणमन्विच्छन्त्या इव भयविस्फारितनयनाभ्यां विलोकयन्त्याः सुकुमारतापहसितवासन्त्या वासन्त्या नाम राजदारिकाया नितान्तशोचनीयां दशां निशाम्य वलभीनिवासि पारावत-विरुतव्याजेन विललपुरचेतना अपि प्रासादाः। पुमपत्यसौभाग्य विरह विदून-मानसाया मानवत्या महिष्या अतर्कितापतितपत्यापदोऽनभिज्ञात दुःखलेशकथाया राजकुमार्याश्च आकस्मिकोपप्लवापातेन समुदितामनिर्वचनीयां दुरवस्थां कथां विलिखितुं विलिख्य वाचककोमलमनांस्युद्वेजयितुं च नैव पारयत्यस्मदीया पेलवा लेखनी।

तुमुले चाहवे प्रवृत्ते सिद्धादेशेन सर्वथा प्रतिकूलकाले नैव पराक्रमस्सफलतां लभेतेति विहितविचारो महाराजस्समरावेशविवशीकृतचेतस्सु विजय संभावनाविघूर्णमानचक्षुष्षु नरसराजादिषु सहसैवादृश्यतामियाय लब्धानुकूल समयः।

सौधतलान्तर्गतेन गहनविपिनमुपनयता सुरङ्गद्वारेण बहिर्निर्जगाम महाराजः। तीक्ष्णकौक्षेयकप्रहारविक्षतावयवनिष्यन्दिरुधिरबिन्दुसंदोहक्लिन्नस्स्विन्नः खिन्नश्च विश्राममुपगतः किञ्चिदिव। तदनु निकटवर्तिजलाशयमभ्युपेत्य

प्रक्षालितासृक् विच्छिन्नोत्तरीयार्द्रखण्डनिबद्धक्षतस्थलो निपीतजलो शरीरदुर्बलताऽसह्यपदक्रमणोऽपि शनैश्शनैराक्रममाणः पदवीं सिद्धाश्रममेकमुपेयिवान्। अतर्कितोपनतमालोक्य भूपालं संभ्रान्ता बटवः 'आगतो महाराजः समागतश्चामराजः उपागतो महीशूराधिराजः' इति ब्रुवन्तस्सरभसमुपेत्य सविनयं निवेदयामासुर्गुरवे। विस्मयविकसितलोचनस्तपोनिधिस्सुकृततीर्थोनाम महात्मा सिद्धपुरुषोऽकस्मादुपगतस्य वृत्तान्तमखिलं दिव्येन चक्षुषा विज्ञाय विनतमौलिमार्जितधूलिभूतलं मुकुलीकृतकरकमलं विवर्णवदनाभिव्यज्यमानविविधवेदनं मेदिनीनाथं क्षरत्करुणारसेन कटाक्षेण निरीक्ष्याचचक्षे गभीरस्वरेण। 'महाराज अलं खेदेन। अनियत सुख-दुःखाः खलु संसारिणः। प्रतिकूलदेवतया समनुप्राप्ता तवेयं दशा। मन्त्रिनिर्देशानुवर्तिना भवता पुष्कलं समरकुतूहलावेगं प्रतिबद्धवता समुचितमनुष्ठितम्। नचेन्महती एवानर्थपरम्पराऽनुभूयते स्म। अस्तु अपसारय, पराभवकातरतां हृदयात्। विधूनयाधिम्। दूरीकुरु दारदारिकानिष्टशङ्काम्। उत्सारयानुत्साहम्। निस्सारय पुनाराज्याधिगमाशङ्काम्। अचिरादेव कस्यचन महावीरस्य साहाय्येनाधिरोहिष्यसि सिंहासनम्। मानवत्या मानवत्या महिष्या वत्सया वासन्त्या च संगतः पुनरुत्कर्षमवाप्स्यसि। परं प्रतीपो विधिर्नैव देवतानुग्रहमन्तरा भजेदनुकूलतामिति मा विस्मर। देवताश्च धर्मकृत्यसापेक्षप्रसादाः। तद् धर्मे आधीयतां धीः। परिचर्यन्तां गुरवः। सेव्यन्तां साधवः। समाद्रियन्तां भूसुराः। विधीयन्तां नियमविधयः। तप्यतां तपः। जप्यंन्तां सद्यःफलदायिनो मन्त्राः। लुप्यतामश्रद्धा। लिप्यतां भक्तिरसेन मनः। उप्यन्तां सुखबीजानि सत्कर्माणि। ध्यानगोचरीक्रियतां भगवान्भूतभावनः पूतभावनया। अर्चय कुल देवताः। प्रार्थय चाभीष्टदानायेष्टदेवताः। नास्ति खल्वसाध्यं नाम जपादिसत्कर्मसमासादितसुकृतानां समाराधितदेवताप्रसादभाजनीभूतानाम्" इति। मुनिवचनमेतदाकर्ण्य दुरन्तचिन्तासंतानतान्तस्वान्तोऽपि वसुमतीकान्तश्शान्तिमुपगतस्तस्मिन्नेवाश्रमे गृहीतमुनिव्रतो जटाधरश्चीराम्बरो गुरुचरणैकशरणः कञ्चन कालमवात्सीद्देवताराधनतत्परो जपाद्यनुष्ठानमनुतिष्ठन्।

अगम्यः खलु कालस्य महिमा, यन्निलिम्पपतिसमृद्धिसंस्पर्धिसंपदा सुखसागर निमग्नोऽपि क्षणादन्धकूपे निपतति मानवः। वृन्दारक सुन्दरीवृन्दविनिन्दि-

सौन्दर्यसागरललनाललितविलासलोलोऽपि हन्ताचिरादेव वने बम्भ्रमीति भ्रान्तचित्तश्चैकाकी। कालस्यास्यैव कुटिलकटाक्षेण प्रासादे इव कान्तारेऽपि महिषीपरिवृतोऽपि महिषीविरहितः कालमतिवाहयति कृच्छ्रमयजीवनः। न कोऽपि लङ्घयितुमीष्टे शासनमस्य कालप्रभोः।

*(इति द्वितीयं प्रकरणं)*

## तृतीयं प्रकरणम्।

## "मञ्जुले मुग्धाऽसि"

मधुमासे माध्यान्हिकस्समयः। नरसराजदुश्चरितमसहमान इव भगवान् भानुमाली निजनामानुगुणं द्वादशात्मकतामेकदैव समादाय प्रखरतरकरनिकर-व्याजेन ज्वलज्ज्वलनज्वालावलीं किरन्निर्दहतीव स्म निखिलमेव जगलीतलम्। मार्तण्डश्चण्डांशुतां तपनतां चात्मनस्साधु समदर्शयत्। व्यजनमपि निजदाहशम-नाय व्यजनान्तरमाचकाङ्क्षे। सलिलमपि निलीननैसर्गिकशिशिरतासादनाय सलिलार्द्रवसनपरिच्छदमन्वैच्छत् । छायाऽपि भीष्मतरोष्मबाधापनोदाय स्पृहयामास च्छायान्तरम्। वारिसिक्तोशीरतालवृन्तवीजनजनितैः परिमलोद्गारिभिः शिशिरशीकरासारै स्समीरैः एलासुवासितस्य शर्कराचूर्णमधुरस्य जम्बीररसस्य पानेन, उष्णकाले शीतलीभावस्वभावस्य कूपोदकस्य स्नानेन तथाभूतसारसाक्षी-वक्षोरुहाश्लेषेण च प्रखरातपतापमपसारयितुं प्रयतमाना अपि नातिसफलता-मवापुर्जनाः। वदनाम्बुजे मौक्तिकश्रियमाबिभ्रद्भिःस्वेदबिन्दुभिः मुहुर्मुहुर्दीर्घतरै-रुच्छवसितैः कुसुमसुकुमाराणामवयवानां म्लानतया च विरहिवारिजाक्षीणां शोचनीयां मदनमधुमासप्रभावसमां दशां सूक्ष्मदृशा विवेक्तुं न कोऽपि प्रबभूव रसिकजनमन्तरेण। दिवा दिवाकरेण निशायां निशाकरेण मानसे कुसुमशरेण च परिबाध्यमानानां वियोगिवनितानां तादृशीं दुस्सहामवस्थां को नु वा वर्णयितुं शक्नुयात्। मीनकेतनविजययात्रासमुचिते चैत्रे मित्रोऽप्यमित्रतां लोकबन्धुरपि शत्रुतामयासीत् त्रयीतनुरपि रविःतीक्ष्णकिरणतया। विविधशीतलो-पचारसौलभ्यभाजि नगरेऽपि यदीदृशी दशा तदा किंवा वर्णनीया वैश्वानर-कणायमानधूलीपटलमये पथि सरभसं सनिर्वेदं च पदं निक्षिपतां मिहिरोग्रतरकिरणनिकरक्रकच शीर्यमाणशिरसां वारंवारं स्वेदोदकस्नानेनाऽप्य-नाप्ततापशान्तीनां पान्थानां दुरवस्था।

दुस्सहतमेऽस्मिन् समयेऽपि विधिविलासाधीनः कश्चनाध्वनीनो विरागीव भासमानस्सान्द्रतमभस्मालेपाच्छन्ननिजगौरवर्णस्सुधाकरकराकीर्णहिमगिरितुलां दधानो जटावृतवदनवारिजेन मेघमण्डलपरिवृतामृतकरं मधुकरपरम्परापरिधि-भूषिताम्भोजं च विडम्बयन् भव्याकृतिः पुरुषस्तप्तायश्चूर्णायमानपांसुसंदोहदन्दह्य-मानकोमलचरणतलस्स्वेदजलावगाहपरिक्लिन्नवसनः श्रान्तश्चातपक्लांतो मार्गं क्रममाणो महीशूरपुरपरिसरे चामराज- पुण्यमेव स्रवदिव विमलतमसलिलझरी-मेकामासाद्य संतुष्टमनाःस्नात्वा यथेच्छं च पीत्वा च पयः पुनःपुनरतृप्ततया निकटवर्तिनो वटतरोः प्रच्छायशीतले तले विश्राममयासीत् क्लमापगमकामः। क्षणादेवोपगूढोऽभवत् श्रमसहचर्या निद्रया।

चिरान्निद्रोत्थितस्स विरागी प्रस्रवणपानीयक्षालितकरचरणः कृतगण्डूषः परिमार्जितमुखकमलः आचांतसलिलः पुनर्नवोत्साहसंभृतो वेषविश्वस्तपुर-रक्षापुरुषैरप्रतिरुद्धमार्गस्सुलभतया प्रविश्य पुरीं निजोद्दिष्टप्रदेशमुपगम्य मधुरं गातुमुपचक्रमे "भज भुजगविभूषं मञ्जुले नञ्जराजम्" इति। हृदयङ्गमां संगीतभङ्गीमिमाकर्ण्य देवराजनाम्नो धनिकस्य तनया मञ्जुलस्वरतयाऽ-न्वर्थितमञ्जुलानामधेया प्रासादतलारूढा मूढा च परिचितस्वरतया 'किमिदं, कुत आयातो मधुरो गभीरस्स्वर" इति श्रुताकस्मिकजीमूतनादा मयूरीव चकिता गवाक्षाच्चिक्षेप बहिः कुतूहलाकुलं चपलं चक्षुः। द्वारोपान्तवेदिकायां निषण्णं दृश्यमानं विरागिणं वीक्ष्य विषण्णा सा बाला मनस्येवं चिन्तयामास। "अहो किमेतत्। स्वरःपरिचित इव श्रूयते। आकृतिरन्या दृश्यते। अथवा संवादी चायं ध्वनिस्स्यात्" इति। पुनरालोचयामास साऽऽयतलोचना। "स्वरसंवादो न चायमाकस्मिकः। यतस्संगीताक्षराणि तु मामेवोपस्पृशन्ति। परिचाययन्ति च प्रणयिनो नाम। अतो विरागिणाऽमुना मम वल्लभेन भाव्यम्" इति। निश्चित्यैवं सा सारसाक्षी क्षीणसंदेहा पुलकितदेहा समुद्बुद्ध-विदेहा समुच्छलद्विविधेहा सती ललितां नाम दासीमाहूयावादीत् – "अयि द्वारसन्निहितं विरागिणमिहानय सत्वरम्" इति। मन्दहासविकसितकपोला ललिताऽलपन्मन्दम्। "स्वामिनि किमेवमुच्यते। अद्य खलु विपरीतैव रीतिर्भासते ते। कुतस्ते कातरे चञ्चलतारे लोचने भ्रमद्भ्रमरतामरससामरस्यं वहतः। विकचकमलमपहसतीव ते मुखम्। कम्पते ध्वनिः। पञ्चशरसायक-

निवारणकञ्चुकायमानरोमाञ्चसंचयसमुदञ्चितेयं तनुः। मानसिकी स्थितिरन्यैव दृश्यते वचनवैखरी च विचित्रा। आस्तां तावदिदम्। मानिनि कुतो वा संभ्रान्तया किमिदं विस्मृतम्। यदन्तःपुरं नाम पुरुषमशकानामप्यसुलभा-निष्टप्रवेशम्। किंपुनर्नवस्य किं पुनस्तरां तरुणस्य, किंपुनस्तमां भिक्षाटनमातन्वतः परिचयगन्ध विहीनस्य संभाव्यमानवञ्चनाह्रियमाण परधनदारादि-कस्य विरागिणः। मञ्जुले स्वस्थचित्ता भव। विचारय किञ्चित्। चारित्र्यशुद्धे शुद्धान्ते विरागिप्रवेशः पितृ-सहोदर विदितः कमनर्थमाकलयेदिति। इत उत्तरं स्वामिनी प्रमाणम्" इति। वसनाञ्चलेन पुनः पुनरुदीयमान-हासगूहनतत्पराया ललिताया आलापं प्रलापतुल्यमाकलय्य कलभाषिणी सा किञ्चिदिव रोषकषायितचक्षुषा निरीक्ष्याचचक्षे। 'किमकारणं हससि। तव विरसेनोपदेशेनालम्। सर्वं जानामि ललिते। नायमुपहासावसरः। निरनुयोज्या-धिकारं स्वामिपदं किं न वेत्सि मूढे। त्वरितं गच्छ, समानयात्र विरागिणम्' इति निशम्यैतद्वचनं पुनरुच्चैर्हसितुमारेभे ललितविलासा ललिता। "दुष्टे दूरमपसर। कुतोऽयमट्टहासोऽट्टालिकाभेदकः" इति मञ्जुलया परिपृष्टा सा स्पष्टमाचष्टे स्म। "स्वामिनि भामिनि विरागिणोऽस्य स्वरूपं मधुरस्वरेण गर्भिताकूतगीताक्षरैश्च भवत्येव मयाऽपि स्फुटमज्ञायि। अतो निरुद्धोऽपि हासः पुनः प्रस्फुरत्येव। क्षम्यतामिदमागो महाभागया। द्रुतं प्रवेशयिष्यामि भवत्या रागविषयं विरागिणम्" इति। तदनु ते उभे अपि मिथो विदिताभिप्राये कञ्चन समयं भूतलचूम्बिललाटं सवेदनोदरविन्यस्तहस्तकिसलयं पातं पातं जहसतुस्स्वैरम्।

अवसिते च हासावेगे शिञ्जानन्नूपुरा गुञ्जारवमुखरमधुकरावृतमुखकमला मञ्जुलालापा मञ्जुला गुणपुञ्जरञ्जितसकलजनां ललिताकृतिं ललिताकलिता-ञ्जलिमभाणीदेणीदृशम्। "ललिते मा चिरम्। द्वारिस्थितस्य विरागिणो व्यतीतस्समयो महान्। हासपरवशाभ्यामावाभ्यां नालक्षि। धावन्ती गच्छ। सबहुमानमानीयतां माननीयो मानिनीजनप्रियोऽयम्" इति। व्यतिकरेऽस्मिन् पुनस्तदेव गीतमश्रूयत 'भज भुजगविभूषं मञ्जुले नञ्जराजम्' इति। तदाश्रुत्य श्रुतिमनोहरमातुरतापिशुनं गानमुपजातामन्दमन्दाक्षसस्पन्दताराक्षीं तारापतिमुखीं सखीमिवामन्त्र्य ललिता द्वारदेशमुपगता सप्रश्रयमवोचद्विरागिणमन्तः-

पुरप्रवेशप्रतीक्षणम्। "महाशय प्रविश्यतामन्तःपुरमसंशयम्। कृतार्थीक्रियतां लोचनयुगलं त्रिलोक दुर्लभवस्तुदर्शनेन। स्वीक्रियतामतिथिसत्कारः। अलङ्क्रियतामवरोधगृहं चरणरजःकणैः। पावनतामुपनीयतां सेवाग्रहणेन विनीतस्सेवक जनः। अनुगृह्यतां मम स्वामिनी चामन्त्रणानुमत्या" इति। निजाभीष्टवादिनी तां मनसा अभिनंद्य बहिरप्रकाशितानन्दचर्यः "अयि किं कार्यमस्माकमन्तःपुरे विरागिणाम्। तथाऽपि प्रणयिजन-प्रणयस्यानुल्लङ्घनीयतयाऽवश्य-मागमिष्यामि। प्रयाहि पुरतः। अविदिताध्वा त्वामनुसरामि" इति जगाद प्रमोदस्मितमावृण्वानो विरागी। "इत इतो महाभागः इति व्याहरन्ती सा क्रमात्प्रवेश्य चान्तःपुरं तं महात्मानं मञ्जुलामलापीदापीयमानलावण्यरसां विरागिणः सरागनयनाभ्याम्।" 'सुभगे तवाभीष्टस्समागतोऽयं विरागी । ऐन्द्रजालिकविद्याविशारदाऽहं क्षणादेव करोमि विरागिणमेनं नञ्जराजं सरागं तव भाविवल्लभम्। परीक्षस्व ममापूर्वां विद्याम्' इति। विदितस्वरुपोऽहममूभ्यामिति स विरागी कृतकजटाभारमपनीय शिरसो मन्दस्मितसमुल्लसत्कपोलतलस्तूष्णीमवतस्थे रिपुजनभञ्जनो नञ्जराजः। प्रकटितस्वरूपं नञ्जराजमवलोक्य प्रेमभरपरवशा सरभसमुपेत्य गाढमालिलिङ्ग कुसुमकोमलाङ्गी विस्मृतत्रपाकथा निस्सङ्कोचम्। गाढोपगूढनञ्जराजदृढकायां प्रेमैकनिकायां द्विजराजमुखीमुवाच मन्दस्वरेण ललिता। 'विरागिण्याश्लिष्टे शरीरे भसितलेपोऽपरिहरः'। अयि प्रियसन्निधानेऽपि भसितलेपरोचिषा वियोगिनीव पाण्डुच्छायां धत्से' इति।

ततो मन्दाक्षमन्दाक्षं निरीक्षमाणा मञ्जुला कान्तेन नञ्जराजेन नितान्त रसमन्विच्छन्ती व्याजहारैवम्। 'ललिते बहुश्रान्त इवाभाति महाभागः। तदभ्यञ्जनोपयुक्ताः परिकल्पय सामग्रीः। तापय पयः सज्जीकुरु पाकविधिम्'। इति। तदनुज्ञाता विदित तदीयेङ्गिता सा सेविका जगामानन्तरकरणीयाय। इतो मञ्जुला कोमलबाहुलतापाशनिगडितकण्ठा प्रियोरसि विन्यस्तमस्तका-स्थूलस्थूलानश्रुबिन्दूनुत्सृजन्ती चरणनखैः स्वरोचिःप्रापितमाणिक्यशोभं भूमितलं लिखन्ती वसुधातलपत्रे साञ्जनबाष्पोदकमष्या पदनखलेखन्या हृदयवेदनां लिपिविषयतां नेष्यन्तीव परिरम्भशैथिल्यशङ्कया निस्पन्दशरीरा करीराभपयोधरा धरातलतिलोत्तमा नरोत्तमासंगनिर्वृता क्षणं तथैव तस्थौ। प्रियायास्तादृगवस्थानि-

रीक्षणदूयमानमानसो नञ्जराजस्तां सान्त्वयितुं कोमलकराङ्गुलिभिस्तस्या-श्चिबुकमुन्नमय्य, सम्मार्ज्य पाणितलेनाश्रुकणिकाः, परामृश्य सीमन्तरेखां, मांसलांसनिहितवामभुजस्सन्नेवमाचख्यौ प्रणयरससेचकेन समदुःखतासूचकेन मल्लिकाकुसुमसौकुर्यापहासिमृदुलाङ्गि किमाया-स्वरेण। "प्रिये मञ्जुले मल्लिकाकुसुमसौकुर्यापहासिमृदुलाङ्गि किमाया-सयस्यात्मानं वृथा परितापेन। आनन्दानुभवसमयेऽपि तवायमश्रुबिन्दु-संदोहस्संदेहानले निक्षिप्य दन्दहीति मामिन्दुसुन्दराननेऽमन्दम्। मन्दस्मितोत्फुल्ल-मुकुरावदातकपोलतल दिव्यच्छविच्छटाच्छुरितेन मम दशनावलीकृतार्थी-करणोत्सुकता चिरधृता नूनमिदानीं मन्दतामुपगता। अहो चित्रमिदं यत्तव बाष्पोदकेन मम चिन्तानलः प्रज्वलति। उष्णश्वसितेन जडतामुपैति मे मनः। पयोधरकम्पेन निस्पन्दतां विन्दते शरीरम्। प्रणयिनि समावृणु शोकावेगम्। अपावृणु हृदयाशयम्' इति। ततस्समाहितचित्ता प्रियवचनामृत-सेचनशिथिलीभूतहृत्तापा बाहुपाशवेष्ठितप्रियकण्ठा सोत्कण्ठं कलकण्ठस्वनेन प्रत्यक्षरं क्षरत्सुधारसां व्याजहार गिरम्। 'प्राणनाथ सुखभोगैकोचितो भवाननाथ, इव धृतविरागिवेषः क्षुत्पिपासाकुलो भुवने बम्भ्रमीतीति नितान्तं व्याकुलाऽस्मि। कियत्समयं वेदृशी दुस्सहा दशाऽनुभवितव्या भवता। मयाऽपि विरहवेदना सोढव्या। दयितेश्वर, नेतःपरं क्षणमपि त्वां विरहय्य मया शक्यते स्थातुम्। अतोऽनुजानीहि मामनुगन्तुम् जानकीव श्रीरामं, दमयंतीव नलं पाञ्चालीव पाण्डवान्। समदुःखानुभोगा भवितुमिच्छामि ते। विरहेण ते प्रासादोऽपि न मनः प्रसादमुत्पादयति। अलङ्कारा अलङ्कारगोचराः कलङ्कायन्ते। दुकूलानि न शोभानुकूलानि भवन्ति। स्वादुतरोऽयमाहारो नीरसतामनुभावयति। किंबहुना सर्वमपि भोगसाधनं वेदनायोगनिदान-तामुपगच्छति। प्रसीद, प्राणवल्लभ, मामनुगृहाण चरणदासीम्" इति। एवं पिकपञ्चमानुकारिस्वर- मृदुमधुरगिरा भाषमाणां पुष्करेक्षणां कटाक्षेण प्रेक्षमाणामालोक्य पुनः प्रेमपरवशो नञ्जराजो मणिदर्पणविमलकपोलं चञ्चुकृतोष्ठपुटेन प्रेममुद्राङ्कितं विधायाऽभ्यधात्सुधाकरवदनाम्। 'प्रणयदेवते मञ्जुभाषिणि मञ्जुले मुग्धाऽसि। भवतीमिव मामपि न खलु न पीडयति विरहवेदना। निरन्तरं परिवर्तत एव स्वान्ते भवत्याः प्रणयलीलासुरवं, तिरस्कृतस्वर्गीयामोदमेतदनुभवितुं बलवती प्रत्याशा। परं किं करोमि। विजयमदान्धो हि नीचतमो नरसराजो वशीकृत्य महीशूरपुरीं चामराजपक्षपाति-

नस्स्वस्याननुकूलांश्च वीरान् घोरापदि पातयितुमुद्यतोऽस्ति स्ववश्यतां नेतुम्। बहवस्स्वामिभक्ता देहवियुक्ता अकारिषतानेन नराकारेण राक्षसेन। अतो भीतो हि तव पिता चैहिकभोगेनैव धन्यतां मन्यमानो महाराज-कृतमुपकारभरं क्षणादेव विस्मृत्य स्वामिनिष्ठां स्वप्रतिष्ठाहानिकरीं विज्ञाय लाङ्गूलचालनवृत्तिं स्वीचकार निरभिमानं नरसराजस्य। मामपि तथाकर्तुमुपादिशत्। 'वनवासिनोऽभिलषितदानेऽनिष्टनिवारणे चासमर्थस्य चामराजस्य पक्षपातितया विक्रमशालिनो नरसराजस्य प्रतिपक्षितया च किं फलं विपुलवैभव-जीविततवियोगमन्तरा। अतोऽनुसर नरसराजम्। अनुभव वसुधायामेव नाकिसुखं भाविभार्यया मम तनयया मञ्जुलया। न चेत् नरसराजरोषविषयतया कफल्लकीभूतो भवान्कथमपि नार्हसि दुहितरं मे पाणिगृहीती कर्तुम्' इति। उपदेशवचस्ते पितुस्तदिदानीमपि विषविलेपनमिव संतापयत्यन्तरङ्गम् । दुर्वृत्तनरसराजसेवयाऽनुभूयमानं कान्ता-कनकसुखं नरकसमं ।

महाराजपरिचर्यया जायमानं निधनमपि स्वर्गसाधनमित्युदीर्य पापानुयायि देवराजमुखावलोकनमपि पापकरं मत्वा निरगां त्वत्पितुरगारादिति जानात्येव भवती। मञ्जुले, प्रियमञ्जुले, प्राण प्रियमञ्जुले, प्राणशुकपञ्जरायमाणे तदा भवती रोषावेशेन गृहान्निस्सरन्तं मां निरुध्य, रहस्युपानीय, बध्वा बाहुपाशेन, नयननलिनोदितेन वक्षोजशैलपरिपतनविशीर्णकणेन बाष्पवारिणा स्नापयित्वा 'जननेन देहे पितुरधीनेऽपि प्राणास्तु मदायत्ताः। तानुपहरामि भवते •प्रणयदेवतायै' इति कर्णरसायनेन वचनेन "भवन्तं अथवाऽन्तकमन्तरा न कोऽपि मां स्प्रष्टुं प्रभवेदिति" प्रतिज्ञया च यदि प्रणयपाशेन मां बद्धं नाकरिष्यद्भवती तर्हि महाराजविजयं विना नाप्रवेक्ष्यं पुरीमिमाम्। वल्लभे सत्स्वपि महत्तरकार्येषु विरहदूनां त्वां समाहितां विधातुमधुनाऽ- हमुपागतोऽस्मि लब्धावसरः। सांप्रतं पुनर्गन्ताऽस्मि कार्यविवशः। अनुमन्यतां प्रेम्णा। अचिरादेव लब्धविजयं महाराजं पुरस्कृत्य प्रविष्टपत्तनस्त्वामनुनेष्यामि" इति।

विरतवचसि दयिते पुनर्विरहकल्पनादूना मीनाक्षी क्षीणोत्साहमभाणीत्। "महाराजविजयाय जनपदकल्याणाय च नाहं प्रत्यूहकारिणी भवितुमिच्छामि। एकस्या व्यक्तेः कृते जनपदराजहिताचरणपराङ्मुखता नैव साधुसम्मतेति

जागर्ति मय्यपि विवेकः। परं श्रान्तेन भवताऽद्यैकं दिवसमत्रोषित्वा गन्तव्यम्। नचेत्तावानवकाशः स्नातानुलिप्तेन कृताहारेण च विहितं विधेयं कार्यम्' इति। तथाऽस्त्विति दत्तानुमतिं कान्तं पीठनिषण्णं करकमलनिहिततैलपात्रा त्रपा-स्मित व्यतिकरेण नितान्तमुग्धमुखी क्वणत्कनककङ्कणं नृत्यत्पयोधरं स्फुरद्रोमाञ्चम् अन्तरान्तरा ईषदुन्मुखप्रियनिरीक्षणद्विगुणितव्रीडाभरनिमीलित-लोचना तैलमालेप्योष्णोदकेनाभ्यङ्गस्नानमङ्गलाङ्गमकरोत्कनकाङ्गी। ततो दत्तधौतवसना सुवर्णभाजने स्वादुस्वादूनि पक्वान्नानि परिवेषयन्ती व्यजनेन वीजयन्ती च मध्ये तोषयामास हृदयेश्वरम्। अम्बुजाक्षी समुपाहृतताम्बूल-चर्वणपरो नञ्जराजो बिम्बाधरमधुरिमैव मिष्टान्नतो साधीयान् इति वदन् हृदयरागं व्यञ्जयामासारुणाधरदले। ततःकिञ्चिदिव संचिन्त्य चञ्चलाक्षीमुवाच नञ्जराजः। 'त्वत्समागमसुखपारावारनिमग्नमना मुख्यमुद्दिष्टं. कार्यमेव व्यस्मार्षमहम्। प्रेमा हि सर्वविस्मृतिधामेति साधु संगिरन्ते साधवः। महाराजवियुक्ताया महाराज्ञ्या मानवत्या भर्तृदारिकाया वासन्त्याश्च वृत्तान्तमव-गन्तुमुपागतोऽस्मि परिचयप्रचुरेऽस्मिन्नगरे जनानभिज्ञार्थं धृतवेषान्तरः। अपि जानासि तदुदन्तम्' इति।

'अद्यैव महाराज्ञीसेविकया कथितं यत् आशान्तमनुपगतोऽशान्तो मदनाक्रान्तः कान्तराजः द्विजराजकान्तमुखीं वासन्तीं बलादेव परिणिनीषति विविधैरुपायैः। भर्तृदारिका पाणिग्रहणेन प्रजानुरागं संपाद्य नरसराजं विजयनिराशं कृत्वा संपूर्णमेव राज्यं स्वयमेक एव भोक्तुं प्रयतते। तमेनं दुराशाक्रान्तं कान्तराजं मृत्युदेव्या संगतं कृतान्तनिशान्तवासिनं चिकीर्षति विरसो नरसराजः। मानवती वासन्ती च प्राणान्तेऽपि न कान्तराजवश्यतां गमिष्यतः इति।" एवं प्रियायाः प्रियवचनमाकर्ण्य रुष्टः क्षणादेव तुष्टो नञ्जराजो व्याजहार-आम् सारमेय इव हविस्सामग्रीमादातुमुद्युङ्क्ते वासन्तीं भ्रान्तः कान्तराजः। भवतु। अचिरादेवास्य फलमुपभोक्ष्यति ध्वाङ्क्षसदृशोऽ-यम्। कान्तनरसयोरयं विरसीभावःसरसीभूतो नो विजयवारिजस्येति प्रमोमुदीति मे चेतः। मानवती -वासन्त्योश्च कान्तराजतिरस्कारोऽपि नस्संतोषावह एव नितान्तम्। महति कृच्छ्रेऽपि तयोरीदृशो धृतिगरिमा महाराजपुण्यमहिमैवेति मे मतिः। अस्तु मञ्जुले क्षणमपि नावकाशोऽस्ति स्थातुमत्राधुना। महत्तरं

कार्य-जातं निर्वहणीयमस्ति पुरः। प्रज्ञावतीं भवतीमपि कार्यसचिवां विधातुमहमुत्सहे". इत्युक्त्वा पुनर्दृढं परिष्वज्य प्रयाणोन्मुखं प्राण-प्रणयिनं निर्गलद्बाष्पप्रसरनिरोधविफलप्रयासा प्रिया सा विस्फारित-नयननिपीतदयितानन-कमलसौन्दर्यमधुरमधुरसा सगद्गदस्वरेण व्यजिज्ञपत्। "नाथ विदध्यात्ते सर्वमङ्गलादेवी सर्व-मङ्गलानि सर्वतस्सर्वदा। सर्वथा रक्षतात्भक्तजनशङ्करः शङ्करः। शिवास्ते पन्थानः। सर्वदा नितरामप्रमत्तेन भवितव्यम्। मुहुर्मुहुर्निवेद्यतां विजययात्रोदन्तश्चारमुखेन। आनन्द्यतां संदेशप्रेषणेन चरणारविन्ददासीयम्। अचिरादेव विजयश्रियः सपत्नीभूय स्तनोपपीडं गाढं त्वां परिरब्धुमुत्सहते चेतः'। इति। एवं मञ्जुलमाचक्षाणां मञ्जुलां पुनः पुनरामन्त्र्य पुनर्गृहीतविरागिनेपथ्यो नञ्जराजो निर्जगाम प्रियाधामतो वारं वारं वदनं विवर्त्य प्राणेश्वरीं प्रेम्णा निरीक्षमाणः।

*(इति तृतीयं प्रकरणं)*

## चतुर्थं प्रकरणम्
## (अद्भुतः प्रसंगः)

मिथस्सखीभावेन विशालतरतरङ्गबाहुलतासमाश्लेषाभिरामं संगतयोः कपिला-कुण्डला कल्लोलिनीविलासिन्योः कर्णमण्डन-कुण्डलायमानो विशालशालिपुञ्जमञ्जुलो नञ्जनगुडग्रामो हालाहल-तापापनोदकामस्य कामरिपोः शैलाधिककैलासतोऽपि वेलातिगविलाससदनतामयासीत्। नवसस्यहरिद्वसनं वसाना वसुन्धरा विविधाराममनोहरा भगवन्तमम्बिकाकान्तं मृत्युञ्जयं नञ्जुण्डेश्वरं शीतलेन नदीस्रोतोद्वयेन सर्वतः प्रसृतेन सान्द्रतरतरु-वृन्दच्छायासंतानेन शिशिरयतीव शशिकलाधारणेनाप्यनुपशान्तसंतापम्। कृतदुरितभङ्गैर्भङ्गैर्मङ्गलमयीभ्यां तरंङ्गिणीभ्यामालिङ्गितस्स ग्रामपुंगवः समुत्सृष्टसापत्नमत्सराभ्यामनुकूलकलत्राभ्यां बाढमुपगूढस्य सुकृतगाढस्य पुरुषपरिवृढस्य शोभामाढौकत इव। अनवरतं समेधमानक्रोधावेशयोःपुरुष-मेधाविप्लवकरकठोरवचःकुठारयोः परस्परसवेगकरप्रहारजर्जरबालसुधाकरयोः सुरधुनी-भवान्योः कलहत्रासजनितशिरश्शूलेन शूलीति विश्रुतो महेश्वरो जगत्यदृष्टाश्रुतपूर्वसौभाग्यभाजं नञ्जनगुडग्रामराजमभिनन्दयितु मुपागतस्तत्रैव

स्थिरसुखसंभावनया वासमकरोदिव कृत्तिवासाः। नदीसंगमवैचित्र्यविशेषेण स्थूलतरोङ्कारवर्णाकारधारिणा वारिणा स ग्रामाग्रणीः प्रणवप्रणयिनो दाक्षायणीप्राणवल्लभस्य विशेषतो वल्लभतया प्रथितक्षेत्रमतल्लिकासु परिगण्यते। निर्वाणद्वारायमाणेन विशालेन द्वारेण समुत्तुङ्गतया परामृष्टपुरन्दरपुरेण सविधे श्रूयमाणसुररमणीरमणीयनूपुररवेण गोपुरेण, सुधर्मसभा- शोभाविडम्बिना मण्डपेन, शिल्पकला सौन्दर्यैकाकरेण गर्भागारेण च स देवालयो हेवाकमुपादयति देवानामपि।

आषाढ शुक्लैकादश्यां प्रदोषसमये प्रवासिनस्त्रयस्तमेनमुपायन् देवालयम्। तेजस्विनस्ते नवतरुणिमोल्लासिनो वेषभूषणैरार्यावर्तीयद्विजन्मतामवभासयन्तः प्रभावचकितैरर्चकैस्सादरममहीयन्त महीसुरैरहीनाहीनभूषणभक्तयो विहीनभूषणाः-पथिकाः। तदनु हूणविलासिनीगण्डपाण्डुना क्षीरोदधिडिण्डीरविडम्बिना ज्योतिष्मतीयुवतीविलासकुसुमकन्दुकेनेन्दुना जगदखिलमिदमकारि क्षीरप्लावितमिव रजतमयमिव नक्षत्रचूर्णलिप्तमिव कैलासगलितहराट्टाहासरसार्द्रमिव रजनीरज-काङ्क्नाविमलीकृतकिरणजालधवलदुकूलवेष्टितमिव। मूकीभूतभूतले सशोकी-कृतकोककामिनीकुले चैकीकृतप्रिय-प्रियामिथुने मनोज्ञशोभासनाथे निशीथे निखिलप्रपञ्चस्वायत्तीकरणचञ्चुरपि निशासहचरी श्रान्तावयवनवचैतन्यसंजीवनी निद्रा चिन्ताकान्तासमादृतानेतान्पान्थानियेष न परिस्प्रष्टुमपि सपत्नीसहजयाऽ-सूयया चिराय वयस्यद्वये स्वापपारवश्यमुपेयुषि स एको जटाजटिल स्त्रिरेखाविलसितनिटिलः स्वभावाकुटिलोऽध्वगो विशंकटसंकटपरिहाराय शशाङ्कशेखरं साधुजनशंकरं शंकरं तदेकतानमनाश्चिन्तयन्क्षणमवतस्थे। तस्मिन्पश्यत्येव सहसा प्रादुरासीन्मन्दीकृतदीपप्रकाशं विभासिगर्भमन्दिरं धूर्जटिलिङ्गात्मिकमपि भव्यं दिव्यं तेजः। तदुज्ज्वलतमं निरस्ततमस्तेजो विलोकयितुमसहमानो मीलितलोचनस्स प्रवासी 'नञ्जराज' इति स्वसंबोधकं गभीरं शब्दमुपाकर्ण्य चकित उन्मील्य चक्षुषी यावदवलोकयति पुरस्तावदेकः परमतेजःपुञ्जाकृतिर्योगीश्वरो दर्शनपथमलञ्चकार। भक्तिभरेण कृतप्रणामं कलिताञ्जलिं दलितारिकुलं नञ्जराजम् अक्षमालालङ्कृतेन वरदेन करकमलेन समुत्थाप्य स योगिकुलतिलको विपुलपुलकजालककण्टकिततनुमतनुगाम्भीर्येण ध्वनिना जगाद। "संकल्पगोचरं ते कार्यमचिरादेव सिद्धिसीमानमुपस्पृ-शत्यसंशयम्। श्रावणपूर्णिमायां चामुण्डेश्वरीदेवालये यदुवंशसंभवौ द्वौ तरुणौ

वीरपुरुषौ तव चक्षुस्सरणिमुपेष्यतः । तावेव कान्तराजसमेतस्य नरसराजस्य दुर्मदावमर्दनं करिष्यतः । ततो भवान् तपोमहिमविहतसकला शुभं महाराजं चामराजमुपानीय पुरीं तपोवनादधिष्ठापयतु सिंहासनम्। प्रत्युपकारतया च स महाराजो निजतनयां वासन्तीं यदुकुलललामाय तयोःवीर योर्वरीयसे यदुमहाराजाय राज्यदक्षिणापुरःस्सरमुपहारीकृत्य भूयात्कृतार्थः। तस्य कलियुग यदुराजस्य विश्रुतो वंशः प्रजारञ्जन-पुण्यगरिम्णा श्रीरमाप्रणयिप्रेम्णा च चिरकालं रुचिरभाग्यपरम्परासमृद्धं महीशूरराज्यमनुभविष्यति निरस्तकण्टकं निरातङ्कम्" इति। एवमावेद्य तत्क्षणादेवान्तर्हिते योगिराजे विस्मयानन्द-व्यतिकरविकसितवदनमानसो नञ्जराजस्तदैव प्रबोधिताय वयस्यद्वयाय तदद्भुतमखिलमुदन्तं श्रावयामास निजानन्दविभागकामः।

तयोरेकोऽब्रवीत् वासुदेवनामा "भ्रातर्नञ्जराज सन्ततधाराप्रवृत्तो हि संकल्पः कदाचित्तादृशप्रत्यक्षभ्रममुत्पादयति। ततो नास्ति सत्यवादिनोऽपि ते वचसि मे दृढीयान्प्रत्ययः। अथवा किं न संभाव्येत विपन्नपालकपन्नग-भूषसन्निधानविशेषमहिते पावनतमेऽस्मिन्प्रदेशे। अधुनाऽपि करुणारसनिष्यन्दि कटाक्षगोचरतां नयतु त्रिनयनोऽनाथा महीशूरप्रजाः। अनुगृण्हातु सपरिजनं तपस्विनं तुलितामरराजं चामराजम्। प्रसीदतु तपस्विन्या मानवत्याः। खलकान्तराजबलात्कारदुःखाक्रान्तस्वान्तायाः सुकुमारताविजित वासन्त्याश्च वासन्तीदेव्यास्सर्वथा दिशतु कुशलमविकलम्। सखे ! भवदावेदितवृत्तान्त-सत्यतामेव वयमाकाङ्क्षामहे। श्रावण-पौर्णिमायां यदि चामुण्डेश्वरी देवालये शूरौ युवानौ नयनातिथी-भविष्यतस्तर्हि भवदुदितमखिलमवितथं मंस्यामहे। आस्तामिदं। अहो अस्ताचलगुहाविलीनो नालोक्यते प्रालेयगभस्तिः। विरोधिविरहेण सर्वत्र प्रसृतं तमस्तोमं दमयितुमिव भानुमान् प्राहिणोत्पुरस्सा-रथिमरुणमरुणीकृतप्राचीदिगङ्गनावदनम्। तद् याम स्नातुं कृतममंगलसंगमं संगमं सरितोः । पुनीयामात्मानम्। शिशिरीकरवाम प्रवासोपवासतप्तं शरीरम्' इति। ततो विहितावगाहनास्समाचरितनित्याह्निकविधयः कृतदेवपूजा गृहीतप्रसादा वितीर्णदक्षिणाः प्रीणितार्चकास्समाहृतपारणाः पुनर्नमस्कृतेश्वरा ललाटचुम्बितभूतलास्संप्रार्थितसमीहितकार्यसिद्धयस्ते सुहृदः पुनः प्रयाणप्रवणा अभूवन्। स्मृतपूर्वरात्रिवृत्तान्तो नञ्जराजस्तदेकचिन्तनव्यग्रमनस्तयाऽनाकर्णित-मित्रवचाः अदृष्टविषममार्गजातस्खलनः प्रतस्थेऽवलम्बितूष्णीम्भावस्सहचराभ्यां

सह। मन्दं मन्दं निक्षिपन्पदानि पुनश्चिन्तयामास चेतसि। ह्यस्तननिशीथिन्यां दृष्टः प्रसङ्गो यथासहचरवचनं किं सततसंकल्पपरिणतभ्रमस्स्यात्। अथवा स योगीश्वरो वञ्चनार्थमवोचदनृतं वचः। तद्वचनस्तम्भनिहितभारो मत्संकल्पप्रासादः किं धूलिसाद्भवेत्। नहि नहि। न कदाऽप्येवं भविष्यति। प्रत्यक्षतो दृष्टं दिव्यरूपमधुनाऽपि चक्षुषोः पुरतःस्फुरतीव। स गभीरो नाद इदानीमपि कर्णविवरे संञ्चरतीव। नेदृशी स्थितिर्भ्रममन्वेति जागृतस्य। किंच तादृशा योगिनो न कदाऽपि वितथवादिनो विप्रलम्भकारिणो वा भवन्ति। अतस्संकल्पितसिद्धौ न संशीतिलेशस्याप्यवकाशः। किमपि वा वदतु वयस्यः" इति। एवंविधविचारजनितानन्दनिर्भरो नञ्जराजो मनस्स्वास्थ्यमापन्नः पूर्ववत् सुहृद्भ्यां समं सुखालापं कुर्वन् यथोद्दिष्टं देशमयासीदगणितायासः।

*(इति चतुर्थं प्रकरणं)*

## पञ्चमं प्रकरणम्
## शूरौ सहोदरौ

कृषीवल हर्षावहो वर्षासमयः। भगवान् मघवा दिनकरप्रखरतरकिरणनिकर संतप्तामविरतजलधाराभिरानन्दयति स्मेव वसुन्धराम्। दुर्वृत्तनरसराजप्रापितार्तिं महीशूरराज्याधिदेवीमवलोक्य खिन्नेव द्यौः ललनामात्रसहजसौहार्दक्लिन्ना जलधाराव्याजेन मुमोच बाष्पसंततिम्। विधिवशादासादितं पतिमनुचितं जलमुचं सान्द्रकृष्णवर्णं निर्वर्ण्य समुज्ज्वलत्कोपानला गौरी चपला सौदामनी मुहुर्मुहुः कडकडात्कारभीकरध्वनिना विभीषयन्ती नूनमयासीददृश्यताम्। लोकसमक्षं निजाङ्गनाकृतेन दुस्सहतरेणावमानेन विदूनमानसो धूमयोनिर्जलमयमात्मनश्शरीरं मोक्तुमुद्युक्त इवाबभौ मानधनः। वसुधादेवी गृहीतव्रतेव सरलासारस्नाता शुकसहस्रद्युति हरिद्वसनं परिदधतीव शोभते स्म। मण्डूका मेघराजस्य मागधतामगुः। सर्वतःप्रसृतवारिणी धारिणी वराहरूपेण हरिणा सद्य एव सागरात्समुद्धृतेवोल्ललास। गिरिप्रदेशान्निस्सरन्तो निर्झरा विमला हरविलोचना-नलोष्मविलीनरजताचलरसप्रवाहमन्वकुर्वन्। बहुलार्द्रतामुपगताः पादपा दलगलज्जलबिन्दुकैतवेन स्थूलमुक्ताफलैः परोपकारक्षमनिजजन्मदात्रीं भूतधात्रीम-

भिषिषिचुः कृतज्ञतया। समयेऽस्मिन् दुस्तरसंचारे कान्तारे शुण्डादण्डगण्डूषैः करिणीक्रीडानुषक्तानुषक्तान्मातङ्गान् पङ्किलपल्वले लुठतो वन्यमहिषान्विना न कस्यापि प्राणिनस्सुकरमासीद्दर्शनम्। वृष्टि भीताः पतत्रिणो निजपक्षाच्छन्नापत्या गृहीतमौनव्रता नीडेषु निलिल्युः। श्रावणपौर्णिमायां कुतोऽपि वा हेतोः कौचन युवानौ पटुतरतुरङ्गमारूढौ महीशूरपुरसविधे गहने वने प्रवसतस्म। चपलावपि तयोर्हयौ कर्दममये पथि सहजद्रुतगमने नापारयताम्।

प्रवसतोस्तयोस्तरुणयोस्तयोर्वरीयान् नीलोत्पललोचनो नीलिमभासुरो विशालभालश्चम्पककुसुमानुकारिसमुन्नतघोणो बिम्बफलविडम्बिपाटलाधरो वीरो लावण्यप्रभावेण विलासिनीजनमानसविहारचतुरस्सः नवसमुदितश्मश्रुकलापाङ्कुरेण वदनेन शशलक्ष्माणं सुधाकरं मधुकरकुलकलितकमलं च तुलासौभाग्यास्पदमाकलयामास। आजानुलम्बिबाहोरस्य गभीरमुद्रासमुज्ज्वलं नयनतेजश्च द्रष्टुश्चेतसि प्रेमसहकृतं भयमुपजनयति स्म। गौरवर्णः कनीयांस्तु दृढाङ्गस्सत्वशाली सौम्याकृतिरपि सहसाऽधृष्य एवाभूत्। पङ्किलप्रदेशे मन्दं मन्दं पदं निक्षिपन्तं वाजिनमालोक्य किञ्चिदिव कुपितो गुणज्येष्ठो ज्येष्ठो यावत्प्रग्रहमाचकर्ष तावदेव तदसहमानस्स हयोत्तमो विदितारूढवीराशयो द्रुतगतिमङ्गीचकार। स चपलगति- समुच्छलितसलिलकणैः प्रीतवसुमतीवितीर्णमुक्ताफलभ्रमं जनयन्नधावत्सत्वरम्। तदा कनिष्ठो गौरोऽपि नाम्ना कृष्णोऽग्रजं व्याजहार।

"अयि भ्रातः स्वामिगुणास्सेवकजनेषु संक्रमन्ते" इति जनप्रवादमवितथमेव मन्ये।

"यत् भवानिवायमश्वोऽपि सहनशक्तिकथानभिज्ञ इव लक्ष्यते। उग्रस्वभावः सुग्रीवनामा तुरङ्गमाग्र्यो नैव क्षमते प्रग्रहाकृष्टिम्।"

यदुः- 'वत्स कृष्णराज सत्यमाह भवान्' इत्युदीर्य श्रान्तस्यार्वणस्सांत्वनाय पृष्ठभागमास्फालयामास करतलेन। क्रमेणाध्वानमाक्रममाणो यदुराजः सहोदरमवादीत् -

'वत्स कृष्णराज नाहमाकर्षं सुग्रीवस्य द्रुतगमनाय रश्मिम्। किंतु विषादविकलमनास्तथाऽऽचरम्। ह्यस्तनदिने निशायां नःपूर्वजैःधर्मात्मभिः जीवितनिर्विशेषं परिपालितस्य सर्वसंपत्समृद्धस्य पुरस्य भग्नावशेषदुरवस्थां निरीक्ष्य नितान्तमुद्विग्नं मनः। महानुभावै- र्विक्रमैकरसैः पूर्वजैः प्राणपणेन

संपादितं समूर्जितं प्राज्यवैभवं राज्यं संस्मरतः इदानीन्तनां शोच्यां च दशां निशामयतः कस्य वा स्वाभिमानिनो मनसि नोद्भवेन्महीयानुद्वेगः। वत्स द्वारसमुद्रराज्यं विलयसमुद्रे निमग्नम्। देवगिरि राज्यमपि देवभूयं गतमि'ति।

कृष्णः- प्रियभ्रातः वयं देवगिरिभूपाला द्वारसमुद्रराजाश्च सर्वे' यदुवंशजा एव। अतोऽन्तः कलहप्रतापेनेदृशीं दुर्दशामापन्ना वयमिति नात्याश्चर्यकरम्। किंच नाहं भवांश्च राज्यद्वयमिदमुदमूलयाव। स्वयैरेव दुराचारैस्ते विनाशमापेदिरे। ते उभयेऽपि भूभृतोऽस्मदुपकारं मनस्यनाकलय्य कृतघ्नतया वैभवमपारमस्मदीयं किं न व्यघ्वंसयन्। यदि समेषां सौहार्दमभविष्यत् तर्हि भवानेवेदानीं द्वारसिंहासनमधिरुढस्सोत्साहमपालयिष्यत्प्रजाः।"

रोषावेशकलुषितचक्षुषा विषादत्त्वेषाकुलचेतसा कृष्णराजेनोदितं वचनमाकर्ण्य यदुराजो न्यगादीन्मृदुतरम्।

'वत्स कृष्ण', भवद्वचनेन स्वार्थमूलकं। तेषां किल्मिषमभिव्यज्यते कृतघ्नानां द्वारसमुद्र-देवगिरिमहीशानां। शासनाधिकारोऽस्मत्पूर्वजानामेव समुचितो न यवनानाम्। यादवास्साधवोऽसाधवो वा स्युः। परं तेषां नीचयवनतः पराभववृत्तान्तमभिश्रुत्य कथं वा समादधीत नः चेतस्समाकुलम्'।

कृष्ण :- 'यदुराज, युज्यते भवदुक्तम्। परं तद्राज्यद्वयमपहृतवतां यवनानां व्यतीतो महीयान्समयः। इदानीं को वा ते प्रतीकारविषयस्स्यात्। येन ते त्वेषश्शाम्येत्। सांप्रतं द्वारसमुद्रराज्यं विजयनगराधीश्वरैराक्रान्तम्'।

यदुः- 'विषयेऽस्मिन्निरुपाया अपि गतवैभव स्मरणजखेदमपसारयितुं नैव शक्नुमो वयम्। परमियदेवात्र समाधानं यत् यवनाधीन्यतोऽपि विजयनगर धरेश्वरायत्ततैव साधीयसीति'। किंच विजयनगराधीशेन हरिहरमहाराजेनोपकृता वयम्'।

कृष्णः- 'आः किमुक्तं भवता। केन को वोपकृतः। भवदावर्जितविजयसंख्यापरिगणने भवतैवोपकृतो विजयनगरक्षोणीधरो हरिहरराय इति साभिमानं ब्रवीमि'।

यदु :- 'कृष्ण, अस्माकं युद्धकलादेशिको हरिहरराय इति किं विस्मृतं भवता'।

एवं भाषमाणौ तौ सोदर्यौ चामुण्डीशैलमुपाजग्मतुः।

कृष्णः- 'यदुराज, पुरःपश्यतु भवान्। अयमेव चामुण्डीशैलः पावनः। यत्र जागर्ति महीशूरमहीपालकुलदेवता भगवती।

यदुः- हा कष्टम्। राज्यक्रान्त्या महीशूरराज्यस्थितिर्विस्खलितेति श्रूयते'।

कृष्ण :- 'कतिपयग्रामाधिकारिणा नरसराजेन राज्यमिदमाक्रान्तमधुना। तत्सहकारी कान्तराजस्तु चामराजदुहितरं हठात्कारेण परिणीय राज्यमेतदाहर्तुमायतते। परं चामराजपक्षपातिनस्सर्वे जना उभयोरनयोरनयोपेतयोः प्रतीकारं कर्तुं प्रतीक्षन्ते इति समाकर्ण्यते'।

यदुः- 'प्रसङ्गोऽयमस्माकमनुकूल एव। चिरादेवोत्कण्ठिता वयं मदोद्धतेन नरसराजेन योद्धुम्'।

इति वदत्येव तस्मिन् सुग्रीवो वाजी भूतलमुल्लिखन् खुरपुटेन हेषारवेणात्मनोऽनुमतिं दर्शयामास।

कृष्ण :- (तदवलोक्य) 'अहो महाराज सुग्रीवोऽयं भवत्संकल्पसिद्धिं सूचयति हेषारवमिषेण जयजयकारं कुर्वन्'। अतस्ते कार्यसिद्धि- र्निश्चितेति मन्ये।

यदु :- 'तथाऽस्तु यदुकुलोत्तंस मुकुन्दप्रसादेन'।

एवमुदीरयन्तौ तौ भ्रातरौ चामुण्डीशैलं पश्चाद्भागेनाधिरुह्य भगवत्याश्चामुण्डीदेव्या आयतनं यावदविशतां तावत् यदुवंशप्रभवो भगवानुडुराजस्सकलकलापूर्णः समुदियाय पूर्वाचले। मनोहरेऽस्मिन्शुभमये समये तेजस्विनौ तौ देवालयं प्रविश्य तत्रत्याधिकारि- जनैः कृतसभाजन- सुखमन्वभूताम्। भक्तिपुरस्सरं भगवतीं देवीं प्रणम्य समीहितकार्यसिद्धये संप्रार्थ्य चावसिते सायं मङ्गलार्तिक्यविधौ अर्चकेभ्यः समादृतहारादिदेवीप्रसादौ कृताहारौ बहुश्रान्ततयाऽचिरादेवालिलिङ्गतुर्निद्राङ्गनां सकलश्रमहारिणीम्।

*(इति पंचमं प्रकरणं)*

## षष्ठं प्रकरणम्
## "रत्नं समागच्छतु काञ्चनेन"

भगवत्या रिपुमण्डलखण्डनोद्दण्डप्रतापाया आखण्डलादिसुरवन्दितायाः खण्डेन्दुचूडामणेः क्रीडासख्याश्चामुण्डीदेव्याः प्रातरार्तिक्य- घंटागभीरनाद-

श्रवणप्रबुद्धो यदुराजस्सह सहोदरेण कृष्णराजेन महत्येव प्रत्यूषे ध्यानपथ-मुपनीतमुरमथनः प्रणतप्रमथनाथो मनोरथगोचरीभूतारातिविशसनो विहित-प्रातर्विधिर्देवालयस्य बहिरङ्गणे समुत्साहवर्धिनीं दिव्यस्फूर्तिदायिनीं चित्रां रमणीयां च सृष्टिशोभां निरीक्षमाणो मुहूर्तमवतस्थे। गहनतर विचारगभीरमुद्रो यदुराजो विक्रमादरं सौहार्दमेदुरं दरकथाविदूरं सोदरं दरविकसदिन्दीवरनयनो धीरमुवाच। 'वैरिवरवर्णिनीमुखकृष्णीकरणपटो कृष्ण! आलोकयतु भवानिमां निसर्गरम्यां सृष्टिसुषमाम्। प्रत्येकं वस्तु, दृश्या च शोभा चारुतरमुपदेशं ग्राहयतीव माम्। परमेश्वर- नियतिरेवेदृशी यत्स्वसृष्टेन सकलेनापि वस्तुजातेन किमप्युपदेशसूचकेन भाव्यम्। न खलु निरर्थकां सृष्टिं विधत्ते सर्वज्ञचूणा-मणिर्भगवान्। वत्स, पुरो निक्षिप्यतां विकसितं चक्षुः। अवकाशो दीयतां मानसाकाशे नवनवानां कुशलभवनानां भावनानां स्फूर्त्यै। चमत्कृतिरिय-मालोकपथमुपनीयतामायुष्मता वधिष्णुना।

भगवति मरीचिमालिनि पूर्वाचल चूडावलम्बिनि वल्लभाभ्युदय- प्रमोदभरेण विकसन्नवदला कमलिनी मधुकरकलमञ्जुगुञ्जारवेण स्वागतं व्याहरतीव। दिगन्तव्यापिनं समाक्रान्तवसुधातलं वैरिणमंधकारं प्रखरतरकरशरविसरैर्नामा-वशिष्टमाकलय्य समासादितविजयश्रीसमाश्लेषसंगताङ्गरागारुणमरुणसारथिं तरणिमालोकशब्दायमानैर्विरावैरात्मनः कृतज्ञतामेदुरमानन्दभरमावेदयन्ति विहङ्गमाः। विरहव्यथामपनुदंश्चक्रवाक-मिथुनस्य लोकबन्धुतामाविश्चि-कीर्षत्यात्मनो दिनकरः। दोषाकरोन्मुखं कैरवकुलं विदलयन् मित्रोदयातुरं सारसचयं विकचयन् आत्मनः कर्मसाक्षितां निदर्शयति जगच्चक्षुः। निन्दन्ति चात्मनोऽन्धीकरणव्रतधारिणं तरणिं त्रयीतनुमपि दिवान्धाः। कासारस्सहस्र-किरणं जगदुपकारिणमवलोकयितुमिव सुरपतिसाम्यसंपिपादिषयेव सरससारस-व्याजेन सहस्राक्षतां धत्ते।

नवस्फुरणमयोऽयं समयः वर्षीयसोऽपि नवचैतन्यमुत्पादयति किमुत प्रतिक्षणमुद्रिच्यमानोरुधिरस्पन्दानां तरुणानाम्। आयुष्मन्नद्य सुप्तोत्थितस्य मे कुतो वा स्फुरति वामेतरन्नयनम्। स्पन्दते दक्षिणो बाहुः। विषयविदूरेऽ-स्मिन्पावने देवालयप्रदेशे शुभशकुनस्यास्य फलाशंसनं चम्पकवने चञ्चरीकर-वाकर्णनाभिलषितमिवोपहासास्पदमेव। तथाऽपि 'अथवा भवितव्यानां द्वाराणि

भवंति सर्वत्र' इति कालिदासोक्तिः पुनराशाङ्कुरं मे पुष्णाति मानसे। प्रसन्ना चोत्साहशालिनी मनोवृत्तिरचिरादेव भाविनीमावेदयति कल्याण परम्पराम्'। इति।

एवं वदत्येवाल्हादमुद्राविराजिवदने राजीवनयने यदुराजेऽकस्मादेव नयनपथमवततार विरागिवेषो जटाधरो नञ्जराजः। दूरादेव सकुतूहल-मालोकयन्तं यदुमहीपतिमभ्येत्य मन्दमवादीदमन्दानन्दतुन्दिलो विरागी 'वयस्य कुतस्तवेदमागमनमाकस्मिकम्। समये दिष्टया दृष्टोऽसि। अपि नाम परिचिनोषि माम्। कच्चित्कुशलं भवतस्सानुजस्य। इति। इत्थमालपन्नेव करमालम्ब्य यदुराजं किञ्चिद्दूरमुपनीयात्मानुगमनाय संकेतमकरोत्। कौतूहलाकृष्टमनाः किञ्चित्परिचितध्वनिरप्यजातविस्रम्भश्शूरोत्तंसो यदुवंशवंशमुक्तामणिः सधैर्यं सानुजस्तमनुससार तूष्णीमेव। अतिक्रान्ते क्रोशमिते पथि नितान्तभयङ्करे विहायसविहारिशिरोभिर्नैकैरनोकहैरदत्तदिवाकर-किरणावकाशे कान्तारे गहनाटवीपिशाचिका वदनायमानायां गुहायां विवेश विरागी। ततो यदुराजस्तदनु कृष्णराजः। शस्त्रैकसहायो यदुराजोऽन्तराविश्य विस्मयस्तिमितलोचनस्सन् समुन्नतासनाधिरुढं प्रभापटले विसारिण्यपि सूक्ष्मदृशा दृश्यमानवैवर्ण्यवदनं प्रशान्तगम्भीराकृतिं दर्शनमात्रेण साध्वससहचरभक्तिं हठादेवोपजनयन्तं महापुरुषमेकं ददर्श। अनिच्छन्नपि तेजोविशेषवशीकृतमानसो देवगुरुजनमन्तराऽन्यत्रानामितं नामयामास निजमस्तकम्। 'कल्याणमस्तु, विजयीभव; वत्सोत्तिष्ठ, अभीष्टमाप्नुहि' इत्याशिषः प्रयुञ्जानस्स महापुरुषोऽनवरतशस्त्रग्रहणकठोरेण करेण शिरस्स्पृशंस्तमुदस्थापयत् यदुभूभुजम्।

ततो विस्मयभराविष्टे 'कोऽयं महापुरुषः, कुत्राहमिदानीमागतोऽस्मि, को वाऽत्रास्मानानीतवान् विरागी, कोवा पुरस्तनः कार्यविशेषः, को वाऽऽसामाशिषामाशयः, बहिः कथं वा गन्तव्यम्, नञ्जुण्डस्वामिदेवालयगामिनो मार्गस्योपदेष्टा च कः इत्यनल्पविचारसमाकुलचेतसि यदुराजे भ्रातुरिङ्गितावग-मैकदत्तनयने कृष्णराजे मृदुस्मितोत्फुल्लनयनो जगाद नञ्जराजो दूरमपसारित विरागिवेषः। "माननीयमूर्धन्यमणे प्रत्यर्थिघनान्धतमसाम्बरमणे प्रपन्नचिन्तामणे

रमणीयलवणिमविमोहितरमणीगण युदुराज! भ्रातृप्रेम्णाऽनुकृतलक्ष्मण वीरवरेण्य क्षोणीतलक्षेमंकरिष्णो कृष्णराज! इदानीं भवन्तौ नूनं परिचिन्वायातामेव मां दूरीकृतकृतकविरागिवेषम्। विजयनगरे महाराजस्य हरिहरस्य शस्त्रविद्याग्रहणे वयं सहाध्यायिनशिष्याः। तदनुज्ञातौ युवां रञ्जितप्रजौ द्वेषिभञ्जनौ पुञ्जीभूतपुण्यौ सुखमधिवसतो निजराजधानीम्। परम् अधीतशस्त्रविद्यो यावत्पुरमुपागतोऽहं महाराजं चामराजमुपसेवितुमना हन्त दुर्विधिवशान्मे अथवा सकलमहीशूरप्रजानां उद्धतो नरसराजो नरापसदः तावत् राज्यमिदमाक्रम्य स्वसहायकेनाऽलप्स्यमाननरकान्तेन कान्तराजेन संगतो न केवलमनाथाः प्रजा एव पीडयति परम् अन्तःपुरवासिनीमपरामिव महीशूरराज्याधिदेवतां मानवतीं मानवतीं नाम चामराजमहिषीं, तत्तनुजां राजकुलविमलगगनतलशशिकलायमानां लावण्यामृतप्रवाहे प्लवमानां यौवनोपवने विहरन्तीं युवजनहृदयपञ्जरे शकुन्तायमानां स्मरवीरकुन्तायमानकुन्तलां भर्तृदारिकां सूच्यग्रे वसन्तीमिव दुस्सहतापम्लानावतंसवासन्तीकुसुमायमानां वासन्तीमपि।

महाराजश्चामराजो हि प्रखरपराक्रमोप्यननुकूलदैवतया सिद्धादेशेन पावनमिममाश्रमं गुप्तद्वारेणोपागतः कथञ्चिदतिवाहयति दुःखमयं समयं। दार-दारिकाविरहविदूनमानसस्तदनुभूयमानदुस्सहदुःखकल्पनादीर्यमाणहृदयोऽपि "अचिरादेव कोऽपि महापुरुषलक्षणोपेतो वीराग्रणीरपनेष्यति ते सकलं दुःखभरम् आहारिष्यति च राज्यम्, संगमयिष्यति प्रियबन्धुजनेन, अधिगमिष्यति जामातृपदम्" इति गुरुवचनसमाहितमना विस्रब्धं यदुमहीपतेः सम्मुखे वरासनमधिरुढो यो रराजते दिव्यतेजसा सोऽयमेव महाभागश्चामराजः। अयमहं तत्पादकमलोपजीवी नञ्जराजः। सिद्धपुरुषोपदिष्टो वीरो महाभाग्यशाली भवानेवेति ज्ञातलक्षणो निश्चित्य महाराजसन्निधिमुपानीतोऽसि त्वं गुहायामत्र सहानुजः। इतःपरं महाराजः तत्कुटुम्बजनः वयमिमे सर्वाःप्रजाः राज्यमिदमित्याद्यखिलं भवदेकायत्तजीवितमिति सर्वविदुषस्ते निवेदनं ज्ञातज्ञापकतादोषमाकलयत्यस्मास्विति तूष्णीम्भाव आलम्ब्यते इदानीम्।" इति।

एवमावेद्य विरतवचसि नञ्जराजे निजदुःखस्मरणेन वामनयनादुष्णाश्रुबिन्दून् भाविसुखप्रत्याशासाफल्यविस्रम्भेण दक्षिणाक्षितश्शिशिरानानन्दबाष्पबिन्दूनुत्सृजन्तं

विपन्नावस्थया तिरश्चामपि करुणामुद्भावयन्तं दृषदोऽपि द्रावयन्तं रोदसी अपि रोदयन्तं चामराजभूभुजं महाभुजं मुहुर्मुहुश्चकितचकितं विलोक्य दयोदयो-द्रिक्त हृदयो यदुराजो भक्तिपुरस्सरं पुनरभिवाद्य न्यगादीत् -'महाराज निर्विशङ्कं भवत्परिवारजनेषु परिगणनीयोऽयं जनः। यदा महीशूर राज्यक्रान्तिवार्तामश्रौषं तदैव प्रत्यज्ञासिषमहं महाराजविद्रोहादभद्रतमं नरसराजं ससुहृदमचिरादेव पितृराजपुरातिथिं विधास्यामीति। पुनरधुना महाराजचरणकमलं संस्पृश्य प्रतिजानामि मासादर्वागेव यदि न करिष्यामि नरसं नरकप्राघुणिकं, यदि महाराजं न विधास्यामि सिंहासनारुढं तर्हि यदुकुलोद्भवो युदुरयमहं प्रज्वलदनल-कवलतामुपनेष्यामि निजकलेवरं प्रतिज्ञाभङ्गकलङ्कितम्" इति।

तदाकर्ण्य कर्णरसायमानं वचनं प्रमोदभरनिर्भरश्चामराजः "साधु शूराग्रेसर, साधु. साधनहीनोऽपि साधयिष्यसि महत्तरं कार्यमिति दृढं प्रत्येति मे चेतः। इति व्याहरन् असंख्यातवैरिरुधिरनदीस्नातं समराहवानलज्वालायमानं कराल-मात्मीयं करवालं सादरं समर्प्य प्रेमपरवशो गाढमुपगूढवान् यदुराजम्।

अवनत शिरसा कलिताञ्जलिना कमलमुकुलानुकारिणा करयुगलेन प्रति जग्राह खड्गं यदुराजः। प्रहृष्टमना नञ्जराजोऽपि गाढमाश्लिष्य "अद्य नरसमीहितमविलम्बसिद्धिमाकलयामि, यत् योगीश्वरनिर्दे-शानुसारं भवत्समागम-स्संजातः। महाराजेनाद्य न केवलमसिलता दत्ता भवते परं विजयश्रीसखी निजतनया वासन्ती देव्यपीत्यवेहि। श्व एव सा मातृसनाथाऽत्रानेतव्येति दृढीयान्मे संकल्पः। सफलीभविष्यत्येव भवत्साहाय्येनेति महीयान्प्रत्ययः। ततो नवमल्लिका-सहकारयोरिव सर्वात्मनाऽनुरुपयोर्युवयोस्समागमो न कस्य तोषावहः। अतोऽहमाशासे -'रत्नं समागच्छतु काञ्चनेन' इति। व्रीडावनतमुखो यदुराजो मन्दस्मित मनोहरेण मौनेनैव शब्दराशेरगोचरामनुमतिमाविश्च-कारात्मनः॥

*॥ समाप्तः ॥*



*श्री लक्ष्मीवेंकटेशः प्रसीदतु*

# ३४. यदुवंश - महाकाव्यम्.

श्रीमद् हनुमद्भीममध्वांतर्गत
श्रीरामकृष्णवेदव्यासात्मक श्रीलक्ष्मीहयग्रीवाय नमः

## प्रथमः सर्गः
*(देवतामंगलस्तवः)*

श्रीराधामाधवौ वंदे विद्युद्धाराधरद्युती।
विद्युन्मेघाविवाश्लिष्टौ विद्यादीप्त्यमृताप्तये ॥१॥

भक्तिज्ञानवदन्योन्यसंसृष्टौ तुष्टिकारिणौ।
लक्ष्मीनारायणौ वंदे भक्तिज्ञानसमृद्धये ॥२॥

वैकुंठसदृशं शैलं यश्चक्रे स्वनिवासतः।
स वेंकटेशो मां कुर्याज्जडं प्राज्ञं कृपाबलात् ॥३॥

भार्गवीमेतिभार्याया नामाद्याक्षरमोहवान्।
भैष्मीभामादृढप्रेमा भीमातटनिवासभूः ॥४॥

भीमानुजन्मसूतो यो भूमिदेवावनादरः।
व्रजभामारतोऽपारभूमा भीमस्सुरद्रुहाम् ॥५॥

एवं भ-माक्षर द्वंद्व लोभवानेष विट्ठलः।
भां मां दिशतु मे दिव्यां भगवान् करुणाकरः ॥६॥

प्राकृतौ पितरौ सेवातुष्टौ कुर्वन्यमैक्षत।
पुंडरीकस्तमासेवेऽप्राकृतं पितृविठ्ठलम् ॥७॥

मधुवन्मधुरं शास्त्रं मोक्षदं माधवप्रियम्।
श्रुतिसंस्तुत सार्थाख्यं भजे मध्वगुरुं विदे ॥८॥

ज्ञानभासा भासते या रतिं धत्ते हरौ तथा।
पवने पावने पत्यौ भारती भातु मे हृदि ॥९॥

जयतीर्थो यतीशानो जयताज्जगतीतले।
वसुधायां प्राशयद्यो सुधा-सुमधुरां सुधां ॥१०॥

भावबोधकरान् विष्णुभावबोधप्रदायिकान्।
महानुभावमहितान् रघूत्तमगुरून् भजे ॥११॥

न्यायांभोधौ च वेदांताकाशे तर्कमहाचले।
विबुधान् पाययामास धन्वंतरिरिवामृतम् ॥१२॥

तृप्तांश्चंद्रिकया विद्वच्चकोरान्विधुवद् व्यधात्।
सानंदं तांडवं नृत्यं साटोपं धूर्जटिर्यथा ॥१३॥

विद्वल्ललामसंश्लाघ्यस्सादरांजलिबंधनम्।
प्रत्यक्षदर्शनोद्भूतहर्षोन्मादवशांतरः ॥१४॥

शालग्रामशिलातालजातध्वन्यनुसारतः।
स नृत्यद्वेणुगोपालस्मितोल्लासनिरीक्षितः ॥१५॥

कुहूयोगविपन्मोक्षतुष्टराजेश्वरार्थितः।
रत्नसिंहासनारूढोऽभिषिक्तो मणिमौक्तिकैः ॥१६॥

विद्वद्भ्यो दत्तभूयोभूर्वृष्टवित्तसुवर्णकः।
महामहिम्ना महितो मोहहारी महीसुरैः ॥१७॥

संप्रार्थितोऽभीष्टदाता सुरलोकतरुर्यथा।
श्रीव्यासराजयोगीशो व्यासदासः प्रसीदतु ॥१८॥

श्रीवायुशास्त्रव्याख्याता वाजिवक्त्रापरोक्षदृक्।
वादे विजयशाली तं वादिराजगुरुं भजे ॥१९॥

स्वनामांत्याक्षरद्वंद्वयुक्तं भक्तं करोति यः।
विदुषां श्रीमतां संघे वादिराजगुरुं श्रये ॥२०॥

यस्यांसयोः पुरःपादौ विन्यस्यन्पृष्ठभारतः।
शीर्षस्थं भक्ष्यमाश्नाच्छ्रीहयास्यस्तं गुरुं नुमः ॥ २१ ॥

प्रल्हादयति यो भक्तान् सर्वेष्टपरिपूरणात्।
अघौघं द्रावयंतं तं राघवेंद्रगुरुं भजे ॥ २२ ॥

सुधां सुधाधिकस्वादां चक्रे परिमळान्विताम्।
यस्तं भक्तामरतरुं राघवेंद्रगुरुं श्रये ॥ २३ ॥

विद्वन्मंडलसम्राजं वदान्यकुलशेखरम्।
सत्यध्यानमुनीशानं वंदे विद्यागुरुं मम ॥ २४ ॥

(श्रीगलगली वंशप्रसक्तिः)

राघवे भक्तिमान्रामेऽद्वैते भार्गवरामवत्।
कुठारधारी शांतात्मा पातु मां गुरुमुद्गलः ॥ २५ ॥

भैष्मीभामासमेतश्रीकृष्णप्रत्यक्षदर्शनः।
स्मयद्विठ्ठलसंन्द्रष्टा मुद्गलार्यो मुदे मम ॥ २६ ॥

श्रीमदानंदतीर्थार्यव्याख्यानं प्राग्वृषोऽश्रृणोत्।
यत्पाठं शुश्रुवे वाजी तं भजे गुरुमुद्गलम् ॥ २७ ॥

अबालधिषणान्वंदे बालकृष्णकृपाबलात्।
बालार्यान् बालसूर्याभान्शतविद्यार्थि देशिकान् ॥ २८ ॥

नैकपद्यावलीकर्त्री कृष्णदर्शनसंभ्रमा।
बालार्यपत्नी विदुषी सती पायाद् रमाभिधा ॥ २९ ॥

स्वप्ने श्रीवेंकटेशस्य प्रेरणाद्दीनभूसुरः।
लक्षद्विजाशनश्रेयो भोजयित्वा बभाज यं ॥ ३० ॥

अपरोक्षदृशं विष्णोः परोक्षप्रियताश्रुतम्।
श्रीबाबार्यगुरुं वंदे भक्ताव्हानकराभिधम् ॥ ३१ ॥

लक्ष्मीपतिकृपापात्रं लक्ष्मीप्रत्यक्षदर्शनम्।
ऋषिसल्लक्ष्मसंपन्नं नृसिंहार्यगुरुं भजे ॥ ३२ ॥

शतकुम्भजलस्नानं शातकुम्भसमप्रभम् ।
कुम्भसंभवतेजस्कं श्रीनृसिंहगुरुं श्रये ॥ ३३ ॥

जटापतिततोयेन पावनीकृतभूतलम्
नृसिंहार्यगुरुं सेवे शिवतुल्यं शिवप्रदं ॥ ३४ ॥

यत्स्नानपूतसलिलं लयमाकलयद्रुजाम् ।
तपोज्ञान-प्रभाभातं तं श्रये पितरं विदे ॥ ३५ ॥

विद्वन्मानितवैदुष्यतोषितर्षिसदृक्पितॄन् ।
अगाधधिषणान्वंदे तानहं धिषणोपमान् ॥ ३६ ॥

सुरुपगुणसंपन्नं यौवनोद्भासुरत्विषम् ।
सुरांगनासमाश्लिष्टं तमण्णार्यगुरुं भजे ॥ ३७ ॥

अग्रगण्यं प्रशान्तेषु गुण्यग्रं प्रणमाम्यहम् ।
ब्रह्मण्यदेवसद्भक्तं सुब्रह्मण्यार्यमग्रजम् ॥ ३८ ॥

श्रीमाध्वभाष्यपठनश्रेयोदं निरमापयत् ।
कृष्णातटे हरेर्वेश्म यस्तं वंदेऽहमग्रजम् ॥ ३९ ॥

श्रीसुधांते च वेदांते भाष्यांतव्याकृतौ कृती ।
ब्रह्मण्येव व्रतस्वांतः सुब्रह्मण्योऽग्रजो मुदे ॥ ४० ॥

तर्कवेदांतवाराशिपारीणस्तपसोज्वलः ।
षट्कूर्मिलेशरहितः कूर्मार्यश्शर्मदो मम ॥ ४१ ॥

मुक्तिं प्राप्नोति सद्भक्तो यद्गतं वीक्ष्य माधवं ।
निर्मापकस्तद्ग्रथस्य कूर्मार्यःश्रेयसे मम ॥ ४२ ॥

धर्मानुस्यूत-कृष्णेष्ट सत्कर्माचरणे रतः ।
कूर्मार्यश्शर्मणे मेऽस्तु भव्यभर्मार्भविग्रहः ॥ ४३ ॥

शोचिष्मान्शुचिरत्यंतं गंगासत्यासमन्वितः ।
शंतनोस्सदृशः कूर्मनृसिंहः शं तनोतु नः ॥ ४४ ॥

बंधमोक्षप्रदे श्रीशे सदाचित्तानुबंधनम्।
श्रीमुद्दुविट्ठलाचार्यं वंदे सद्गुणबंधुरं ॥४५॥

न्यायवेदांतनिष्णातं न्यायमार्गैकगामिनम्।
न्यायामृतप्रवक्तारं भजे ऽहं भ्रातरं च तम् ॥४६॥

श्रीविट्ठलपदांभोजचुंबिबंभरमानसः।
मुद्दुविट्ठलसार्थाख्यस्सूर्यग्रश्श्रेयसेऽग्रतः ॥४७॥

श्रीगोविंदमनोज्ञ पावनकथापीयूषधारास्रवेऽ।
नूचानामलगालवान्वयजनुश्रीरामनाम्ना कृते ॥४८॥

नव्येऽस्मिन् यदुवंशभव्यदमहाकाव्ये कृपातो हरेः।
आद्यो दैवतमंगलस्तवपरः सर्गस्समाप्तिं गतः ॥४९॥

*(इतिप्रथमःसर्गः)*

**द्वितीयः सर्गः**

रमाभिमन्यमानोरुवेदोद्धारी सतीप्रियः।
तन्नेत्रतुल्यमीनात्मा पुनातु भगवान्हरिः ॥१॥

यदोर्वंशकथां वक्ष्ये पावनां परमाद्भुतां।
यद्यौवनं पितृद्वारा मातृभागान्न लांछितम् ॥२॥

निजचारित्र्यरक्षायै पितुराज्ञां विलंघयन्।
समृद्धमपि साम्राज्यं तृणायामन्यत प्रभुः ॥३॥

अत एव हि तद्वंशे पवित्रे धर्मवत्सलः।
सीमातीतकृपासिंधुरवातीतरदच्युतः ॥४॥

न रंकस्येव मे संति महोच्चपदसंपदः।
न शब्दागमविज्ञानं जलमग्ननृणामिव ॥५॥

नालंकारपरिज्ञानं मासत्रयशिशोरिव।
गुणदोषविचारो मे मदान्धस्येव भूपतेः ॥६॥

वनितादीनामिवास्त्येव न च्छंदोऽवगतिर्मम।
न रीतिप्रतिपत्तिर्मे मुग्धस्येव मनागपि ॥७॥

जन्मतो बधिरस्येव ध्वनेरध्वनि नो गतिः।
पित्ततिक्तरसज्ञस्य यथा मे न रसज्ञता ॥८॥

नैकादशीजागरायामिव शय्यावचःक्रमः।
सदा शय्याश्रितस्याऽपि वार्धक्यात् क्लिन्न चेतसः ॥९॥

एवं संभारहीनोऽहं न शक्तः काव्यनिर्मितौ।
तुरीवेमविहीनस्य कुविंदस्येव मे स्थितिः ॥१०॥

तथापि प्रेरयन्त्यन्तः श्रीकृष्णे भक्तिरुत्कटा।
प्रवर्त यति कार्ये मामलसप्रकृतिं बलात् ॥११॥

पदसंपदभावेऽपि सर्वसंपत्प्रदं सताम्।
पद्माप्रणयिपद्माभपदं जागर्ति मे हृदि ॥१२॥

शब्दशासनहीनस्य वत्स भद्रं तवास्त्विवति।
हरिभक्तगुरुप्रोक्तशब्दस्संस्फूर्तिशक्तिदः ॥१३॥

विषयालंबुद्धिवशतो मुखेऽलंकार ऊर्जितः।
साधुलोकगुणप्रीतिस्तद्भिन्ने दोषवेतृता ॥१४॥

अस्ति च्छंदोनुवर्तित्वं छंदोज्ञानां सदा मयि।
नीतिरीतिमहं वेद्मि श्रीपति प्रीतिकामनः ॥१५॥

इंदिरेशस्फुरद्बीजं तन्नाभिजसुतांकुरम्।
मुनीशपल्लवोपेतं नृपशाखाशतोज्ज्वलम् ॥१५॥

यदुराजसुमोल्लासं श्रीमुकुंदलसत्फलम्।
यदुवंशाख्यकल्पद्रुं सर्वाभीष्टफलप्रदं ॥१६॥

विना व्यासमुनीशानं सर्वज्ञहरिरुपिणम्।
तस्यांतेवासिनं सूनुं प्रियं श्रीशुकमंतरा ॥१७॥

पवमानावतार श्रीपूर्णप्रज्ञमुने ऋते।
संवर्णयितुमुत्साहात् क्षमायां क्षमते नु कः ॥१८॥

तद्विवर्णयिषाथापि न मे चित्तान्निवर्तते।
निराहारस्य चादृष्टहरेः रस इवांतरः ॥१९॥

अतश्श्रीकृष्णलीलाभि र्वशीकृतमना अहम्।
प्रारभे योग्यतातीतं पावनं कर्म शर्मदम् ॥२०॥

सूरिवर्योपहासस्य भाजने मम साहसे।
प्रवृत्तिरनिवार्यैव कृष्णभक्तिप्रभावतः ॥२१॥

संतस्तत्क्षंतुमर्हंति शांतस्वांता निरंतरम्।
उद्देशे शोभने विज्ञैः प्रमादस्समुपेक्ष्यते ॥२२॥

दोषास्संत्यत्र भूयांसः कविधीजाड्यसाक्षिणः।
क्वचिच्चेच्चारुता स्यात्सा श्रीकृष्णस्य प्रसादजा ॥२३॥

अपारो यदुवंशाब्धिर्मतिः परिमिता मम।
लिलंघयिषुरम्भोधिमस्मि श्रीरामसैनिकः ॥२४॥

हरिप्रसादोबलवान् हेतुस्सर्वेष्टसाधने।
शुष्ककासारसंपूरे संभृतोऽम्भोधरो यथा ॥२५॥

रसिका यदि तुष्येयुस्सफलेयं कृतिर्मम।
संपादितपतिप्रीतिस्सती सार्थकजीवना ॥२६॥

पद्मापतिकृपापेक्षी कविकीर्तिं न कामये।
शुकश्चूतरसाकांक्षी नवपल्लवनिस्पृहः ॥२७॥

यदुवंशकथा श्लाघ्या पावना परमाद्भुता।
गंगाप्रसवसौभाग्य हिमाद्रिसुषमोपमा॥ ॥२८॥

हंसीभवन्तु दयया विबुधावतंसाः।
वार्यैक्यभाजनपयस्सुहृदीह काव्ये॥
इत्यर्थये सविनयं न तु तत्प्रशंसां।
कांक्षे हसंत्वरसिका न ततो विषादः ॥२९॥

श्रीगोविंदमनोज्ञपावनकथापीयूषधारास्रवेऽ।
नूचानामलगालवान्वयजनुश्श्रीरामनाम्ना कृते।
नव्येऽस्मिन् यदुवंशभव्यदमहाकाव्ये कृपातो हरेः।
प्रस्तारप्रसरो द्वितीय उदितः सर्गो निसर्गोज्ज्वलः ॥ ३० ॥

*(इति द्वितीयः सर्गः)*

## *तृतीयः सर्गः*

मुहुर्मुहुश्चुंबनजातगाढप्रेमाकुलात्मा कमलाकपोले।
उत्कंठया तादृशकूर्मरुपी पायान्मुकुन्दोऽगणिताद्रिभारः ॥ १ ॥

राजर्षिरासीन्नहुषो महौजा महेशचूडामणिवंशभूषः।
पौरंदरे दिव्यपदेऽभिषिक्तो महर्षिभिर्हर्षकृते त्रिलोक्याः ॥ ॥ २ ॥

तस्याभवन्शास्त्रमहास्त्रशूराः संख्याद्वयं शास्त्रगतं दधानाः।
कुमारकल्पास्सुकुमाररूपास्तदाननाब्जा इव षट्कुमाराः ॥ ३ ॥

ज्येष्ठो यतिर्नाम सुतो यतात्मा पित्रा प्रदत्तं शुभनामधेयम्।
सार्थं विधातुं यतिवद्विरक्तस्तपोवनं पावनमाप धीरः ॥ ४ ॥

त्यागाद्विकासं भजते च शांतिं शांतस्ततो ज्ञानहरिप्रसादौ।
ततो विमुक्तौ महदेव सौख्यं निर्धूतबंधस्य भवेज्जनस्य ॥ ५ ॥

त्यागी यतिर्योगपथं श्रितोऽभूत् तस्यानुजो भोगपरो ययातिः।
बभूव नो चित्रमिदं नराणां प्राग्जन्मसंस्कारनिबंधना धीः ॥ ६ ॥

यतौ प्रयाते तपसे वनाय धराधिपत्ये नियतो ययातिः।
त्रयीतनावस्तमिते च ताराप्रेयानिवाभात्सकलप्रजानाम् ॥ ७ ॥

स एकदा दिव्यहयाधिरुढो निदाघकाले मृगयाविहारी।
तृषाकुलश्चातपतापितोऽलमुपैन्मनोज्ञोपवनस्थवापीम् ॥ ८ ॥

तस्यामपश्यत्कमनीयकन्यामाकंठमग्नां सलिले विविग्नाम्।
भग्नाभिमानां च कृशावलग्नां विचारलग्नां मनसा नरेशः ॥ ९ ॥

तां तप्तचामीकरचारुकांतिं निरीक्षमाणो युवतिं च कन्याम्।
अनेकधाऽतर्कयदर्करश्मितप्तोऽप्यसौ विस्मयमानचित्तः ॥१०॥

विस्मारयत्याशु तृषां हि यूनां दूरीकरोति श्रममप्यनल्पम्।
अपूर्वचेतोहरवस्तु दृष्टं चित्रीयमाणातुरमानसानाम् ॥११॥

सुरांगना किं पतिता विमानात् तलोत्थिता किं वरुणस्य कन्या।
जले विहर्तुं वनदेवता किमेषाऽगता स्याद्रमणीयरूपा ॥१२॥

नैवामरीयं सनिमेषनेत्रा न वारुणी शीतभवोष्ठकम्पा।
नारण्यदेवी सुमहारहीना कैषेति निश्चेतुमहं न हीशे ॥१३॥

प्रायो भवेद्भूसुरसंभवेति तेजोविशेषोऽन्यकुलेष्वदृष्टः।
ममानुमानं सुदृढीकरोति विरागितेवाच्युतपादभक्तिम् ॥१४॥

अधीरवृत्या श्रितदीनभावा नक्षत्रनाथोपमिताननेयं।
न क्षत्रकन्येति मम प्रतीतिर्लोहक्षितौ पुष्पलता न भूयात् ॥१५॥

न जन्मभूस्स्यादितरावराणां कुलं किलास्याः कमलायताक्ष्याः।
न पल्वले जन्म लसन्मणेस्स्यादुत्पद्यते भूमितले न विद्युत् ॥१६॥

अलं विचारेण निरर्थकेन किं शुष्कतर्केण मतिव्ययेन।
प्रत्यक्षगे वस्तुनि नोचितौ तौ न दर्पणं पाणिमणेरपेक्ष्यम् ॥१७॥

अतस्सुमांगीसविधं समेत्य सर्वं विजानाम्युचितानुयोगैः।
अपेक्षते चेद्विपदं हरामि क्षत्रः क्षतात् त्राणकरो हि भूपः ॥१८॥

एवं विचार्यावनिपःकृपालुस्सोपानमार्गादवतीर्य वाप्याः।
जलांतिकं प्राप्त उवाच वाचं तां चारुरूपां मधुरां च मृद्वीम् ॥१९॥

का त्वं शुभे ते जननोत्सवेन किं वा कुलं मंगलमादधाति।
कौ पावनौ ते पितृताप्तिधन्यौ नाम्ना कृतार्थास्तव के तु वर्णाः ॥२०॥

एकांतदेशे युवतीजनेन संभाषणं नोचितमेव यूनाम्।
तथापि ते दीनदशासहोऽस्मि समागतोऽहं सहसा क्षमस्व ॥२१॥

निसर्गतो रम्यतमं सुमांगि दैन्यास्पदं ते वदनारविंदम्।
अकालमेघावृतचंद्रकल्पं विलोक्य दूयेत न कः कृपालुः ॥ २२ ॥

विलोचने तामरसोपमे ते कोपोऽरुणिमानं द्विगुणं व्यधात्ते।
अकथ्यमानोऽप्यहमेवमूहे परेंगितज्ञाश्चतुरा नरेशाः ॥ २३ ॥

विवेकहीनस्तरुणो द्विजस्त्वां प्रसूनमालामिव शीर्षधार्याम्।
किं वासु तुच्छीकृतवानभाग्यः शाखामृगो दिव्यमणिस्रजं वा ॥ २४ ॥

व्याघ्रायमाणा हृदयेन धेनुमुखी सखीवत्प्रतिभासमाना।
किं त्वाऽवमानेन विदूयमानामैश्वर्यमत्ता व्यतनोन्नितांतम् ॥ २५ ॥

सर्वं समाचक्ष्व मृगायताक्षि संकोचतस्संवृणु मा रहस्यम्।
विपत्प्रसंगेष्वसहायकेषु विश्रम्भणं स्यान्महते हिताय ॥ २६ ॥

एवं समाश्वासपरं परास्तव्यथं नृनाथस्य वचो निशम्य।
कृतज्ञताभारनताननेन्दुर्मंदाक्षमंदाक्षरमाचचक्षे ॥ २७ ॥

शीतेन कंपे मयि सानुकंप न निस्सरंत्याननतोऽक्षराणि।
दिशोत्तरीयं त्रिदशोत्तमाभ तदोत्तरं दातुमहं क्षमो स्याम् ॥ २८ ।

निजामिदानीं कुदशां तवाग्रे वक्तुं त्रपा मां निरुणद्ध्यथाऽपि।
ब्रुवाणि क्वाचित् कुटिला क्रुधा मां प्रसूतिकालीनदशामनैषीत् ॥ २९ ॥

इत्यालपत्याकुलचेतसाऽसाविलाधिपालो ललनाललामे।
दोलायमानां स्थितिमाललंबे बृहद्घटीयंत्रगलंबकेव ॥ ३० ॥

निशामयानीह निशाकरास्यां वासोविहीनां युवतीं कथं वा।
गृण्हानि वा पल्लवपाणिमस्याः कथं परावृत्तमना विकारात् ॥ ३१ ॥

दत्ताभयोऽस्या भयविव्हलाया विपद्गतायाश्शरणं गतायाः।
विश्वासमुत्पाद्य सुधाक्तवाचा कथं तिरस्कृत्यघवान्भवानि ॥ ३२ ॥

एवं विमृश्यावनिपः क्षणं स निमीलिताक्षः कमलेक्षणायाः।
प्रगृह्य पाणिं सुदृढं शनैस्तां पानीयमध्यात्तटमानिनाय ॥ ३३ ॥

तटस्थितायास्त्रपया नताक्ष्यास्सकंपरोमांचितचारुगात्र्याः।
प्रसारिते पाणिपुटे न्यधात्स स्वीयोत्तरीयं सुनिवर्तितास्यः ॥ ३४ ॥

परीदधाना धवलोत्तरीयं क्लिन्नं जलार्द्रावयवानुषक्तम्।
सुव्यज्यमानोरुपयोधरा सा तुषारसंछन्नगिरिक्षितिश्रीः ॥ ३५ ॥

सोपानमालामधिरुह्य मंदं भूपाल उद्यान-भुवं-प्रयातः।
प्रेमोदयोद्यत्सहकारमूले तया न्यषीदत्सहकारमूले ॥ ३६ ॥

तदाऽवदत्तां निगृहीतचित्तः साद्यंतवृत्तांतमिहाभिधेहि।
राज्ञैवमुक्ता मनसानुरक्ता प्रास्त्रावयत्सा मधुरोक्तिमुक्ताः ॥ ३७ ॥

वर्णेषु विप्रास्सकलाग्रगण्यास्तत्रापि वर्या भृगवो महात्मा।
तत्रापि तातो मम शुक्रनामा शक्रद्विषां स्वीयदशां दधानः ॥ ३८ ॥

संजीवनीमंत्रबलाद् गतासोस्संजीवनाद् दैत्यबलस्य युद्धे।
तुष्टाऽसुरेशेन पुरोहितार्थे पुरोहितत्वेन वृतः पिता मे ॥ ३९ ॥

तस्यात्मजाऽहं नृप देवयानी शर्मिष्ठया चात्र समागताऽस्मि।
सुपर्वविद्विड्वृषपर्वपुत्र्या सहात्र पर्वण्यवगाहनार्थे ॥ ४० ॥

क्रीडारता अंभसि सर्वसख्यो वृषाधिरुढं गिरिशं प्रयांतम्।
विलोक्य लज्जाभरतो वयं द्राक् क्षौमे परीधातुमयाम तीरम् ॥ ४१ ॥

सा राजपुत्री मम वाससी द्वे दधार मत्ता सरमेव वेगात्।
भूदेवतावस्तु न धार्यमन्यैरितीह मान्यामतिलंघ्य नीतिम् ॥ ४२ ॥

क्रुधा परीता विपरीतरीतिं व्यभर्त्सयं तां कटुभिर्वचोभिः।
तदा तु सा कापुरुषोचितानि रुषा बभाषे परुषाक्षराणि ॥ ४३ ॥

विकत्थसे भिक्षुकपुत्रि किं, ते श्वेवाऽस्मदन्नेन पिता स्वदेहम्।
पुष्णाति नित्यं स्मर तत्कृतघ्ने मा जल्प भूयस्त्वमिहाल्पबुद्धे ॥ ४४ ॥

इत्याद्यसह्यं निगदंत्यवाच्यं प्रक्षिप्य कूपांबुनि मे पटौ सा।
जगाम वेगांचितमत्तगत्याऽगारं स्वकीयं सहिता सखीभिः ॥ ४५ ॥

तस्यां गतायां व्यसनावमानक्षुब्धांतरा निश्वसती मुहुश्च।
वासोविहीनाऽहमनन्यगत्या वापीपयोऽदश्शरणं प्रपन्ना ॥ ४६ ॥

अत्रांतरे दैववशाद्भवान्मां समागतः पाणिनिपीडनेन।
विपद्विमुक्तामकरोर्निसर्गात्परोपकारिन्करुणाकरोऽद्य ॥ ४७ ॥

पाणिग्रहीता पतिरेव भूयादिति प्रशास्ति प्रभुवर्य शास्त्रं।
अतो भवानद्य पतित्वबुद्ध्या वृतो मया व्यक्तकृतज्ञभावं ॥ ४८ ॥

कथं नु राजन्यकुलोद्भवेन ग्राह्या सतीत्वेन हि विप्रकन्या।
न शंकनीयं कचशापतो नो शक्ष्ये वरीतुं द्विजनुर्युवानं ॥ ४९ ॥

आश्रुत्य तस्या वचनं स राजा चिरं विचिंत्याह विचारमग्नां।
कोन्वीशसंकल्पमवैति को वा तल्लंघने याति न पंगुभावम् ॥ ५० ॥

पित्रा प्रदत्ता गृहिणीपदं मे प्राप्ता च शुद्धांतमनुप्रविष्टा।
शुद्धांतरंगा भवती सपत्नीमात्सर्यमुत्सार्य सुखानि भुंक्ताम् ॥ ५१ ॥

अनिच्छुको दैवनियोगतंत्र आश्वास्य तामेवमवन्यधीशः।
आमंत्र्य च प्रेमकटाक्षवीक्षामंदस्मितास्यस्स्वपुरीमयासीत् ॥ ५२ ॥

ततोऽविरामं नयनाश्रुधारासंस्नापितोरोजपटी शुचा सा।
पितुः पदोपांतधरोपविष्टा व्याचष्ट शार्मिष्ठकुचेष्टिताति ॥ ५३ ॥

आकर्ण्य तत्सर्वमनिष्टवृत्तं शुक्रस्सुरारातिगुरुस्तदैव।
प्रतप्तचित्तो नृपनीतिवित्तस्स मानवित्तो निरयान्नगर्याः ॥ ५४ ॥

आलंब्यमानामुपजीविकार्थं तत्रापि मत्तक्षितिपालकानां।
स्वमानरक्षाक्षमताविहीनां निनिंद पौरोहितदैन्यवृत्तिम् ॥ ५५ ॥

पुरः प्रसर्पत्पददेवयान्या व्याकृष्यमाणो रयतः करेण।
संभ्रांतया शैशवभाक्करेण्वा करी करेणेव पुरश्चचाल ॥ ५६ ॥

गुरोः प्रयाणं पुरतः प्रकोपान्मत्वा निजासूत्क्रमणार्तिदायि।
निर्याणहेतुं स्थिरराज्यलक्ष्म्या वृषादिपर्वा तमुपैन्द्रयार्तः ॥ ५७ ॥

पदाब्जपन्नो नितरां विषण्णो भूयोऽवसन्नाननपंकजश्रीः।
गुरुं ययाचे सदनुग्रहार्थं न कोपनीयां गुरवस्सुखेच्छैः ॥ ५८ ॥

तत्त्वोपदेष्टा परमोपकर्ता निरस्वार्थधीशिश्यहितैकदृष्टिः।
अलोलुपोऽकोपनहृत्तपस्वी सोदारभावो गुरुरर्हणीयः ॥ ५९ ॥

ब्रह्मन्क्षमस्वाऽल्पधिया दुहित्रा मदीयया हंत कृतापराधम्।
मुहुर्मुहुश्च प्रणिपातपूर्वं संप्रार्थितः प्राह गुरुः प्रसन्नः ॥ ६० ॥

सुतां प्रसन्नां कुरु मे त्वमादौ तस्याः प्रसादे हि मम प्रसादः।
तदीयवांछा परिपूरिता चेत्सर्वं तवेष्टं परिपूरितं स्यात् ॥ ६१ ॥

यस्मै प्रदास्यामि मदीयकन्यां तस्मै प्रदत्ता तव भूपपुत्री।
दासीव सेवां वितनोतु नित्यं कदापि नारोहतु कांततल्पम् ॥ ६२ ॥

स्ववंशकल्याणकृते स्वसौख्यं समाहुतीकर्तुमना नृपस्य।
सुताऽह चंडां द्विजराट्तनूजां भूत्वा सपत्नी सततं सिषेवे ॥ ६३ ॥

यस्यान्ववायेऽजनि पार्थसूतस्सुतं यदुं नाम सती ययातेः।
असूत पूर्वं प्रथमा ततस्सा पितुर्वशं तुर्वसुनामधेयम् ॥ ६४ ॥

संतानसौभाग्यवतीं सपत्नीं श्रुत्वा द्वितीया नृपतेर्द्वितीया।
पतिप्रसादात्सुषुवे कुमारान्धन्यानुसूयासुततुल्य संख्यान् ॥ ६५ ॥

अद्रोहिणं द्रुह्युरिति प्रतीतं धर्मानुगं भानुरुचिं तथाऽनुम्।
पितुर्मनोवांछितपूरकं तं पूरुं प्रसूयाऽऽमुमुदेऽनसूया ॥ ६६ ॥

अपत्यवत्यां दितिजेशपुत्र्यां पत्युः प्रसत्त्या हृदि देवयान्याः।
जज्वाल नारीसहजस्सपत्नीमात्सर्यवन्हिः प्रतिघेन्धनेद्धः ॥ ६७ ॥

सर्वान्सहंते प्रमदा हि लोके धवापराधान् बहुधा प्रसन्नाः।
परं सपत्नीप्रणयोपभोगं कदापि सोढुं न तु शक्नुवंति ॥ ६८ ॥

अमर्षणा सा कटु भाषमाणा कलिप्रवीणा त्वरितप्रयाणा।
बभाण पित्रे रमणस्य सर्वं समं सपत्न्या रमणापचारम् ॥ ६९ ॥

भ्रष्टप्रतिज्ञं पतिमात्मजायाश्शशाप शुक्रः कुपितो नितांतम्।
कामांधताकारणयौवनध्ना जरा तवाद्याक्रमतां शरीरम् ॥ ७० ॥

संप्रार्थितो भूपतिना दयार्द्रचित्तोऽसुराचार्य उवाच वाचम्।
जराप्रदानेन परस्य पुंसस्तारुण्यमासाद्य सुखी भवेति ॥ ७१ ॥

निराकृतः पुत्रचतुष्टयेन कामांधचेता नृपतिर्ययातिः।
कारुण्यहीनो जरसः प्रदानात्तारुण्यमापान्यसुतस्य पूरोः ॥ ७२ ॥

भोगेन कामं परिवर्धमानं चित्ते घृतेनेव कृपीटयोनिम्।
दृष्ट्वा त्रपाक्रांतमना विरक्तो समं रमण्या नृपतिर्बभूव ॥ ७३ ॥

तस्यान्वये गुणसमन्वयभाग्यभाजः सूरीडितस्सुरसमश्रुतशूरभावः।
शूरो रणे शरविशीर्णशिरोधरारिः सार्थाभिधश्शरणमार्तजनस्य जातः
॥ ७४ ॥

तस्यात्मजो वसुमतीविशदोरुकीर्तिः।
श्रेयोनिवासभवनं वसुदेवकल्पः॥
श्रीशप्रसादवशतो वशिनां वरेण्यो।
मान्यस्सतां समभवद्वसुदेवनामा ॥ ७५ ॥

यस्मादस्य गृहे हरिस्सुकृतिनः प्रादुर्भविष्यन्प्रभुः।
दुष्टान्नष्टतमान्विधास्यति मुदा शिष्टान्विशिष्टानिति॥
स्वौकस्यानकदुंदुभीन्सुरगणा आनंदतोऽवादयन्।
तस्मादानकदुंदुभिं जगदिरे लोका इमं शूरजम् ॥ ७६ ॥

श्रीगोविंदमनोज्ञपावनकथापीयूषधारास्रवेऽ।
नूचानामलगालवान्वयजनुश्श्रीरामनाम्ना कृते॥
नव्येऽस्मिन् यदुवंशभव्यदमहाकाव्ये कृपातो हरेः।
प्रस्तावप्रसरस्तृतीय उदितः सर्गो निसर्गोज्वलः ॥ ७७ ॥

*॥ इति तृतीयःसर्गः ॥*

## चतुर्थः सर्गः
## (वसुदेवपरिणयः)

अंके वहन्नपि रमामवितृप्तचेता लक्ष्मीं दधच्च निजवक्षसि पुष्कराक्षः।
भूदारमूर्तिरनलंधिषणः पुनातु भूदारधारिसितदंष्ट्रमुखो हरिर्माम् ॥१॥

रमणीं परिणीतवान्मुदा प्रथमं काशिनरेशनन्दिनीम्।
वसुदेव उदार विक्रमस्सुतनुं सार्थशुभाभिधां सतीम् ॥२॥

पुमपत्यविहीनताशुचं श्वशुरेणापनिनीषुणाऽऽदृतः।
वसुदेव उवास वासवावसथाभे रुचिरे तदालये ॥३॥

नवयौवनसौख्यसंभ्रमो वसुसंपन्नमहार्हवेश्मनि।
नवनीतमृदुप्रतीकया व्यहरत्स्वैरमसौ नवोढया ॥४॥

समपास्तकुटुम्बपोषणश्रमचिन्तालवतुष्टमानसः।
सततं विषयोपभोगतः समयं चापयति स्म कान्तया ॥५॥

हरिपादसरोजनिर्गलन्मधुधारासुषमां बिभर्ति या।
हरशीर्षजटासु मल्लिकासुममालेव विराजति स्फुटम् ॥६॥

तदनेन निजेन कर्मणा सरिदेषा सुरलोकमानिता।
हरतोऽपि हरेर्महोच्चतां प्रथयंती पृथिवीतले स्फुटम् ॥७॥

नृपतोचितशौर्यधीरताप्रमुखौजस्विगुणेषु सत्स्वपि।
यदवो न ययातिशापतो धरणीपालकतामवाप्नुवन् ॥८॥

दुहितुर्वरशोधने रतो बहुलान्राजसुतान्विचारयन्।
असमाहितिमावहन्हृदा वसुदेवस्य गुणान्नृपोऽश्रुणोत् ॥९॥

वसुधानधिपोऽपि तेजसा वसुदेवो भुवि वासवोपमः।
अनुरूपवरस्वकन्यकासुतनोरेवममंस्त काशिराट् ॥१०॥

वसुसंपदनादरास्पदं गुणिनां बालिशगौरवास्पदम्।
गुणसंपद एव मान्यता भुवि चामुत्र स इत्यमन्यत ॥११॥

गुणलुब्धमना मनस्विनं वसुदेवं नरदेव आदरात् ।
मधुरां नगरीमयापयद्वरमामन्त्रयितुं निजं जनम् ॥ १२ ॥

समुपागतवान्स शूरजः परमोत्साहपरीतमानसः ।
स्वत एव नितांतपावनातुलकाशीममरावतीनिभाम् ॥ १३ ॥

स पुरीयपवित्रतां पुनस्सुषुमां वर्धयितुं समुद्यताम् ।
भुवनत्रयपावनां शुभां समपश्यत्सरितं सुपर्वणाम् ॥ १४ ॥

यदपां कणिकार्द्रभूतयः सपदि प्राप्तमहाविभूतयः ।
अगमन्सगरस्य नन्दना विपुलानन्ददनंदनं दिवि ॥ १५ ॥

अवलोक्य यदीय वारिणि स्फुरतः स्वच्छसुमच्छकच्छपान् ।
अधरन्नु तत्सरूपतां तनयावत्सलतावशो हरिः ॥ १६ ॥

वरुणप्रणया निवारिणी विपदां पापगणापहारिणी ।
यमलोकमलोकमाशु या कलयत्यात्ममहाप्रभावतः ॥ १७ ॥

अवधीरयते सुधां पयोमधुरिम्णा रुचिरश्रिया च या ।
पिबतस्सलिलं जनान्द्रुतं तनुते साधु सुधाशनान्दिवि ॥ १८ ॥

विमला कमलालया तथाऽच्युतभूस्स्निग्धसरस्वतीयुता ।
सविषावितसर्वमङ्गला त्रिपथा या त्रिसुरेश्वरोपमा ॥ १९ ॥

सविषाऽप्यमृतत्वदायिनी बहुभङ्गा भवभङ्गकारिणी ।
तदपि स्थिरसौख्यदायिनी भुवि गङ्गेतिशुभाभिधाश्रुता ॥ २० ॥

अवगाहनकारिणां नृणां तरलोत्तुंगतरंगमालिकाम् ।
सुरलोकपथे करोति या मृदुसोपानपरंपरां दृढाम् ॥ २१ ॥

सकलं कलिकालकल्मषं कलयन्ती विलयं गतं हतम् ।
सुकृतोच्चयतः प्रसन्नतां मनसोऽलं ददती स्वसेविनाम् ॥ २२ ॥

कमलासनवन्दिते हरौ कमलाप्रेयसि भक्तिवर्धनी ।
शमलं कुरुते निरन्तरं शमलं द्राक्तुमुलं हरन्त्यपि ॥ २३ ॥

विधुमंडलदर्पखण्डनार्जुनडिंडीरसमुच्चयच्छलात्।
पतितोद्धरणासमर्थतां विहसन्तीतरतीर्थसन्तते: ॥ २४ ॥

जनको भगवान् श्रियो धव: सहजन्माऽपि हिरण्यगर्भक:।
वसतिश्च महेशमूर्धनि वसु-गांङ्गेयजनु:प्रदा स्वयम् ॥ २५ ॥

प्रणयातिशयान्निरन्तरं प्रियरत्नाकरसंगमोत्सवा।
विभवान्विपुलान्ददात्यसौ सहजेयं घटना न विस्मय: ॥ २६ ॥

भुजगाधिपभोगशायिनो दुहिता भोगवतीति विश्रुता।
सुरलोकगभोगसौख्यदा भुवनाभोगविसर्पिवैभवा ॥ २७ ॥

इति लोकविलक्षणं महामहिमानं विमृशन्मुहुर्मुहु: ।
स्फुरदुत्कटभक्तिमेदुरस्स मुदा स्तोतुमथोपचक्रमे ॥ २८ ॥

त्वमनन्तपदाब्जभूर्जने कृपयाऽनन्तपथादुपागता।
मदनन्तसुखाप्तये प्रसू: पितरं ते भगवन्तमर्थय ॥ २९ ॥

पितरस्तनयासु वत्सला अनुदासीनतया तदर्थनाम्।
परिपूरयितुं समुत्सका इति मातर्दृढभावनाऽस्ति मे ॥ ३० ॥

शिवतां हि शिवाविलासिनोऽप्यशिवस्थाननिवासिनोऽप्यहो।
त्वमदा हरिदेकवासस: शिरसोढा शरणं भवाशु मे ॥ ३१ ॥

प्रणतश्चरणाम्बुजेऽम्ब ते शरणं यामि नमज्जनारणे।
करुणावरुणालयान्तरे स्मरणाद् दारुणपापदारणे ॥ ३२ ॥

कुलदैवतपादवारिति ध्रुवराजेन शिरोधृताऽऽदरात्।
दिविषद्धुनि भार्गवीधवे ध्रुवभक्तिं दिश मे दयावशा ॥ ३३ ॥

ऋषिभिर्बहुहर्षनिर्भरैस्तपसां सिद्धिसमृद्धिरित्यपि।
दृढभक्तिभराज्जटातटोज्ज्वलभूषात्वधियाऽसिमानिता ॥ ३४ ॥

अयि नन्दिनि विष्णुनन्दिनि स्मरदानन्दविशेषदायिनि।
निजनाम यथार्थतावतां प्रथमेति प्रथिते प्रसीद मे ॥ ३५ ॥

मयि मन्दमतौ दयासुधामयि मन्दाकिनि मातराकिर।
गुणबन्धुरसिन्धुसुन्दरि श्रितमन्दारतरो सुरापगे ॥ ३६ ॥

मुनिसत्तमजन्हुकर्णनिस्सरणा कर्णरिपोश्शराहतात्।
शरपञ्जरशायिसूनुसत्प्रणयात्प्रादुरभू रणाङ्गणात् ॥ ३७ ॥

तनयेऽप्यनये स्वभावतो जननी स्निह्यति कोमलान्तरा।
किमु सद्गुणसागरे जगत्प्रथिते शूरशिरोमणौ सुते ॥ ३८ ॥

प्रपितामहसागरोद्धृतौ त्वमसाधारणशक्तिशालिनी।
इति नम्रभगीरथाशयं सफलीकर्तुमुपागमो भुवम् ॥ ३९ ॥

सगरात्मभुवो बिडौजसो नगरातिथ्यभुजस्सदाऽतनोः।
अपि सागरराजभामिनि त्वदृते क्वास्ति विपन्नबन्धुता ॥ ४० ॥

अयि शन्तनुराजवल्लभे दयया शं तनु संततं मम।
परिहृत्य विपत्तिसंततीः निवसन्तं निकटेऽम्ब मामव ॥ ४१ ॥

करुणाकरतां पितुर्हरेश्शिवदत्वं च शिवादवाप्नुवः।
अतिपावनतां च जन्हुतः सहवासप्रभवा गुणास्तव ॥ ४२ ॥

अघनिर्हरणं भवाम्बुधेः सुलभं तारणमाश्रितारणम्।
विपदां च निवारणं क्षणात् चरणाब्जस्मरणेरणं हरेः ॥ ४३ ॥

पतितोद्धरणं शुभावलीभरणं पुण्यविवृद्धिधोरणम्।
स्थिरशान्तिसुखैककारणं सुमतिस्फोरणमिष्टपूरणम् ॥ ४४ ॥

इति ते प्रकृतिं विलक्षणां जनरक्षासुविचक्षणां भृशम्।
अनुलक्ष्य महात्मलक्षणं शरणं त्वामयि मातरागमम् ॥ ४५ ॥

त्वदनन्तगुणानुवर्णने न मनीषा क्षमते कथञ्चन।
इयतैव विरम्यतेऽधुना त्रिदिवौकोधुनि पुण्यसाधने ॥ ४६ ॥

**इति** संस्तुतवान्पुनः पुनः प्रणनामावयवैर्मुदाऽष्टभिः।
**प्रससाद मनस्तदा** भृशं वसुदेवस्य शुभेष्टसूचकम् ॥ ४७ ॥

वसुदेवमुपागतं वरं नगरीं वीरवरं नरेश्वरः।
निजमन्दिरमानयन्मुदा विभवैरेनममानयद् हृदा ॥४८॥

परितुष्टहृदं समर्चनान्यगदत्तं स्वमनीषितं नृपः।
मुदिते विहिताऽर्धना जने द्रुतमुद्दिष्टफलाय कल्पते ॥४९॥

तनयां विनयादिसद्गुणां कमनीयां कनकोज्ज्वलप्रभाम्।
वरयस्व वरीयसीं रुचा शुचिराकाममृतद्युतिर्यथा ॥५०॥

सुतनोस्त्वफलाभिधाजुषां वरणाद्वीर मदेकसंततेः।
स्वयमेव समेष्यति ध्रुवं सविधे राज्यरमाऽपि मेऽखिला ॥५१॥

मधुमासवरे वनश्रिया मिलितेऽसौ कुसुमाकरः पिता।
फल-पुष्पमुखोरुसंपदं प्रणयेद्वाक् प्रणयोपहारताम् ॥५२॥

इति गांधिरसाप्लुतं वचो नरनाथस्य निशम्य सादरम्।
दुहितुश्च निशाम्य सौभगं श्रियमप्येष तदन्वमोदत ॥५३॥

तरुणीरमणीयरूपतः क्षितिसापत्न्यजुषा धनश्रिया।
अवशीकृतमानसो नरो विरलोऽस्मिन्वसुधातलेऽखिले ॥५४॥

रमणीं परिणीतवान्मुदा तरुणीं काशिनरेशनन्दिनीम्।
वसुदेव उदारविक्रमस्सुतनुं सार्थशुभाभिधां वधूम् ॥५५॥

नवयौवनसंभ्रमोत्सुको विषयानन्वभवन्मनोहरान्।
अवितृप्तमना निरन्तरं नवरम्याणि हि कस्य तृप्तये ॥५६॥

कतिचित्समयेऽतिवाहिते सुतनुर्गर्भमधत्त वल्लभात्।
महता मरुता समीरिता जलदालीव रयादिरम्मदम् ॥५७॥

निजवंशविवृद्धिकामनातुरमातामहहर्षवर्षणः।
पितृमातृमनोरथैस्समं स च गर्भो ववृधे दिने दिने ॥५८॥

अशुभग्रहभे मुहूर्तके स्वकुलस्यैष्यदनिष्टसूचके।
तनयः सुतनोरजायत स्वजनस्य प्रमदार्तिदस्समम् ॥५९॥

जननीजनकौ प्रतोषयन्निजमातामहलालितो मुदा।
समवर्धत पौण्ड्रकाभिधश्शिशुराशीविष आलये यथा ॥ ६० ॥

तरुणः कृतिदारुणः सदाऽकरुणस्तीव्ररुषारुणेक्षणः।
तरुणाचितकण्टकेन सःसदृशोभूद्गुरुदेवनिन्दकः ॥ ६१ ॥

वसुदेव उदारमानसस्तनयस्थाविनयेन खिन्नधीः।
सुरलोकसमानसौख्यदं श्वशुरागारममंस्त नारकम् ॥ ६२ ॥

श्वशुरालयवासनश्चिरं भविताऽनादरभाजनं नरः।
इति लोकवचोनुसारतः स्थितिमाप्तः प्रथमं स दुस्सहाम् ॥ ६३ ॥

परिहाय सतीं सुतं तथा स तृणीकृत्य समृद्धसम्पदम्।
प्रययौ करवीरपत्तनं त्वरया मानधनो मनोहरम् ॥ ६४ ॥

कमला निजभक्तपालनव्रतदीक्षा कमलेक्षणप्रिया।
सततं निजवासतश्श्रिया सुखिनो यत्र तनोति संश्रितान् ॥ ६५ ॥

गगनाङ्गणचुम्बिपादपावृतगोमन्तकतुङ्गशैलराट्।
शिखरं च वहन्प्रवर्षणं सुषुमां यस्य विवर्धयत्यलम् ॥ ६६ ॥

अयि मङ्गलदेवते रमे करुणापाङ्गदृशावलोकय।
दयिते भुजगेन्द्रशायिनः कुरु मेऽभङ्गुरसर्वमङ्गलम् ॥ ६७ ॥

जनवाङ्मनसोऽधिदैवते मम वाचा श्रुतिशुद्धया भृशम्।
तव कान्तमनन्तशायिनं सततं स्तावय संस्तवप्रियम् ॥ ६८ ॥

मम चञ्चलतान्वितं मनो विषये सन्ततधावनातुरम्।
विनिगृह्य बलादनुग्रहात् भगवच्चिन्तनतत्परं कुरु ॥ ६९ ॥

बहुपापिनि कोपिनं हरिं सकलाघक्षपणे क्षमापय।
परिसान्त्वय ां सुधास्रवैर्वचनैरम्ब कुरु प्रसादिनम् ॥ ७० ॥

अमृतस्य सहोदरी भवत्यमृतेशानविलासिनीन्दिरे।
करुणामृतसेचनेन मां तनुतां शाश्वतशर्मशालिनम् ॥ ७१ ॥

विषकण्ठनुते विषाग्रजे विषयाशीविषदंशमूर्छितम्।
अविषह्यनितान्तवेदनं दययोज्जीवय तूर्णमम्ब माम् ॥ ७२ ॥

त्वदनर्घगुणावलीवशो भगवान्प्रेमभरेण वक्षसा।
भवतीमवितृप्तचेतसा पुनरुत्सङ्गतटे वहत्ययम् ॥ ७३ ॥

प्रणयातिशयं प्रकाशयन् तवकण्ठोपमकम्बुमिन्दिरे।
वदनेन समानमम्बुजं शुभनासासदृशीं गदामपि ॥ ७४ ॥

परिफुल्ल सुमावलीस्रृजान्वितधम्मिल्लसदृक्षवर्तुलम्।
वर चक्रमुरुक्रमश्चतुःकरभूषा व्यतनोत्प्रमोदतः ॥ ७५ ॥

न सुतो भुवि तोषदो नृणां न च दारास्सनिमित्तसौहृदाः।
न च बन्धुजनोऽपि वा परं जननी स्नेहमयी स्वभावतः ॥ ७६ ॥

अनुभूतिवशाद्विनिश्चयन्निति ऽमातः शरणं गतोऽस्म्यहम्।
भवतीं भवतीव्रतापहामव मां दीनमनन्यमानसम् ॥ ७७ ॥

इति भक्तिभरेण संस्तुवन् प्रणनाम प्रवणप्रसन्नहृत्।
क्षणकालनिमीलितेक्षणो वसुदेवोऽर्थितवान्हरिप्रियाम् ॥ ७८ ॥

करवीर पुरीनरेश्वरी वसुदेवं वरसद्गुणोज्वलम्।
उपगम्य निजात्मजाकरग्रहणायादरतो न्यवेदयत् ॥ ७९ ॥

सुमनास्सुमनस्सुकोमलां समनादर्शनपावनान्तरः।
वसुधाधिपनन्दिनीं युवा समुपायंस्त यदूत्तमो मुदा ॥ ८० ॥

रुचिरावयवां शुचिस्मितां पतिचेतोविवशीकृतिक्षमाम्।
उपलभ्य सतीं स शूरजस्सुतजन्मोत्सवसौख्यमन्वभूत् ॥ ८१ ॥

तनयो निज नाम सार्थयन्कृतिभिर्निन्द्यतमाभिरुद्धतः।
पितरौ च श्रृगाल इत्यसौ व्यथयामास नितान्तकातरौ ॥ ८२ ॥

प्रथमश्वशुरालयस्थितेः पुनरावृत्तिमवेक्ष्य तत्क्षणम्।
मधुरां पुनरेयिवान्पिता त्रिदिवाज्जन्मभुवं गरीयसीम् ॥ ८३ ॥

स च तत्र मनोज्ञरोहिणीं दुहितूरुग्रचमूपरेशितुः।
उदुवाह मुदा क्रमाद् बली निवसन्नव्यनवोत्सवोत्सुकः ॥ ८४ ॥

दयितासु च तासु देवकी वसुदेवं विनयादिसद्गुणैः।
अमरीसमरूपसम्पदा प्रणयात्प्रीणयति स्म सेवया ॥ ८५ ॥

विस्मृत्य पूर्वललनाविरहोद्भवार्तिमुद्वृत्तदृप्ततनुजापसदाप्ततापम्।
स ज्ञाति-बन्धु सुहृदादिकसाहचर्यः स्निग्धैर्नवैः प्रमुमुदेऽष्टभिरिष्टदारैः
॥ ८६ ॥

** इति यदुवंश महाकाव्ये वसुदेव परिणयो नाम चतुर्थः सर्गः **

## *पंचमः सर्गः*

श्रीकण्ठार्पितबाहुजातपुलकः प्रेमप्रफुल्लान्तरः
श्रीकण्ठांम्बुजसम्भवादिविबुधस्तोत्रप्रसादोन्मुखः॥
प्रल्हादे करुणेक्षणोऽसुरभिये चाकण्ठकण्ठीरवः
श्री वैकुण्ठपतिस्सदा प्रदिशताद्भक्तिं ममाकुण्ठिताम् ॥ १ ॥

क्षीराम्भोधिशयस्सतां भवमहाकारान्धकारापहः
कारागारजनुस्सनन्दतनुजाकारो जगत्कारणम्॥
क्रूराशेषसुरारिमर्दनकरोऽक्रूरादि भक्तेष्ट ओं।
कारार्थः करुणाकरोऽस्तु शरणं श्रीराधिकाराधितः ॥ २ ॥

पापावलीप्रमथनाच्युतसन्निधाना सौभाग्यसारमधुरा मधुराभिधाना।
भूलोकगा सुरपुरी मधुवंशजानां राज्ञां बभूव महिता श्रुतराजधानी
॥ ३ ॥

सेवारताघशमना शमनस्वसा यां मेघाभनीरकमना यमुना नदीना।
दीनार्तिहा दिनमणेस्तनया तरङ्गपृक्तो हि पावनतमां पवनस्तनोति ॥ ४ ॥

सूर्यात्मजा हतसमस्ततमा जनानां दत्वा प्रकाशममितं न विचित्रमेतत्।
तापापहा तपनजाप्यतिशीतलेयं पापान्पुनाति कृपया यमराट्स्वसापि
॥ ५ ॥

श्रीवल्लभावयवसङ्गतनीलरोचिः तत्पावनाभिधतया महनीयभूमा।
निस्सारयन्त्यपि सतां विषयेषु तृष्णां ज्ञानामृते जनयते महतीं पिपासाम्
॥ ६ ॥

कीलालसञ्चरणतृप्तहृदो झषाद्याः स्वर्गं गता अपि सुधामवधीरयन्ति।
कूले निवासरसिकाः पशवोऽपि नैव नन्दन्ति नन्दनवने सुकृतैकलभ्ये
॥ ७ ॥

गोपालमुग्धललनान्वितकृष्णकेलीभाग्यं यमस्वसुरिवास्ति न मे जलेषु।
इत्याकुला विलयमाप सरस्वती सा क्षोणौ धुनी दिविषदां जलधिं जगाहे
॥ ८ ॥

तस्यां पुरि प्रसृतमङ्गलवाद्यघोषे प्राग्देवकीपरिणये पथि दम्पतीभ्याम्॥
शोभाप्रयाणसमये रथयन्तृकंसं प्रत्याह तारकपथादशरीरवाणी
॥ ९ ॥

यां संभ्रमान्नयसि मूढ रथे स्वसारं तस्याश्च भावि तनयोऽन्तकृदष्टमस्ते।
अंभोनिधेः समुदितो ननु वाडवाग्निस्सम्बन्धिवारिनिचयं दहति प्रकामम्
॥ १० ॥

आकर्ण्य घोरतरमम्बरभाषितं स खड्गं विविग्नहृदयो भगिनीं निहन्तुम्।
उग्रः करेण जगृहे सहसौग्रसेनिः स्वार्थान्धता खलु खलेषु कृपाकृपाणी
॥ ११ ॥

कान्तावधोद्यतमवेक्ष्य कृतान्तकल्पं कंसं स हिंसकतयाऽवितथाभिधानम्।
उद्रिक्तकोप-भय-कम्प मुखान्विकारान्संस्तभ्य शान्तमनसा विचचार धीरः
॥ १२ ॥

पूर्वोढराजतनुजाद्वयविप्रयोगखेदापनोदनकृते परिणीयमानाम्।
देवाङ्गनासुरुचिसद्गुणदेवकीं हा कर्तुं पुरन्दरपुरातिथिमुद्यतोसौ
॥ १३ ॥

भार्यानुभोगचिरसौख्यमभीप्समानं दैवेन किं न लिखितं बत मे ललाटे।
भ्रातापि येन भगिनीं करुणाविहीनो दीनां जिघांसति विवाहशुभप्रसङ्गे
॥ १४ ॥

उत्पत्स्यमानतनयात् किल मत्प्रियायां स्यान्मृत्युरित्यभिदधे सुरवर्त्मवाण्या।
पुत्रान्समर्प्य बलिरूपतया शठस्य रक्षामि मे प्रणयिनीमिह जातमात्रान्
॥ १५ ॥

संरक्षणं विदधते पशुपक्षिणोऽपि प्राणाधिकप्रियतया विदितात्मजातान्।
धीमान्नरः प्रसविताथ भवन्कुलीनो तादृक्कठोरहृदयो नु कथं भवेयम्
॥ १६ ॥

ईदृक्षदुस्सहतमा कुदशा कदापि माभूदरेर्बहुलपातककर्मणोऽपि।
किं वा विधेयमधुनेति न वेत्तुमीशे नारायणं सदरणं शरणं प्रपद्ये
॥ १७ ॥

तस्यैव भव्यकरणात्करुणाप्रभावाज्जातस्सुतो मम कदाचिदमुं निहन्यात्।
शूलायमानखलशेखरशालकं मे दैवीं विचित्र घटनामिह कोऽधिगच्छेत्
॥ १८ ॥

इत्थं विचिन्त्य करुणाकरविश्वनाथे विश्वस्तधीस्सपदि संवृतचित्ततापः॥
हासप्रसन्नवदनो वसुदेव आह कालोचितानि वचनानि नृशंसकंसम्
॥ १९ ॥

तस्मात्प्रसक्तविपदाशु निवारणीया भद्राणि पश्यति नरो ननु जीवधारी।
जीवन्तमेति मनुजं शतवत्सरेभ्योऽप्यानन्द इत्यवितथा खलु लोकगाथा
॥ २० ॥

यावत्स्वबुद्धिबलमुत्कटसाहसेन मृत्युर्नरेण धृतिमाप्य निवारणीयः।
दैवानुकूल्यवशतो हि कदाचिदस्य न स्यादयं च विफलस्सततप्रयत्नः
॥ २१ ॥

प्राक् सत्यवानिति भुवि प्रथिताभिधस्य प्राणेश्वरस्य यमराजवशं गतस्य।
प्राणान्ररक्ष धिषणा-धृति-तीव्रयत्नैः सावित्र्युदात्तचरिताऽस्य सती द्वितीया
॥ २२ ॥

सूर्यान्ववायजनितो नृपतिर्दिलीपः पञ्चास्यवक्त्रपतितामपि कामधेनोः।
तां नन्दिनीं मुनिवरिष्ठवशिष्ठधेनुं युक्तिप्रयुक्तमधुरोक्तिबलात् पुराऽवीत्
॥ २३ ॥

प्रायः प्रसन्नहृदयेषु कृता जनेषु सम्प्रार्थना सफलतां समुपैति लोके।
स्तोत्रैः प्रसीदति मनोह्यसतामसत्यैरप्येवमात्मनि विचिन्त्य शशंस कंसम्
॥ २४ ॥

औदार्य-शौर्य-करुणा-सुजनोपकारवात्सल्यपूर्णमहनीयगुणैः प्रतीते।
विष्वग्यशोविसरभासुर भोजवंशे लब्धं त्वया जननभाग्यमनल्पपुण्यैः
॥ २५ ॥

नैते गुणा व्यभिचरन्त्यमलान्ववाये जातान्कदाप्यपरुषोऽपरुषस्वभावान्।
निष्कल्मषांश्च पुरुषान्सहकारवृक्षे न स्यात्कषायरसनिम्बफलस्य जन्म
॥ २६ ॥

दीनावनाय दनुजप्रकृतिप्रमत्तविद्वेषिवृन्ददलनाय यशोविवृध्यै।
शौर्यप्रकाशनकृते समराङ्गणेषु शस्त्रप्रहार उचितोऽमलवंशजानाम्
॥ २७ ॥

नत्वार्तपीडनकृते न च बन्धुहत्यै नो वा निरागसि जने भयकम्पनाय।
नो शुद्ध मुग्धललनाहननाय शूरा उद्युञ्जते हि मनसापि मनीषिभूपाः
॥ २८ ॥

तत्रापि बाल्यसमयात्परिपालितायां पुत्र्यामिव स्वसरि कोमलचित्तगात्र्याम्।
निष्कारणं च सततं करुणास्पदायां नो पातयन्ति हृदयालुनृपाः कृपाणम्
॥ २९ ॥

स्नेहेन मर्त्यसहजेन पितृव्यपुत्र्यां साक्षात्स्वसृत्वशुभभावनयाऽऽदृतायाम्।
वंशापकीर्तिपरिहारधिया त्वयेयं रक्ष्या सदैव परलोकभियाप्यवश्यम्
॥ ३० ॥

सामोपचारवचनान्युपपत्तिभांजि चित्रद्रवे विफलतामगमन्खलस्य।
द्वारे निखातदृषदीव पुरस्य मेघमालाभिवृष्टसलिलानि निरन्तराणि
॥ ३१ ॥

भूयो दुराग्रहमहोग्रहदौग्रसेनिं संसांत्वयन् मृदुलदीनवचा उपायैः।
रोषारुणेक्षणसमुद्धतखड्गपाणिं दष्टाधरं च दशनैर्वसुदेव ऊचे
॥ ३२ ॥

नानिष्टमस्ति तव मद्दयितासकाशादस्यास्सुताद्भयमवैषि जनिष्यमाणात्।
जन्मक्षणे सपदि वीर समर्पयिष्ये पुत्रानतो विसृज ते भगिनीं सतीं मे
॥ ३३ ॥

इत्येवमादि शपथोदितदीनवाग्भिस्सम्प्रार्थितेन पिशुनेन पशूपमेन।
शान्तेन किञ्चिदिव शूरसुतो विसृष्टःप्रायात्स्वधाम मदिरेक्षणया प्रमोदात्
॥ ३४ ॥

ऊरीकृता स्वदुहितेति पितामहेन प्रीत्याऽऽहुकेन सुतदेवककन्यका या।
सा देवकी प्रणयिना सुखभोगलीना वर्षं गतं दिवसमेकमिव व्यजानात्
॥ ३५ ॥

सौख्योपभोगनिरते क्षणकोणभागे क्षीणं क्षणीभवति दीर्घशरत्सहस्रम्।
उद्वेगभग्नमनसां श्वसितैर्महोष्णैर्वृद्धीभवन्ति निमिषाश्च युगायमानाः
॥ ३६ ॥

नीते सुखातिशयदायिनि चैकवर्षे कामाभिरामसुरुचं सुषुवे कुमारम्।
यं वीक्ष्य मोदभरितौ पितरावनर्थहेतुं विसस्मरतुरात्मकृत प्रतिज्ञाम्
॥ ३७ ॥

त्राता पुदाख्यनरकादिति जातहर्षावासन्नमृत्युरिति पुत्रमवेक्ष्य जातम्।
क्लान्तावसह्यतमवेदनया नितान्तचिन्ताकुलावभवतां जनकश्च माता
॥ ३८ ॥

तं कीर्तिमानिति शुभाभिधया विधाय सङ्केतितं स्वतनयं दृढसत्यसन्धः।
पुत्रं निनाय पिशुनं प्रति कीर्तिशेषं सत्यं प्रियात्प्रियतरं हि सतां तनूजात्
॥ ३९ ॥

अन्यादृशीं समवलोक्य च सत्यनिष्ठां प्रेष्ठात्मजार्पणकृतिं बलयेऽत्यदृष्टाम्।
हिंसानुषक्त हृदयोऽपि तदा प्रसन्नः कंसश्शशंस शिशिरांशु कुलावतंसम्
॥ ४० ॥

नास्मात्सुताद्धि भवतोः प्रथमाद्भयं मे भूयादतो निरपराधमिमं निहत्य।
नैवोत्सहेऽद्य पितरावविषह्यदुःखतप्तौ विधातुमथ नारकगामिनं माम्
॥ ४१ ॥

तस्मादमुं तनुभवं समुपाददानस्सद्योपसृत्य सुतकेलिविलोकनेन।
आनन्दनिर्भरहृदौ भवतां भवन्तौ तुष्टोऽस्मि ते सरलनिर्मलसाधुवृत्या
॥ ४२ ॥

एवं कुकृत्यविरतोऽपि पुनः प्रवृद्धपैशाचकर्मकरणप्रकृतिः स कंसः।
जन्मक्षणे षडपि हन्त सुतान्भगिन्या निष्कारणं श्रितभयोऽकरुणो जघान
॥ ४३ ॥

तत्पुत्रशोकभरविव्हलमानसौ तौ कारागृहे निगडितौ स्वजनैर्वियुक्तौ।
तत्सान्त्वनोक्तिजसमाहितिवञ्चितौ च श्रीवल्लभं शरणमीयतुरार्तबन्धुम्
॥ ४४ ॥

प्रल्हादं निजभक्तमस्तविपदं प्राल्हादयामास यः
ग्राहग्रस्तममोचयद्गजपतिं योऽनुग्रहात्सत्वरम्।
यश्च प्रापयत ध्रुवं ध्रुवपदं भक्ताग्रगण्यं ध्रुवं
भक्त्या प्रार्थयतां विपद्विहतये श्रीशं प्रपन्नौ हरिम् ॥ ४५ ॥

(इति यदुवंशमहाकाव्ये पंचमः सर्गः)

***अथ षष्ठः सर्गः***

*(महेश मोहन)*

विश्वेशोऽपि रमाधवोऽपि वसुधानाथोऽपि नारायणो
विष्वग्व्याप्ततमोऽपि दैत्यदमनोऽप्यात्मीयरक्षाकृते।
भूत्वा नाकबटुस्त्रिपादवसुधाकायो ययाचे बलिं
दैत्येन्द्रं भगवान्स मेऽस्तु सततं सौभाग्यदायी हरिः ॥ १ ॥

सर्वंसहाऽपि वसुधा विबुधाहितानां धर्मद्रुहां सुजनतापकृतां सदैव।
राजन्यवंशजनुषां खलदानवानां भारासहा हरिकृपास्पदधेनुरुपा ॥ २ ॥

शोकाद्विलोचनगलद्बहुलाश्रुधारा शोच्यां दशामुपगताऽऽश्वनु कम्पनीया।
तीव्रापदालिपरिहारमपेक्षमाणा क्षीणा जगाम सुरमानित सत्यलोकम्
॥ ३ ॥

तत्रार्हणीयकमलासनतरिथवासं संसेव्यमानममरैर्मुनिपुङ्गवैश्च ।
वीणानिनादरतनारदगीयमानं संस्तूयमानमपि नृत्यपराप्सरोभिः ॥ ४ ॥

ऋग्वेदमेकवदनेन यजुर्द्वितीयवक्त्रेण साम च तृतीयमुखेन चोच्चैः ।
तुर्याननेन च तुरीयमथर्ववेदं भक्त्या पठन्तममृतेशगुणौघबोधम् ॥ ५ ॥

अङ्के निषण्ण-मधुरस्मितसूच्यमानस्वाकूतमुग्धमुखशारदयेक्ष्यमाणम् ।
अष्टाक्षमीलनमिषेण निवेदितेष्टलीलाविहारसमयं हरिगानलोलम् ॥ ६ ॥

सार्थीकृतात्मचतुराननानामधेयं गीर्वाणसत्तममपिश्रुतनाभिजातम् ।
श्रीविष्णुना भुवनसृष्टिविधौ नियुक्तं सर्वाधिकं शतसुखानुभवप्रभावम्
॥ ७ ॥

प्राक् पावने पवनजन्मनि योऽवतीर्य रूपद्वयेन हनुमद्वरभीमनाम्ना ।
भूभूरिभारहरणे पुरुषोत्तमस्य साचिव्यभाग्यमभजद्बलकार्यशौर्यः ॥ ८ ॥

श्रीबादरायणरमारमणप्रणीतसद्ब्रह्मसूत्रनिचयात्मकमोक्षशास्त्रम् ।
व्याख्याय भाष्यरचनेन च मध्वनामा विज्ञानकर्मणि हरेः सहकार पुण्यः
॥ ९ ॥

सच्छास्त्रसंश्रवण-चिन्तन-सन्ततोरुध्यानप्रभावजनिताहिशयापरोक्षान् ।
प्रारब्धकर्मविधुरान्त्परमप्रसादान्नेष्यन्तमच्युतपदं सममात्मनैव ॥ १० ॥

ब्रह्माणमेत्य धरणी विहितप्रणामा शीर्षे कृताञ्जलिपुटाऽश्रुनिरुद्धकण्ठा ।
कृच्छ्रात्सगद्गदगिरा निजगाद दुःखमावेदितं प्रभुषु तच्छममेष्यतीति ॥ ११ ॥

आकर्ण्य तद् हृदयदारि वचो धरित्र्याः कारुण्यपूरहृदयस्त्रिदिवैस्तया च ।
साकं पुरन्दरपुरारिमुखैर्मुरारिं क्षीराम्बुराशिशरणं शरणं जगाम
॥ १२ ॥

तुष्टाव तं पुरुषसूक्त मुखैस्सुभक्तया तुष्टान्तरं परमपूरुषमागमैस्सः ।
इष्टार्थपूरणपटुं स्वपदप्रपन्नकष्टापहं च करुणाकरमादिदेवम् ॥ १३ ॥

श्रीपन्नगेन्द्रशयपादसरोजपन्नं भूयो विपन्नमगतिं शरणं प्रपन्नम् ।
सम्पन्नमाशुकलयन् विभवैश्च दुःखासम्भिन्नसौख्यभरितं कुरु सुप्रसन्नः
॥ १४ ॥

स्वामिज्जहीहि भगवन्लघुयोगनिद्रां नायं प्रभो समुचितस्समयो हि तस्या:।
पुत्रादिबान्धवजने विपदाभिभूते वात्सल्यवान्स्वपिति नैव पिता कदापि
॥ १५ ॥

नायं विलाससमय: कमलायताक्ष्या व्यालोलया कमलया जगतीजनन्या।
क्रोशत्सु दुस्सहशुचा शिशुषु स्वसौख्याकाङ्क्षाऽवकाशमयते हृदि नैव पित्रो:
॥ १६ ॥

लक्ष्मीनिवास इति वेदपुराणवेद्य: पूर्णो गुणैरिति च दोषविहीन एवम्।
कर्तेति विश्वजननावनसंहृतीनां वन्द्यो नरैस्तदधिपेष्टतम: किलेति
॥ १७ ॥

मुक्ताश्रयक्षयवि नाशक-दु:खहारिज्ञानेन गम्य इति नैकविधाभिराभि:।
व्युत्पत्तिभिर्बुधवरैर्बहुगीयमानो नारायणस्त्वमसि सार्थनिजाभिधान:
॥ १८ ॥

रामावतारसमये निहतास्त्वया ये पापा अपि प्रथितपुण्यजनाभिधाना:।
विश्वक्षयाय जनिमापुरिलातले ये ते राक्षसा मुनिकुलस्य कलङ्कभूता:
॥ १९ ॥

देवद्रुहोऽपि दितिजा अपि पूर्वदेवास्त्वत्प्रीतिपात्रधरणीसुरधेनुहत्यै।
राजन्यनिर्मलकुले जनिता इदानीं शैवालसत्सरसि चाम्रवने विषागा:
॥ २० ॥

सिद्धिं गतस्स्वतपसा परिशुद्धभूमिं क्षेत्रं चकार निजनाम युतं पवित्रम्।
पुण्याकरस्य कुरुराजवरस्य तस्य जात: कुलं सकलुषं कलयन्कलिस्स:
॥ २१ ॥

निष्पापसाधुजनकालकरालकालनेमिस्सुधाशनरिपुर्भुवि कंसनामा।
जन्माप्नुवन्यदुमहात्मवरान्ववाये त्वद्भक्तपीडन रतस्सततं दुरात्मा
॥ २२ ॥

देवा हि भूतलभुवस्सुकृतैकभाजो नामानुरूपकृतय: कुलमुद्धरन्ति।
नामप्रतीपचरिता दुरितानुरक्ता विभ्रंशयन्ति दनुजास्त्रिदशात्स्ववंशम्
॥ २३ ॥

दन्दह्यते सुजनवृन्दममन्दतापं स्वच्छन्दचार्यनलभीकरदुर्विलासैः।
सानन्दनन्दनवनायितभूप्रदेशो निष्यन्दिशोकभवबाष्पपयोनिमग्नम्
॥ २४ ॥

लोभान्धवित्तचयसंग्रहलोलयोग्यनामा हिरण्यकशपुरस्वसुतस्य साधोः।
हिंसाकरो नृहरिणा भवता हतोऽभूत् कःक्षेमवान् भवति माधवभक्तवैरी
॥ २५ ॥

त्वद्वारपौ सनकपूर्वमुनीन्द्रशापाद्वैकुण्ठवाससुखभोगवियोगतापौ।
रक्षःकुले जनिमवाप्नुवतां द्विवारं द्रोहो महत्सु विहितो महतेऽहिताय
॥ २६ ॥

भूयोऽपि राक्षसकुले जनितो जनार्तिदानेन रावणसमर्थितरावणाख्यः।
दोषार्णवश्च रघुनायक कुम्भकर्णो दीर्णश्शरेण भवता सुजनार्तिहर्त्रा
॥ २७ ॥

तावेव संप्रति जयो विजयश्च भक्तौ वंशे नृपस्य शिशुपालकदन्तवक्त्रौ।
आवेशतोऽसुरयुगस्य भुवीह जातौ पापालिपालजनभीतिददन्तवक्त्रौ
॥ २८ ॥

अन्येऽपि दानवगणा दितिसूनवोऽपि सम्भूयपावनतमे बत भारतेऽस्मिन्।
हिंसन्ति शंसितनयान्सुजनावतंसान् विध्वंसयन्ति हित धर्मपथान्नृशंसाः
॥ २९ ॥

एते समानरुचिशीलदुराशयादिव्यूढाः परस्परनिरूढसखित्वभाजः।
आत्मन्यवास्तवमहेश्वरताभिमाना मानोन्नतानपि मदादवधीरयन्ति
॥ ३० ॥

दम्भाभिजृम्भणबलाधिगतप्रतिष्ठाः कामादिषड्रिपुविहारधरान्तरङ्गाः।
आभासरम्यसवनादि विधानदक्षाः मूढान्कुधीपरिवृढा इह वञ्चयन्ति
॥ ३१ ॥

निन्दन्ति पूतचरितानपि वन्दनीयान् नन्दन्ति मन्द मतयोऽखिलनिन्दनीयैः।
छिन्दन्ति तावक पदाम्बुजभावसारान् भिन्दन्ति हन्त भवतारक धर्म सेतून्
॥ ३२ ॥

न श्रूयते हरिकथा भवजव्यथाभिर्नाकर्ण्यते च गुणकीर्तिरघार्तिहन्त्री।
नालोक्यते रुचिरमूर्तिरभीष्ट पूर्तिस्फूर्तिप्रदा च बहुलोछ्रयसौख्यराशेः

॥ ३३ ॥

नास्वाद्यते च मधुरं चरितामृतं ते नाघ्रायते च चरणार्पित पद्मगन्धः।
नो पावनी भवति हा रसना जनानामुच्चारणेन तव मङ्गलदिव्यनाम्नः

॥ ३४ ॥

न प्राश्यते च चरणाम्बुजतीर्थमेतैर्नो धार्यते च तुलसीदलमर्पितं ते।
न स्पर्शसौख्यमयते तनुरप्यमीषां त्वत्पादपङ्कजपरागवहस्य वायोः

॥ ३५ ॥

एवं स्थिते जगति दुस्सहसन्निवेशे विष्वग्विसर्पिघनघोरमहान्धकारे
दूरे च सन्मतिदिवाकरभाप्रसारे भूमन् कथं भवति भावुकबन्धमोक्षः

॥ ३६ ॥

हृद्दारणातिशयदारुणदुष्प्रसङ्गे पूर्वं दयामयतया विविधावतारान्।
स्वीकृत्य मूढजनतुच्छितमच्छपूर्वान्भूभारहृत्समतनोस्सुमनोमुदं त्वम्

॥ ३७ ॥

सर्वज्ञशेखर तवाविदितं न किञ्चिद् ज्ञातार्थबोधनमिदं भवताऽऽदृतं स्यात्।
आम्रेडितावगत बालकमुग्धवाचा मोचासुधामधुरया मुदमेति तातः

॥ ३८ ॥

तत्वत्रये हि परमात्म-जडावदुःखौ जीवास्त्वनादिसमयाद्भव दुःखभाजः।
तेषां सदा तदपनोदकृते पुरा ते वेदास्तवाननसरोजत आविरासन्

॥ ३९ ॥

त्वद्वक्त्रभास्वदरविन्दमरन्दभूतान्वेदाञ्जहार तरसा विरसान्तरात्मा।
आसन्नमृत्युरसुरोऽसुरिरक्षुराशु पानीयराशिमुदितोरुभयो विवेश

॥ ४० ॥

अन्यो दनोश्च तनयः पुनरप्यहार्षीदाम्नायराशिमथ वाजिमुखाभिधानः।
ताद्दग्वपुर्धर भवानभिमृद्य वेगाद्वेदोद्धृतिं सुखतनो व्यतनोद्रमेश ॥ ४१ ॥

प्रेमप्रकर्षवशतः कमलालयाया व्यालोललोचनचिरस्मरणाय नूनम्।
सूनोर्मनोजनिजुषस्स्मृतये च केतोः मीनोत्तमाकृतिधरो व्यतनोश्च लीलाः
॥ ४२ ॥

दैत्यं निहत्य बिबुधाल्यपकारकृत्यं व्रात्याग्रगण्यमखिला अमलाःश्रुतीस्त्वम्।
उद्धर्तुमिच्छुरुचितं रुचिरं च रूपं पाथोधिगाहनपटुं समधारयोऽच्छम्
॥ ४३ ॥

विज्ञानविघ्नकरमम्बुनिधौ निमग्नमुद्विग्नमानसमपारतले च लग्नम्।
निघ्नन्नरातिमसुरं पुरुषार्थहेतून्वेदानदाश्श्रितमुदावह मे हृदा त्वम्
॥ ४४ ॥

लीलाविनोदमनसा सरितो हि तीरे संध्यार्घ्यदातृमनुपाणिपुटीमुपेत्य।
भूत्वा झषश्शिशुरवोच उदारचित्तं त्राहि त्वरान्वितितिमिङ्गिलतोऽधुनेति
॥ ४५ ॥

अज्ञातदिव्यमहिमा तव वाक्यमात्रविश्वस्तधीः करुणया स्वकमण्डलूदे।
निक्षिप्तवान्शफरमाशु किशोरमेनं व्याप्तस्तदैव स कमण्डलुमानलङ्घी
॥ ४६ ॥

भूयस्स पल्वल-सरस्सरिदां प्रमाणातीतो न्यधायि मनुना पुनरब्धिमध्ये।
सप्तर्षिभिस्सह मनुं ह्यधिरूढनौकं प्रेम्णाऽभ्यधा विमल मच्छपुराणरत्नम्
॥ ४७ ॥

मीनावतारमहिमामृतपानलीनस्त्वद्भक्तमानवमनश्चपलात्ममीनः।
दुर्वासनाख्यमकरीमुखतो विमुक्तो निस्सीममोदमधिविन्दति ते प्रसादात्
॥ ४८ ॥

पापारिजातमथनप्रथितप्रभाव पाथोनिधेरुदभवंस्तवपृष्ठगेन।
पृथ्वीधरेण मथितात् किल पारिजातः कल्पद्रु कामसुरभी सकलेष्टदे च
॥ ४९ ॥

चिन्तामणिश्च तुरगो महितोच्चकर्णो वस्तून्यमून्यसदृशानि सुधैकलक्ष्यैः।
दैत्यैस्सुभाग्यरहितैरवधीरितानि देवास्त्वदाशयविदो जगृहुः प्रमोदात्
॥ ५० ॥

वृन्दारकासुरगणेऽमृतलब्धिकामे क्षीराम्बुधेस्सरभसं मथनप्रवृत्ते।
मन्थानमन्दरगिरिर्भुजगेन्द्ररज्वा सिन्धौ ममज्ज सह सर्वमनोरथेन
॥ ५१ ॥

नैराश्यखिन्नहृदयाखिलदीनदेवदैतेयवृन्दविनुतः करुणार्द्रचेताः।
तत्प्रर्थितार्थपरिपूर्तिकृते च सद्यस्सिद्धो भवान् समभवो भुवनैकनाथ
॥ ५२ ॥

लक्ष्मीकपोलललितोपमयोपगीतं दृष्टान्तमिन्द्रियविनिग्रहयोगिनश्च।
शर्मावहं सुमनसां शुभकूर्मरूपं धृत्वाऽद्रिराजमुदधीधर इन्दिरेश
॥ ५३ ॥

हालाहलं जनितमाकुलयन्मनांसि कोलाहलं जनयति स्म कलिस्वरूपम्।
वीर्योज्झितं पवनपाणिविमर्दितेन शूली निपीय गिरिशो विषकण्ठ आसीत्
॥ ५४ ॥

क्षीराम्बुधे र्मधुरतां जनकात्स्ववाचि सोदर्यशीतकरसुन्दरतां मुखे च।
पुत्रासनात्कमलतस्सुषुमां च नेत्रे संगृह्य विश्वजननी कमलोदियाय
॥ ५५ ॥

लावण्यशालियुवतीति सरागदैत्यैर्वात्सल्यमूर्तिजननीति सभक्ति देवैः
लोकोत्तराऽमलगुणा वरणोचितेति श्रीःप्रेमफुल्लनयनं हरिणा व्यलोकि
॥ ५६ ॥

दित्यात्मजांश्च करि-रासभ-सारमेयकल्पाननल्पदुरितानवहेलयन्ती।
नाकौकसस्स्वतनयानिव वीक्षमाणा स्निग्धेक्षणेन समतोषयदब्धिकन्या
॥ ५७ ॥

हंसप्रियं दुहितृकामिपितामहं चाजं तथैव चतुरास्यमुपेक्षमाणा।
रुद्रं कपालकरमम्बरिणं च कृत्त्या भालेक्षणं क्षणमपीह न वीक्षते स्म
॥ ५८ ॥

पीताम्बरं पतितपावनमस्तदोषं भ्राजिष्ण्वनन्तगुणसागरमार्तबन्धुम्।
सर्वाङ्गसुन्दरममन्दरसस्मितास्यं सा श्रीरवन्दत तवेश पदारविन्दम्
॥ ५९ ॥

तां चापि कम्बुरुचिबन्धुरकन्धरायां प्रेम्णा समर्पितसुगन्धसरोजमालाम्।
मन्दाक्षमन्दहसितानतसुन्दरास्यां पार्श्वस्थितां हृदयमन्दिरगां व्यधास्त्वम्
॥ ६० ॥

तूर्णं पुनः सुरदनूद्भवलोडिताब्धेः पीयूषपूर्णकलशान्वितपाणिपद्मः।
धन्वन्तरिस्त्वमनुसाधितसाधकेष्टः प्रादुर्बभूव तव देव नवावतारः
॥ ६१ ॥

सञ्जीवनप्रदसुधामयदिव्यरश्मेर्हस्ताब्जतोऽमृतघटं विधुकोटिभासः।
आजह्रुरातुरतया तटगस्य दैत्याः स्वार्थान्धता प्रकृतिरेव दुराशयानाम्
॥ ६२ ॥

मन्तुं विनैव परवञ्चनमप्रशस्तं नीतिं प्रकाशयतुमेवमनन्तशक्तिः।
हस्ताम्बुजं शिथिलयन्हरणावकाशं तेषां ददौ स भगवान् खगवाहनोऽल्पम्
॥ ६३ ॥

तीव्रं विषादममरेष्वधिजग्मिवत्सु भक्तेषु खिन्नहृदयेष्वहमेव पूर्वम्।
स्वैरं पिबाम्यमृतमित्यखिले मिथोऽलं स्पर्धाकुलेऽसुरकुले कलहायमाने
॥ ६४ ॥

चेतोज्ञचारुतमरूपसुपर्वरामागर्वापहारचतुरं चतुरास्यमातुः।
लावण्यराशिमवरीणमरं विधाय प्राचीकशो निरुपमं ललनासुरूपम्
॥ ६५ ॥

डिण्डीरपाण्डुरुचिमन्दहसप्रसूना रागेण विद्रुमजयाघरपल्लवश्रीः।
पीनोन्नतस्तनफलाश्रितपादपासा सञ्चारिणी कनकभासुरदिव्यवल्ली
॥ ६६ ॥

वाताहतस्य खचरस्य च नीरदस्य सम्पर्कमाशु परिहाय सितेतरस्य।
भूमिं गताऽदृगुपघातकचाकचक्या सौदामिनीव चपला प्रसृतप्रकाशा
॥ ६७ ॥

आत्मावलोकयितृलोकमनोनिबन्धपाशायितायतघनासितकेशपाशा।
कामार्तमानसविकर्तनतीक्ष्णशक्तिचापायमानसरलेतरमेचकभ्रूः ॥ ६८ ॥

शिञ्जाननूपुररवेण हि रञ्जयन्ती वक्रेक्षणेन हृदयानि च भञ्जयन्ती।
वातावधूतवसनाञ्चलमादधाना वक्षस्स्थले च जनलोचनमावहन्ती
॥ ६९ ॥

श्रृङ्गारहासरसपूरितहावभावैर्विस्मारितान्यविषया स्मरबाधितानाम्।
आशीविषानिव च गारुडमन्त्रवेत्ता प्रेक्षावतो जरयतींश्च वशीचकार
॥ ७० ॥

मोहावहावयव-हास-वचोविलासैः स्निग्धाःस्मरज्वलनदग्धविमुग्धचित्ताः।
तस्याः करेऽमृतघटीमसुरा निधाय प्रेमार्थिनो निजगदुस्त्रिदशद्विषस्ते
॥ ७१ ॥

का त्वं शुभे भुवनमोहनपेशलाङ्गि का धन्यतामुपगता तव वासभूमिः।
कान्यक्षराण्यभिधया समलङ्कृतानि भाग्यं समृद्धमधुना तव दर्शनेन
॥ ७२ ॥

सौन्दर्यसौधरसपानमहोत्सवाप्तमोदप्रफुल्लनयनोच्छ्रयसम्भवेर्षौ।
माधुर्यधिक्कृतपिकध्वनिमञ्जुवाणीमध्वर्थिनौ श्रुतिपुटौ भृशमुत्सुकौ नः
॥ ७३ ॥

कस्तेऽधुनाऽऽगमनहेतुरिहाब्धितीरे नो चात्र मातृ-पितृ- बन्धुमुखाप्तवर्गः।
कन्येव भासि शुभलक्षणलक्षिता त्वं सर्वं निवेद्य शमयाशु कुतूहलं नः
॥ ७४ ॥

किं वा फलं विदितया तव वार्तया त्वद्वाङ्माधुरीविषयया तृषयाऽनुयोगः।
त्वत्पाणिपद्ममकरन्दरसोपमानामेनां सुधां सपदि पातुमिहातुरास्स्मः
॥ ७५ ॥

लोकोऽभिवाञ्छति जलं मधुरं पिपासासन्तप्यमानहृदनार्द्ररसज्ञवक्त्रः।
चित्ते न तस्य समुदेति मनागपीच्छा मूलस्थलावगमने किल शैवलिन्याः
॥ ७६ ॥

कुम्भस्थितामृतरसं पृथुहस्तिकुम्भकुम्भस्तनि त्वदधरामृतरुच्यपेक्षि।
अस्मासु चामरचये परिवेषयस्व निष्पक्षपातमयि सप्रणयाक्षिपातम्
॥ ७७ ॥

नारायणो विषमदृष्टिरुमेशितेव विद्वेष्टि दानवमहाकुलमस्मदीयम्।
क्षुद्रेषु च त्रिदिववासिषु शङ्करस्सन् पक्षीशवद्वितनुते बत पक्षपातम्
॥ ७८ ॥

शोभावती शुभकृतिर्भवती तथा नो भूयादितीह सुदृढा हृदि नः प्रतीतिः।
तैजस्विनी विमलयौवतरूपसम्पत्प्रायः सदुज्चलगुणैस्सहकारपूता
॥ ७९ ॥

इत्थं प्रजल्पनपरानसुरान्विदग्धम्मन्यांश्च मन्दधिषणान् हृदि दुर्भृताशान्।
शान्तान्तरान्विबुधनामयथार्थताप्तान् मौनव्रतान् क्षणमवैक्षत सारसाक्षी
॥ ८० ॥

तानाह सस्मितमुखी सकला भवन्तो हे दानवा दिविषदश्च विभिन्नपङ्क्त्योः।
निष्पन्दना उपविशन्तु तथाऽप्रमत्ता इच्छानुसारममृतं परिवेषयामि·
॥ ८१ ॥

नेत्राणि मीलयत मत्परिवेषकाले सर्वेऽपि यूयमनभीष्टनिवारणाय
युष्मासु वीक्षणपरेषु तथातुरेषु व्रीडा ममाशु विदधीत शुभान्तरायम्
॥ ८२ ॥

आलोकयत्सु पुरुषेषु तदेकदृष्ट्या का वा कुलीनललना विनयादिशीला।
नापत्रपेत निजकर्मणि च क्षमा स्यात् लज्जा हि भूषणमलं कुलजाङ्गनानाम्
॥ ८३ ॥

तस्या निदेशवचनाऽपरिपालनेन भूयाद्विहायससरोजसखीष्टसिद्धिः॥
एवं विचार्य बहुधा विबुधारयस्तेऽनिच्छाविलोचननिमीलनजार्तिमापुः
॥ ८४ ॥

स्वापानभिज्ञमनसश्च निमेषहीना देवा अहीनशयनस्य कृपाविशेषात्।
दृङ्मीळनाक्षमतया निजमातृबुध्या तां मानिनीं ददृशुरच्छहृदा यथेच्छम्
॥ ८५ ॥

वासोऽञ्चलं परिकरे दृढमाशु बध्वा मञ्जीरमञ्जुलरवा दितिसूनुपङ्क्त्याम्।
सञ्चारतो हतधियां मुदमावहन्ती लेखान्व्यधत्त सुधियस्सुधया कृतार्थान्
॥ ८६ ॥

दैत्यप्रतारणपरायणदिव्यरूपैः कान्तालामकमनीयतनुर्भवान्सः।
अन्तर्दधे कपटनाटकसूत्रधारस्स्वीयत्रिविष्टपनिकेतनतुष्टिदृष्टिः ॥ ८७ ॥

उन्मीलितेषु नयनेषु समुत्सुकेषु ते दानवा न ददृशुः सुदृशं दुराशाः।
वार्ता सुधाविषयिणीमनिशम्य काम्यामार्ता बभूवुरवमानभरेण धूर्ताः
॥ ८८ ॥

अज्ञातवञ्चनविरोध्यवमानदुःखतप्ता अनाप्तलषिता रुशतीं ब्रुवन्तः।
रोषान्धताकलुषचेतस आत्तशस्त्रा युद्धोद्यतास्सुरजिताश्च पलायितास्ते
॥ ८९ ॥

पीतामृतास्समुपबृंहितशक्तयश्च पीताम्बरस्य कृपया विजयश्रियाढ्याः।
सम्प्राप्तसर्वविभवप्रभुताप्रभूतामोदा ययुस्सुमनसो निजधाम नाकम्
॥ ९० ॥

विद्वेषिणस्सुमनसां हरिदूषणोरुघोरांहसस्सपदि ते विपदं भजन्ति।
श्रीवल्लभस्य चरणाम्बुरुहं प्रपन्नास्सीमातिगाम्यनुभवन्ति सदैव शर्म
॥ ९१ ॥

स्वामिन्महोग्रगरलाशनजाततन्द्रानिद्रस्त्वदीययुवतीकमनीयरूपम्।
नाद्राक्षमक्षभिरहं त्रिभिरस्तभाग्यस्तद्दर्शयन्ननुगृहीष्व महीयमान ॥ ९२ ॥

अत्यर्थितः कुतुकिना गिरिजाप्रियेण योगीन्द्रदर्पनिकषं मदनोज्वलाङ्गम्।
सद्यस्सुपेशलवपुर्विपुलप्रभाभिर्दीप्तं त्वमाविरकरोः पुरतः पुरारेः
॥ ९३ ॥

आरामभूमिसहकारतरूपकण्ठे क्रीडारतां करविराजितकन्दुकेन।
मन्दस्मितोज्वलकटाक्षदृशं क्षिपन्तीम् मञ्जुस्वनेन मधु माक्षिकमाक्षिपन्तीम्
॥ ९४ ॥

व्याधूयमानवसनां पवनेन चेषन्मन्दाक्षसुन्दरनमद्वदनारविन्दाम्।
आलोलकुन्तलविलासविशालभालां बालां विलोक्य ललनां मुमुहे महेशः
॥ ९५ ॥

आत्मानमेव किल विस्मृतवान्पुरारिरप्यात्मवैरिनिशिताशुगविद्धगात्रः।
विस्रंसिकृत्तिवसनस्स्वदिगम्बराख्यां प्राख्यापयद्गिरिजया त्रपयेक्ष्यमाणः
॥ ९६ ॥

अन्तर्हिताखिलविमोहकदिव्यरामारूपं भवन्तमभिवीक्ष्य महोक्षवाहः।
व्रीडाविनम्रवदनो मदनारिसंज्ञास्वानर्हतां प्रकटयन्सविषादमाह ॥ ९७ ॥

शीर्षे धृतत्रिपथगापरिहास्यमानो भालोल्लसद्विमलबालसुधांशुना च।
विस्मेरतामुपगतेन जिहासयेव सञ्चिन्त्यमान उरगैः प्रमथैरुपेक्ष्यः
॥ ९८ ॥

मायापतेऽहमद्य विभो त्वदीयमायाविमोहितमतिः सकलापहास्यः।
यातो दशां त्रिदशतानुचितां दयालो को लङ्घितुं क्षमत ईश तवोरु मायाम्
॥ ९९ ॥

संस्तुत्य भव्यद सतां भगवन्भवन्तं नम्रो भवोऽम्बुजभवप्रणतं भवघ्नम्।
लब्धप्रसादसहितानुमतिस्सलज्जः कैलासधाम सजगाम सतीङ्गितज्ञः
॥ १०० ॥

*इति यदुवंशमहाकाव्ये महेशमोहनोनाम षष्ठः सर्गः॥*

## *अथ सप्तमः सर्गः*

ण्राक्रमपराहतद्विजवधापराधक्षितीश्वरान्वयपुरन्दर, त्रिपुरसंहरराधित।
परात्पर परायण प्रणतितत्पराणां सतां पुराणपुरुषप्रभो परशुरामपाहीश माम्
॥ १ ॥

भूदारतां विशदयन् भजतां शरण्य भूदाररूपधर दुष्ठहिरण्यनेत्रम्।
क्षोणीहरं जलधिपाथसि गाहमानं हत्वोदधीधर इलां निजदंष्ट्रया त्वम्
॥ २ ॥

नीलां विशालवसुधां वहदुग्रदंष्ट्रां विद्युल्लतामिव धृताऽसितमेघमालाम्।
आलोक्य चित्रघटनां क्वचिदप्यदृष्टां लोको बभूव चकितो महिमानभिज्ञः
॥ ३ ॥

दारिद्र्यदूनसुजनावन पुण्यहीनः स्वार्थैकलोलुपतया द्रविणं हिरण्यम्।
यस्संचिनोति स ममारितिरिप्रकाश्य नाम्ना हिरण्यनयनं न्यहनद्वराहः
॥ ४ ॥

भूदार इत्यभिधया तव कीर्तनेन दीनो जनो हि लभते वसुधां च नीलाम्।
श्रीमद्वराह इति नामजपेन भक्त्या श्रीमान्सदा सुखमयाऽखिल वासरायुः
॥ ५ ॥

मुस्ताहतैर्गगनमुत्पतितैश्च तोयैःक्षुब्धोदधेस्सुभृशमाप्लुतभानुबिम्बम्।
विज्ञाय शीतकिरणं मुनयोऽर्घ्यदानं नो तेनिरे जलभृताञ्जलयोऽपि काले
॥ ६ ॥

तत्पाथसःपृथुपृषन्ति नभस्पृशन्ति तारारुचीनि रुचिराणि विसृत्वराणि।
वीक्ष्यामरा भ्रमभराश्चकिता बभूवुरायामिनी विरमतीह न यामिनीति
॥ ७ ॥

क्रीडाकृते शुभकृते सुमनःपते ते क्रोडाकृते प्रणयिनी जननी जगत्याः।
क्रोडाश्रिताऽभिनवरूपमपश्यदीषद् व्रीडानतस्मितलसन्नयनाञ्चलेन
॥ ८ ॥

कूटे पटुः कटिवपुर्धरकैटभारिस्स्वीयानुजं निहतवानिति तीव्रतापः।
कोपाकुलो दशनदंशनरक्तदन्तवासा हिरण्यकशिपुः प्रतिकारमैच्छत्
॥ ९ ॥

घोरेण दीर्घतपसा दितिजः प्रसाद्य मामर्थयद्वरतया विजरामरत्वम्।
लोकैरशक्यमिति तद्विनिवेद्य तस्मै प्रादां वरं पशु-नरेतरतोऽविघातम्
॥ १० ॥

क्षुद्रात्ममर्त्यपशुतोऽति बलीयसो मे कावास्ति भीतिरिति मृत्युविहीनमेव।
आत्मानमुत्सुकमना अवगम्य बाढं दृप्तो विलुप्तधिषणो विबुधान्बबाधे
॥ ११ ॥

सर्वेश्वरोऽहमिति तामसमात्रयोग्याहङ्कारपङ्किलमना अथ निष्कलङ्कम्।
आल्हादकं सदुपदेशवचोभिरद्धा प्रल्हादमात्मजमपीडयदीश भक्तम्
॥ १२ ॥

सर्वोत्तमो हरिरिति दृढयाऽनुबद्धविश्वासतो विगतसाध्वससोढदुःखम्।
प्राणापहारिविपदोऽविगणय्य शान्तं त्वत्पादपद्ममभयं शरणं प्रपन्नम्
॥ १३ ॥

मत्तीक्ष्णधारकरवालविभिद्यमानकण्ठं भवन्तमवताद्भवदीयदेवः
इत्याद्यनल्पकटुजल्पनकल्मषास्ये व्यक्तोपहास्यमसुरं सुतमारणोत्कम् ॥ १४ ॥

वेगात्प्रगृह्य करयोर्युगलेन भास्वदूरौ निपातितमथो नखरैः खरैश्च।
निर्भिन्नवक्षसमथागमयस्तमस्तमन्त्रस्रजा विलसितात्मगलोऽप्यशान्तः ॥ १५ ॥

भीक्रान्तयेव रमया भयवेपमानकायेन वारिजभवेन च सादरेण।
सम्प्रेरितं स्तुतिपरं दयनीयवत्समप्रीणयः प्रणतमुल्लसितप्रसादः ॥ १६ ॥

तातं निरीक्ष्य नयनं तव रक्तमासीदस्यासृजा च दितिजस्य नखाश्च रक्ताः।
रोषाग्निना च हृदयं ज्वलितं तवाभूत्पञ्चाननाननवतस्सदृशं किलैतत्
॥ १७ ॥

भक्तं सुतं समवलोक्य मनो नितान्तरक्तं तवेश करुणारसपूरसिक्तम्।
मर्त्याकृतेस्समुचितं च निदर्श्य लोके प्रीतिं कृपां च नर धर्ममुपादिशस्त्वम्
॥ १८ ॥

शान्तं प्रसन्नवदनं प्रसमीक्ष्य लक्ष्मी नव्यं विचित्र मृगमानवमिश्ररूपम्।
प्रेमप्रफुल्लहृदयाऽपि भयोज्झिताऽपि नोपाससर्प विषहीनमिवोरुसर्पम्
॥ १९ ॥

व्रीडाविनम्रकमलाननदत्तदृष्टिस्स्पष्टाट्टहासनिनदेन समाहितांताम्।
तन्वन् विनीतनतशीर्षमभीतबालंभक्त्या स्फुरत्स्तवपरं भगवन्नवादीः
॥ २० ॥

प्रल्हाद वत्स सततं तव भद्रमस्तु त्वन्निष्ठयाऽनुपमयाऽचलनिष्ठयाऽहम्।
प्रीतोऽस्मि ते वरमभीष्टतमं वृणीष्व तत्पूरणोत्सुकमना इह सद्य एव
॥ २१ ॥

आनन्दचिन्मयतनो तव पादपद्मं ध्यानाध्वना स्पृशदुदारमना मनीषी।
मोक्षातिशायिसुखभाग्भवतीति बालोप्यालोचयन् स समयाचत भक्तिमेव
॥ २२ ॥

तत्प्रार्थनां समभिनन्द्य समीहितार्थं दत्त्वा तथा तदनपेक्षितराज्यमृद्धम्।
पापापहं नृहरिरूपमदृश्यमाशु कृत्वा रमेष्टतनुभृत्यमगारस्वधाम

॥ २३ ॥

पूर्वं विरोचनसुतो बलवैरिपूर्वान्नाम्ना बलिश्च कृतिभिर्विबुधान्विजित्य।
आनन्दितासुरगणश्श्रुतचक्रवर्ती त्रैलोक्यराज्यविभवं बुभुजे वदान्यः

॥ २४ ॥

भक्तामरातिशमनाय तदीयराज्यप्रत्यर्पणाय च महात्मबलेश्च कीर्त्यै॥
सौन्दर्यशालि तनुचारुतनुत्वतोऽपि सार्थाख्यवामनसुरूपधृगाविरासीः

॥ २५ ॥

स्वोद्दिष्टलोकहितकार्यकृतेऽनुरूपवेषो विधेय इति नीतिपथोपदर्शी।
श्रीवल्लभोऽपि भुवनाधिपनायकोऽपि व्याप्तोऽपि वामनवपुश्च वनीपकोऽभूः

॥ २६ ॥

श्रीकश्यपेन मुनिना विधिनोपनीतो यज्ञोपवीतसुकमण्डलुदण्डधारी।
लीलापटुः कपटतो बटुवेषशोभी त्वं जग्मिवान्बलिनृपालकयज्ञवाटम्

॥ २७ ॥

सत्कारतस्सविनयादरतो नृपस्य तुष्टान्तरस्समभिशस्य वदान्यभावम्।
भूवल्लभोऽपि चरणत्रयसम्मितोर्वीयाञ्चामिषेण भगवंस्त्वमवञ्चयस्तम्

॥ २८ ॥

सङ्कल्पतस्त्वदभिवाञ्छितभूमिदानसिद्धे नृपे सपदि वामनतां विहाय।
सद्यस्त्रिविक्रमतया भुवनातिलङ्घि व्यानग्भवान्विसृमरं तव विश्वरूपम्

॥ २९ ॥

व्याप्य क्षणेन भुवनत्रयमेकपादेनान्याङ्घ्रितीक्ष्णनखभिन्नपितामहाण्डः।
विन्यस्य मूर्ध्नि बलिभूमिभृतस्तृतीयं प्रावेशयस्तमचिरेण रसातलं त्वम्

॥ ३० ॥

तं लोकपालकतया विनियुज्य भक्तं तद्द्वारपालनपरःश्रितपारवश्यम्।
नित्यस्वतन्त्रपरमेश्वरतां प्रदर्श्य त्वं तं करिष्यसि पुरो बलिमिन्द्रमेव

॥ ३१ ॥

आत्मीयराज्यपरिरक्षणमेव कार्यं सर्वैःप्रजाहितकरैरधिकारिसङ्घैः।
नैवान्यदीयविषयाक्रमणं विधेयं क्षेमार्थिभिः धनबलक्षयवारणार्थम्
॥ ३२ ॥

एतां सुनीतिमुपदर्शयितुं किलेव शक्राधिपत्यहरदैत्यपतिं निगृह्य।
सद्वृत्तवित्तपुरुहूतसहायकस्सन् सैश्वर्यराज्यमपराहृतमार्पयस्त्वम्
॥ ३३ ॥

राजन्यापसदेषु सन्ततमिथोजन्यानुषक्तेष्वलं
दौर्जन्यार्दितसुप्रजेषु विभवाज्जन्यावलेपेषु च।
अन्यायाचरणैकतत्परधियां मुन्यादिसाधुद्रुहां
तेषां द्राग्दमनार्थमाविरभवः पूते भृगूणां कुले ॥ ३४ ॥

(तर्जन्या बुधतर्जनेषु कुवचः पर्जन्य धारेषु च
वज्राघातकृतेऽवतीर्णमवनौ वंशे भृगूणां त्वया ॥ ३४ ॥) (पाठान्तरम्)

कञ्जालयाकुसुमकोमलपेशलाङ्गस्वालिङ्गनप्रमदजोत्पुलके कराब्जे।
नीचावनीशहकठोरकुठारधारी धीराग्रणीर्जयसि भार्गवराम लोके
॥ ३५ ॥

दीनावने हि कुसुमादपि कोमलानि दृप्तार्दने कठिणतां पवितोऽपि यान्ति।
चेतांसि मङ्क्षु महतामिति सूक्तिरासीत्सार्था त्वया खलनृपालकुले निकृत्ते
॥ ३६ ॥

तातघ्नपापिनृपरक्तसरोऽवगाहप्रीतः प्रशान्तहृदयस्त्वमनञ्जनोऽपि।
लोकस्य पापपरिहारपथोपदेशोद्देशो व्यधा बहुतपांसि महेन्द्र शैले
॥ ३७ ॥

पित्राज्ञया निहतमातृसहोदरांस्त्वं तस्य प्रसादमिषतस्सहजात्मशक्त्या।
आजीवयो मुदिततत्प्रणयार्पिताशीश्शासी दुराशयवतां भजतां हिताशी
॥ ३८ ॥

दृप्तौ हिरण्यकशिपुश्च हिरण्यनेत्रः प्राक् संहृतौ दितिभुवौ भवता पुनस्तौ।
त्रेतायुगे मुनिवरेण्यपुलस्त्यजातौ हिंसोद्यतौ जगति रावण- कुम्भकर्णौ
॥ ३९ ॥

भूदेववंशजनितावपि तद्विरुद्धधर्मावधर्मधिषणौ च कुकर्मशीलौ।
धर्मानुगान्सुकृतकर्मरतांश्च विप्रान्प्रावर्ततामकरुणावनघान्निहन्तुम्
॥ ४० ॥

सद्वंशजा अपि तपोनिधितातसाध्वीमातृप्रशस्तजनुषोऽपि भवन्ति नीचाः।
प्राग्जन्मपापचयसंस्कृतिदुष्प्रभावाद्रत्नाकरादिव जनार्तिदकालकूटम्
॥ ४१ ॥

ताभ्यां पुरस्कृतपरश्शतयातुधानैर्विद्रावितस्त्रिदिवतश्शतमन्युरिन्द्रः।
स्वान्तज्वलच्छतशताधिकमन्युतप्तोनासीत्क्षमःप्रतिकृताविव निर्विषोऽहिः
॥ ४२ ॥

मत्तौ सुरासुरभुजङ्गमकिन्नराद्यै र्मत्तोऽधिगत्य वरमग्र्यमवध्यतां तौ।
देवानहर्निशमपीडयतां समस्तानस्तत्रसौ सुमनसो भुवि तापसांश्च
॥ ४३ ॥

धर्मद्रुहौ तदभिधानविलोपकाङ्क्षौ तद्बोधकश्रुतिपुराणगणस्मृतीश्च।
विध्वस्य दैवतसुधर्मसभामपि द्राग्लीनं क्वचिद्व्यतनुतामथ धर्मराजम्
॥ ४४ ॥

पाशैर्निबध्य वरुणं शठरावणोऽसौ पाशीति तत्प्रथितनाम चकार सार्थम्।
सर्वस्वमप्यपहरन्सविमानमेव तं राजराजमतनोदधनं विमानम् ॥ ४५ ॥

श्वा वै नरो हि यदुपासनया विहीन स्तेजस्विनो भुवनपावनपावकस्य।
जित्वा धनं किल धनञ्जयनामहीनं तं चाश्रयाशमतनोत्सतनूनपादम्
॥ ४६ ॥

तेनावमानित उमादयितोऽपि तापश्रान्तान्तरो निजमहेश्वरतापहारात्।
शूली विषाशनवशाद्वसनेन हीन आहिण्डते पितृवनेष्विति लोकवार्ता
॥ ४७ ॥

दिक्पालका दिशि दिशि प्रपलायमाना नानाविधापदविषह्यविषादभाजः।
कर्तव्यमूढमतयो हततेजसस्ते कुत्रापि न स्थिरतया स्थितिमाप्तुमीशाः
॥ ४८ ॥

रम्भां सुरेशपरिरम्भणपूर्वलीलारम्भाप्यसौख्यविधुरां च कृशांगयष्टिम्।
रम्भातुलाविरहितोरुतया कृशाङ्गीं स्तम्बाभया गतरुचा चकमे न कोऽपि
॥ ४९ ॥

एतादृशीमविषहां विषमामवस्थां लोकाधिपेषु सकलेष्वधिजग्मिवत्सु।
क्रूरात्मराक्षसविहिंसितमानवानां चेतोविदारकदशा किमु वर्णनीया
॥ ५० ॥

नेत्रे निमील्य भगवंस्तव दिव्यमूर्तिध्यानैकलीनमनसो ह्यनघान्मुनीन्द्रान्।
कूर्चग्रहेण चरणाहतितो निपात्य भूमौ समीक्ष्य जहसुस्समवाप्तमूर्च्छान्
॥ ५१ ॥

स्वाध्यायकर्मनिरतान्धरणीसुधाशान्वेदाक्षरश्रवणतो विहितार्तनादाः।
तप्तेन ते जतुरसेन हि दह्यमानश्रोत्रा इव प्रकुपिता अदहन् हताशाः
॥ ५२ ॥

व्यध्वंसयन्सविधिमध्वरपुण्यकर्म शर्मावहं प्रथितपुण्यजनाभिधानाः।
अध्वर्युहोतृयजमानसुसामगातृब्रह्मर्त्विजो विदधिरे त्रिदिवाधिवासान्
॥ ५३ ॥

स्थानाच्च्युता विभवतो प्रभुतापदाच्च भ्रष्टा विनष्टरुचयो महदापदार्ताः।
यज्ञेषु लभ्यहविरन्नकणानवाप्तेर्दीना भवन्तममराश्शरणं प्रपन्नाः ॥ ५४ ॥

क्षीराम्बुधौ कमलया मृदुपाणिपद्मसंवाह्यमानचरणाम्बुरुहं शरण्यम्।
भोगीशभोगशयनं विनयावनम्रास्त्वां तुष्टुवुर्निजजनेष्टद मत्समेताः
॥ ५५ ॥

स्तोत्रप्रसन्न हृदयो भगवन्नवोचो देवान्समाहितिपरैर्मधुरैर्वचोभिः।
विज्ञातमेव भवदीयमसह्यदुःखं तद्वारणार्थमवतारमहं करिष्ये ॥ ५६ ॥

स्वस्था भवन्तु भयलेशविहीनचित्ता स्वस्था भविष्यथ पुरेव समृद्धभाग्याः
स्वस्थानतश्चुतिशुचंसमपास्य तीव्रामाश्वासयन्निति तदान्तरधाः क्षणेन
॥ ५७ ॥

*इति यदुवंशमहाकाव्ये अष्टमः स्वर्गः समाप्तः ॥*

## अथ नवमस्सर्गः

श्रीभारतीभवनभारतभव्यदेशे भाग्योल्लसत्कलशकोसलराजधानी।
शोभाविशेषजितदैवतपूरयोध्या सार्थाभिधा जयति वैरिनृपैरयोध्या
॥ १ ॥

पूतोदया सरसया सरिता सरव्या सम्पृक्तशीतमरुता दुरितापहन्त्र्या।
आवेष्टिता विरजयेव पुरावतारात् वैकुण्ठपूर्लसति भूमिगता मुरारेः
॥ २ ॥

तस्यामुवास सखिवासवशस्यनीतिर्भास्वत्पथो दशरथोऽतिरथो नृपालः।
चण्डांशुवंशजनितोऽपि नितान्तशान्तस्वान्तो दिशान्तविततामलपुण्यकीर्तिः
॥ ३ ॥

दारा उदारनृपतेरभवंस्त्रयः कौशल्या सुनीतिकुशला प्रथमा गुणैश्च।
सौशील्यमित्रविनया च परा सुमित्रा रामा च केकयनरेशसुता तृतीया
॥ ४ ॥

चित्रं पवित्रतममात्मचरित्रमत्र धात्रीतले प्रकटयन्निव चैत्रमासे।
शुक्लं यशो विशदयन्निव शुक्लपक्षे भास्वद्गुणांश्च नवरत्नसमान्नवम्याम्
॥ ५ ॥

चण्डप्रतापविशदीकरणाय चण्डभानौ भवान् गगनमध्यगते च पुष्ये।
ऋक्षे स्वभक्त जनतापरिपोषणादिक्षेमार्थमाविरभवत्क्षितिपालपत्न्याम्
॥ ६ ॥

रूपेण सद्गुणगणैरभिराममीक्ष्य तस्यानुरूपशुभरामसुनामधेयम्।
सङ्केतितं दशरथेन भृशं सुखस्य काष्ठां परामुपगतेन धराधिपेन
॥ ७ ॥

कैकेय्यसूत तनयं भरताभिधानं सर्वाभिनन्द्यचरितं भरितं गुणौधैः।
सा लक्ष्मणं प्रसुषुवे शुभलक्ष्मणाऽऽढ्यं शत्रुघ्नमन्वितपदं च सुतौ सुमित्रा
॥ ८ ॥

शय्यात्मना परिचरन्नवितृप्तचेतास्सेवाविशेषसुकृताधिगमाय शेषः॥
आशीविषीयतनुभीतिहरो जनानां दध्रे तवानुजनिमानुषदिव्यवेषम्
॥ ९ ॥

विद्वेषिहृद्दलननाद-शिरश्छिदान्या सञ्जाघटीति नहि नौ परमेशसेवा।
इत्याकलय्य मनसा दर-चक्रदैवौ जातौ तवानुजतयाऽधिकसेवनेच्छू
॥ १० ॥

अश्वाननं करिमुखं च करालसिंहवक्त्रं भवन्तमभिवीक्ष्य पुराऽप्रसन्ना।
लक्ष्मीः पुनर्नरवपुर्धरमात्तहर्षा लीलोत्सुकेव जनकस्य गृहेऽवतीर्णा
॥ ११ ॥

सन्तानलाभतृषया च विधीयमानयज्ञावनेर्हि हलकर्षणशोधितायाः।
व्यक्तेति तां निजसुतामवगम्य सीतासंज्ञां विधाय जनको जनको बभूव
॥ १२ ॥

शत्रुप्रतापकदिलीपकुलप्रदीपो वंशप्रवर्तकरघुक्षितिपोपमानः।
राजाधिगम्य चतुरःपुरुषार्थहेतून् पुत्रान् कृती दशरथस्समभूत्कृतार्थः
॥ १३ ॥

बाढं चतुस्सहितषष्ठिकलाकलापे सर्वांशतोऽपि चतुरांश्चतुरात्मजान्सः।
भर्ता चतुर्जलधिचुम्बिवसुन्धराया आनन्दसागरतले निममज्ज राजा
॥ १४ ॥

सर्वज्ञमौलिरपिवृद्धि-तदन्य हीनोप्यस्त्राण्यशिक्षत गुरोर्ववृधे क्रमेण।
लोकानुकारिचरितानि नरोचितानि कुर्वन् भवानसुरमोहन रामरूपः
॥ १५ ॥

रक्षोगणात्स्वविहिताध्वररक्षणार्थं रामं पराक्रमिवरं प्रणुहि प्रजेश।
इत्यर्थितो दशरथो मुनिकौशिकेन चिन्ताकुलः क्षणमचिन्तयदन्तरङ्गे
॥ १६ ॥

रामं कथं नु सुकुमारकुमारमेनं क्रूरस्वभाव-बलशालिबृहद्वपुर्भिः।
कर्तुं कठोरकदनानि सहायहीनं रक्षोगणैश्च हरिणं हरिणेव बालम्
॥ १७ ॥

न प्रेषयामि यदि वत्समिमं नु विश्वामित्रो रुषाप्रकृतिरेष मुनिश्शपेन्माम्।
भूयादमित्रमदयस्सपदीह विश्वक्षत्रान्तको बत भवेच्च यथार्थनामा
॥ १८ ॥

त्रस्तान्तरं समवलोक्य जगाद वीरो मा भैः स्सुपर्वरिपुनिर्दलने क्षमोऽपि।
भस्मीकरोति तनुरप्यतनुस्फुलिङ्गस्सर्वं वनं गगनचुम्बितरुप्रकाण्डम्
॥ १९ ॥

आश्वास्य तातमिति धैर्यविवर्धनीभिर्वाचाभिराहतशरासन आत्मनोंऽसे।
भ्रात्रा समं विनयबन्धुरलक्ष्मणेन सम्प्रीणयन्कुशिकनन्दनमन्वगात्सः
॥ २० ॥

पुण्याश्रमं समधिगम्य मुनेस्सपुण्यश्लोको हि पापरतपुण्यजनानशेषान्।
प्रापय्य तीव्रतरवेदनरौरवाख्यं द्राङ्नारकं स्वयमपैक्षत पुण्यमाप्तुम्
॥ २१ ॥

आरब्धवत्सु मुनिषु क्रतुमीशतुष्ट्यै क्षेमाय च क्षितितले सकलप्रजानाम्।
शान्त्या अनिष्टपरिहारकृते तदानीं तद्ध्वंसनार्थमयतन्त हि यातुधानाः
॥ २२ ॥

साटोपमार्भटवर्तीं कुटिलां कठोरां कीटोपमीकृतमुनिं विकटाननां सः।
यागीयवाटनिकटे चटुलामटन्तीं प्राक् ताटकां निरयरङ्गनटीमतानीत्
॥ २३ ॥

चिच्छेद बाहुयुगलं बलिनस्सुबाहुनाम्नो निशाचरबलाधिपतेः शरेण।
मारीचमारचयदम्बुनिधौ निपात्य व्रात्यं प्रभुस्सुखमरीचिकयाऽकुलं सः
॥ २४ ॥

क्षिप्तैस्सुतीक्ष्णविशिखैः क्षपयन् विपक्षरक्षोगणं मुनिवरान्स ररक्ष रामः।
सुप्रीततापसवरैरभिनन्द्यमानो ब्रह्मण्यदेवनिजनामतया चकासे ॥ २५ ॥

आमन्त्रितस्सकुशिकात्मजनुस्सरामः पुत्रीस्वयंवरकृते जनकेन राज्ञा॥
निर्विघ्नपूर्णयजनः परितुष्टचेतास्ताभ्यां समं स मिथिलानगरीं प्रतस्थे
॥ २६ ॥

जीर्णाश्रमं पथि निशाम्य मुनीश्वरस्य पुण्यं तपोवनमिदं निगदन्स एवम्।
अध्यारुरोह सुविशालशिलां सलीलं चैतन्यसूचकरुचा रघुपस्स्फुरन्तीम्
॥ २७ ॥

पादस्य पेलवतया जितपल्लवस्य स्पर्शक्षणे कुतुकिना मुनिनेक्ष्यमाणा।
सद्यो बभूव सुममार्दवमाप्नुवन्ती योषात्मना परिणता बृहती दृषत्सा
॥ २८ ॥

गौरीशशीर्षविधृता भुवनं पुनाति स्वर्वाहिनी सगरसूनुगतिप्रदात्री।
यत्पादपङ्कजमरन्दरसायमाना शप्तां सतापससतीमपुनान्नचित्रम्
॥ २९ ॥

यन्नाम मङ्गलतमं स्मरतां जनानां निश्शेषपातकशिलोच्चयमायतोच्चम्।
दम्भोलिवत्सपदि पाटयते तदङ्घ्रिस्पृष्टा शिलाऽऽस महिला न विचित्रमेतत्
॥ ३० ॥

भक्त्या विनम्रवदनां ललनां कृतज्ञभावं स्फुटं कलयितुं वचनैरशक्ताम्।
सानन्दबाष्पनयनैरुपदर्शयन्तीं हार्दाशयं किल भियेव निवेदयन्तीम्
॥ ३१ ॥

सर्वान्तरो विदित तद्हृदयाशयस्सन् तत्काल एव मुनिशेखरगौतमेन
संयोज्य तां प्रणयिना विगतक्रुधा च दाम्पत्यसौख्यभरितामकरोदहल्याम्
॥ ३२ ॥

रामानुषङ्गजतपोव्रतभङ्गपश्चात्तापोऽप्यपास्तनवजातनिजात्मजोपि।
ब्रह्मर्षितामुपगतोऽपि ततः प्रभावात् रामानुरागमजहान्न मुनिर्मुमुक्षुः
॥ ३३ ॥

आयातमीक्ष्य मुनिपं रघुनन्दनाभ्यां सञ्जातसम्भ्रमभरो निजराजधानीम्
देहाभिमानरहितोऽपि विदेहराजो राजोपचारविधिनाऽऽर्चयदर्चनीयम्
॥ ३४ ॥

रामस्स्वयंवरपणायितशैवचापमुद्धर्तुमुन्नमयितुं न परेण भङ्क्तुम्।
शक्यं बभञ्ज सह भूमिभृतां मदेन तं रञ्जयन्नरपतिं समरञ्जयस्सः
॥ ३५ ॥

सीताभिधा नृपसुता लसिताऽत्यपूर्वलावण्यसौधरसनिर्झरकोमलाङ्गैः।
व्रीडानतस्मितमुखी सकटाक्षवीक्षं मालां समं स्वमनसाऽऽर्पयदस्य कण्ठे
॥ ३६ ॥

भक्ताभयप्रदकरेण नृपालपुत्र्याः पद्मास्वरुपमहसश्शुभपद्मशोभम्।
साक्षीकृतानिलसखो मुनिराट्समक्षं प्रेम्णा न्यपीडयत सम्भ्रमरोमहर्षः
॥ ३७ ॥

आनाय्य दूतमुखवेदितदिव्यवार्तोऽयोध्याधिपं दशरथं सकलत्रपुत्रम्।
तस्यात्मजैस्सह चतुर्निजकन्यकानामुद्वाहमङ्गलमहोत्सवमातनोत्सः
॥ ३८ ॥

साकं सुतैस्तदनुरूपगुणस्नुषाभिस्साकेतपत्तनमियाय नृपश्चतुर्भिः।
दारत्रयेण सहितो रथपञ्चयुग्मनामा स्वधाम जितसोमसुपुण्यधामा
॥ ३९ ॥

मार्गे महेश्वरशरासनभङ्गवार्ताक्रुद्धं परश्वधधरं जमदग्निपुत्रम्।
स्वाभिन्नमेव जनमोहकलीलयैव युद्धे विजित्य शुभुभे पितृबन्धुतोषी
॥ ४० ॥

क्षत्रान्ववायविपिनज्वलनायमानं श्रीभार्गवेण तनयं सह युध्यमानम्।
रामं कुमारमवलोक्य नितान्तभीतस्तातस्तुतोष जयिनं नृपतिः पुनश्च
॥ ४१ ॥

श्रीभार्गवाभिधविधुन्तुदमुक्तरामचन्द्रं पुनर्भवममन्यत स प्रजेष्टम्।
सर्वाधिकप्रियतमं गुणतो गरिष्ठं ज्येष्ठं सुतं विनयतोषितमातृवर्गम्
॥ ४२ ॥

दारैर्नवीनपरिणीतसुतस्नुषाभिस्सार्धं निजामुपससार पुरीमयोध्याम्।
आबद्धतोरणसमुच्छ्रितसत्पताकातुङ्गध्वजैस्समुपदर्शितलोकहर्षाम्
॥ ४३ ॥

शोभाप्रयाणसमये पुरवीथिकासु हर्षानिलोन्मदभराज्जयघोषपूर्वम्।
नृत्तप्रवृत्तजनता कुसुमाभिवृष्टिं चक्रे रथस्थितनवोढवधूवरेषु ॥ ४४ ॥

रामो दयामयतया सततं प्रजानां क्षेमं निरामयमकामयत प्रकामम्।
प्रत्येकशः प्रतिदिनं प्रतिसद्म गत्वा सौख्याधिगोचरविचारमचीकरत्सः
॥ ४५ ॥

तद्वीक्ष्य लज्जितहृदस्सचिवाश्च सर्वेऽप्युच्चाधिकारपदगा विगताभिमानाः।
कर्तव्यकर्मनिरता अकृतप्रमादाः प्रामोदयन्त सकलान्सुकुलांश्च लोकान्
॥ ४६ ॥

बन्धुस्नुषासुतयुजां महीषीनृपाणां सानन्दबाष्पनयनान्यचिरेण हन्त।
दैवस्य दुर्घटनया कलुषाणि दुःखास्त्रोदै र्भवेयुरिति कोऽपि न वेद लोके
॥ ४७ ॥

प्रेमैव मूर्त इति राममवेक्षमाणाः पर्यायतां पदयुगस्य शुभस्य तस्य।
मत्वा तथैव विदधु र्व्यवहारमात्मकार्तज्ञ्यभाव पिशुनं प्रमदात्प्रजास्ताः
॥ ४८ ॥

श्रीचन्द्रशेखरसुरेन्द्रमुखामरेड्यस्वीयप्रमोदकरकर्मणि चास्ततन्द्रम्।
सान्द्रं गुणैरगणितैरतुलैश्च लोकास्तं प्रेमचन्द्रमवदन्प्रभुरामचन्द्रम्
॥ ४९ ॥

तत्सन्निधानमहिमातिशयेन राज्ये दण्डः करेषु यतिनां ददृशे न मर्त्ये।
शोषो दिनेशकिरणैःपरितप्तपङ्के न्यायार्जितस्य न कदापि नृणां धनस्य
॥ ५० ॥

पङ्केरुहेषु सततं हि सरोगताऽऽसीन्नैव प्रजासु सुदृढासु बलोर्जितासु।
निस्सारिता कठिणता हृदयान्नराणां वक्षोरुहेष्वविशदाशु मृगेक्षणानाम्
॥ ५१ ॥

यातेषु केषुचन सौख्यमयेष्वहस्सु प्रेमास्पदं गुणनिधिं सकलप्रजानाम्।
ज्येष्ठात्मजं रघुपतिं युवराजपट्टे राजा युवानमभिषेक्तुमियेष हर्षात्
॥ ५२ ॥

सङ्कल्पमेनमवगत्य नृपस्य लोकास्स्वाभीष्टकल्पतरुसत्फलकल्पमुत्काः।
उत्साहमोदभरपूर्णहृदोऽभ्यनन्दन्नन्तःपुरेऽप्यतनुहर्षवशा महिष्यः
॥ ५३ ॥

साक्षात्प्रसू रघुपतेरुपकर्ण्य वार्तां पुत्राभिषेकविषयां लषितां चिराय।
सीमातिगप्रमदबाष्पजलप्रवाहं रोद्धुं शशाक न विलोचनतो गलन्तम्
॥ ५४ ॥

प्रीतिं परां निजसुताद्भरतात्सपत्नीपुत्रे पवित्रचरिते दधतीह रामे।
कैकेय्यविन्दत मुदं परमां तथैव मैत्रीवशीकृतसमानपतिस्सुमित्रा
॥ ५५ ॥

सामोदफुल्ल सरसीरुहपेशलास्यामुत्साहपूरसविजृंभणहास्यलास्याम्।
आलोक्य केकयसुतां चकिता भुजिष्याग्र्या मन्थरा भुजगदुष्प्रकृतिर्बभाषे
॥ ५६ ॥

कस्तेऽद्य चारुमुखि तोषविशेषहेतुर्वर्षीयसा प्रणयिना धरणीधवेन।
किं वाभिलष्यत उदार हृदा सुतं ते वात्सल्यतोऽयि युवराजपदेऽभिषेक्तुम्
॥ ५७ ॥

श्वेतं समस्तमपि दुग्धमवैषि मुग्धे सर्वेऽप्यृजुप्रकृतयस्त्वमिवेति वेत्सि।
तद्विभ्रमात्कटुफलानुभवाय सिद्धा चेतःस्थिरीकुरु च दास्यमुरीकुरुष्व
॥ ५८ ॥

स्पष्टं ब्रवीमि कुशलैकदृशा तवाहं रोषावहान्यपरुषे परुषाक्षराणि।
मास्मान्यथा महिषि मामिह मन्यथास्त्वं स्वादूदकर्कशफलाः खलु नारिकेलाः
॥ ५९ ॥

विश्वासघातककृतिः परवञ्चनैकशीला कुतन्त्ररचनाकुशला खला च।
कालस्य वेश्मनिहितैकपदाऽपि योषामोहाकुला पुरुषजातिरलं कृतघ्ना
॥ ६० ॥

वृद्धः पतिस्तव हृदि प्रथमेषु धर्मदारेषु रूढमचलं प्रणयं बिभर्ति।
बाह्यं प्रदर्शयति तं त्वयि भोगपत्न्यां धर्माच्च काममवमं मनुते मुधैव
॥ ६१ ॥

निर्णीत एव युवराजपदेऽभिषेको रामस्य नूनमधुना तव वल्लभेन।
साकेतराजतनया रघुराजपत्नी जेगीयते जगति सम्प्रति राजमाता
॥ ६२ ॥

भूपालकेकयसुता क्षितिभृत्कलत्रं दासीभवत्यहह हा भवती सपत्न्याः।
दासस्तवापि भविता बत ते प्रमादात् पुत्रोऽग्रजस्य भरतः परिचर्ययाऽयम्
॥ ६३ ॥

धन्ये भवत्युभयतोऽपि नृपालवंशसम्बन्धतोऽप्यहमिवायि सुतेन साकम्।
हास्यावमानकुदशामुपयास्यतीति मानोन्नता मम दुनोति मनो नितान्तम्
॥ ६४ ॥

तद्गौरवास्पदमहोन्नतपुण्यलब्धसौभाग्यरक्षणकृते प्रयतस्व नित्यम्।
बध्वा दृढं परिकरं परिचारिकात्वदुःसह्यरौरवजदुःखनिवारणाय
॥ ६५ ॥

अज्ञाहमेकमधुना सदुपायमेतत्कृछ्नातिकृच्छ्रनिचयच्छिदमुच्छ्रयाय।
वक्ष्यामि वक्ष्यसि यदेप्सितकार्यभारं कर्तुं च शक्ष्यसि तदा सुखभाग्भवित्री
॥ ६६ ॥

वृद्धोऽपि लोलुपतया तव वश्य एव भर्ताऽमृतायितवचो विरसं विधातुम्।
नेष्टे मनागपि मनस्विनि मानयिष्यत्येवेति मानसमवेति ममानुभूत्या
॥ ६७ ॥

पूर्वं रणाङ्गणसहायतया कृतज्ञस्तुष्टो वरद्वयमदादिति तत्स्मर त्वम्।
संस्मारयन्त्यथ तमर्थय ते सुतस्य राज्यं वनोपगमनं प्रथमस्य सूनोः
॥ ६८ ॥

इत्थं कलिप्रणिधिमन्थरयोपदिष्टाऽनिष्टानुबन्धिदुरिताभिनिवेशदुष्टा
कैकेय्यवाविशदसौ विवशा नियत्योन्मत्ता वशेव रभसेन रुषानिवेशम्
॥ ६९ ॥

सन्तोषवृत्तमभिधातुमिदं कनीयस्सत्यै स सत्यवचनः क्षितिपः प्रियायै।
तस्या निकेतनमुपेत्य ददर्श तत्र शून्यां तया कुपितया मृदुतूलशय्याम्
॥ ७० ॥

आशङ्कितशुभतया भयविह्वलात्मा ज्ञातस्थितिस्स परिवारजनाद्विषण्णः।
कोपालयं च समुपेत्य क्षितौ शयानां कान्तां न्यशामयदपास्तसमस्तभूषाम्
॥ ७१ ॥

विस्रस्तकेशनिचयां गलदश्रुनेत्रां संसक्तधूलिमलिनीकृतपट्टवस्त्राम्।
तीव्रातपक्लमतया गलितप्रसूनां वाताहतामिव लतां पतितां धरण्याम्
॥ ७२ ॥

दूनान्तरस्सपदि तामुपगत्य मन्दं सम्मार्जयन्नविरलाविलबाष्पबिन्दून् ॥
आमर्शयन्मृदुतनुं व्यथया कराभ्यां ग्रथ्नन्शिरोरुहचयं प्रणयादवोचत्
॥ ७३ ॥

प्रेमामृतोल्लसितमानसमानसे ते नित्यामले कलुषशैवलकल्पकोपः।
क्षीरोदधाविव विषं समुदैत्कथं वेत्यन्तर्विषीदति च विस्मयते मनो मे
॥ ७४ ॥

धाराधरावृतमिवामृतरश्मिबिम्बं विच्छायतामुपगतं नयनाब्जमस्रैः।
पाथोरुहं तुहिनबिन्दुगणैरिवाक्षि क्लेशाकुलोऽस्म्यसितकेशि निशाम्य कान्ते
॥ ७५ ॥

धूलीकणैः कलुषितं किल ते दुकूलं चेतो मदीयमपि शान्तिहरैर्विचारैः।
व्यस्तस्तवायि घनमूर्धजपाश एष मूर्ध्नि भ्रमं जनयते भ्रमरालके मे
॥ ७६ ॥

कोपः कुतोऽद्य कमलोपमिताक्ष्यकाले बाले त्वया किमवलोक्यपराधलेशः।
मय्यातुरे कथय नव्यथय प्रसीद प्राणप्रिये प्रणयतः प्रणमन्तमेनम्
॥ ७७ ॥

सर्वस्वमेव तव पादतलेऽर्पयामि त्वत्प्रीतये सकलमेव समृद्धराज्यम्।
दूरीकरोमि दुरदृष्टवतः प्रतीपांल्लोकानपि प्रियतमो न हि मे त्वदन्यः
॥ ७८ ॥

आदेशमादरभराच्छिरसा वहामि श्रीशार्पितं सुममिव त्रिदशाधिनाथः।
आनन्दयाऽमृतरसस्रवणैर्वचोभिराश्लिष्य मां बिससमप्रदिमेतदोर्भ्याम्
॥ ७९ ॥

एवं विधानि युवतीजनगाढमोहभ्रश्यद्विवेकमतिपामरवद्वचांसि।
आभाष्य लोहकठिनाहृदयं द्रवार्द्रं कुर्वद्भिरामृशदसौ रुचिराङ्गमस्याः
॥ ८० ॥

उत्थाप्य तामुरसि तन्मुखमादधानस्सम्मार्जयन्नयनबाष्पकणान्करेण।
लोलालकांश्च परितोह्यपसारयन्स हासावलोकनकुतूहल उन्मुखोऽभूत्
॥ ८१ ॥

स्वास्तीर्णमोहकरमायिकजालबद्धमीनायितं दशरथं नृपमीक्षमाणा।
अन्तः प्रमोदभरितापि बहिर्विषण्णावस्था जगाद सुदती मुहुरुच्छ्वसन्ती
॥८२॥

प्रेमाऽधुना तव मयि क्रशिमानमाप्तो वृद्धिं गतो दयित मत्सरवत्सपत्न्याम्।
रामाभिषेकमनिवेदयता त्वयाहमेणाङ्गना मृगयुणेव विहिंसिताऽलम्
॥८३॥

पुत्राधिराज्यमुदिता महिषी मदान्धा सा कोसलेशदुहिता महिता त्वयाऽलम्।
चित्ताहिताग्निसममत्सरबुध्यसूया वत्सस्य नूनमहिताय ममापि भूयात्
॥८४॥

तन्नोत्सहे तदवमानितजीवनाय बालस्य दुस्सहदुरन्तदशेक्षणाय।
प्राणानिमानहह धारयितुं नृपाहमाभासरम्यविरसैर्वचनैरलं ते ॥८५॥

मज्जीवनं दयित वाञ्छसि चेत् यथार्थः प्रेमाऽस्तिचेत्स्मर वरौ च पुराप्रदत्तौ।
तेनाभिषिञ्च तनयं मम यौवराज्ये रामं चतुर्दशसमा गमयाश्वरण्यम्
॥८६॥

तप्तामितायसरसायितदुस्सहोक्त्या स्वप्नेऽप्यनाकलितया नृपतिः प्रियायाः।
छिन्नस्तरुः परशुनेव विनष्टसंज्ञस्सद्यः पपात पुरुदुःखवशः पृथिव्याम्
॥८७॥

संभ्रान्तसर्व परिवारजनोपचारैः शीर्षोदसेचनहिमव्यजनानिलैश्च
कृच्छ्राच्चिरेण समवाप्य नृपस्ससंज्ञां मन्दं स्खलद्गिरमुवाच सबाष्पधारः
॥८८॥

रामेण सद्गुणशिरोमणिना प्रशान्तस्वान्तेन कुन्तलरुचा वपुषैव कान्ते।
किन्तेऽपराद्धमयि वाक्शतकुन्तहेत्या मन्मर्मकृन्तनपरे कुरुषेऽद्य हत्याम्
॥८९॥

लोकप्रिये सकलशोकहरे त्रिलोकाऽसामान्यमान्यतमपावनसच्चरित्रे।
को वा दृशोर्विषयतामुपयाति दोषो रामे रुषाऽसि परुषा पुरुषोत्तमे यत्
॥९०॥

भक्तिं परां वहति स स्वकमातृतोऽपि त्वय्यादरेण परितोषयते सुमित्राम्।
भिन्नोदरं च भरतं सह लक्ष्मणेन प्राणाधिकं प्रणयतो मनुते विनीतः
॥ ९१ ॥

जायेत निर्जलमरौ तरुरङ्कुरात्मा दृश्येत चण्डकिरणेऽपि तमःकदाचित्।
चण्ड्यास्तवाऽपि मृदुता हृदयं स्पृशेच्च रामे न दोषकणिकाप्यवकाशमीयात्
॥ ९२ ॥

तस्माद्दुराग्रहमहाग्रहतो गृहीतमुन्मोचयाशु निजमानसमत्तनागम्।
आश्रित्य तीक्ष्णतरधारविवेकचक्रं निर्वाणसोदरसुखं सुभगेऽनुभुङ्क्ष्व
॥ ९३ ॥

हे मत्तकाशिनि मदीयहितोपदेशो रुक्षोषरे समभिवृष्टजलापमानः।
माऽभूदिति प्रणयतः कथयामि वारंवारं त्वदीय सुखकामनयैव भामे
॥ ९४ ॥

मत्प्रेषणं समभिलष्यसि चेद् द्युलोके रामं प्रवेशयितुमिच्छ वनं यथेच्छम्।
इत्थं वदन् स सुदतीं प्ररुदन् सुमन्त्रमामन्त्रणार्थमहिनोत्प्रथमाग्रजस्य
॥ ९५ ॥

तत्रागतस्स्वपितरं भयकातरं तं शोकातुरं समवलोक्य विवर्णवक्त्रम्।
रामोऽक्षमो विषमदुस्थितिहेतुमार्तो वेत्तुं बभाण जननीं फणिनीस्वभावाम्
॥ ९६ ॥

मातः कुतोऽयमनुशोचति तीव्रतापस्तातश्चतुष्षु तनयेषु नयान्वितेषु।
अन्तः पुरेषु सकलेषु परस्परं सत्सख्येन सौख्यनिलयेषु सुखिप्रजासु
॥ ९७ ॥

त्वं वा विषीदसि कुतः पतिमानिताऽपि प्रातर्हिमाप्लुतसरोजसमाश्रुनेत्रे।
निश्शङ्कमेव निगदाशु तवांब चाज्ञां सिद्धोऽस्मि पालयितुमद्य विना विचारम्
॥ ९८ ॥

कैकेय्युवाच कथयामि मनीषितं मे वाचं तवाप्यवितथां कुरु सत्यवादिन्।
तातं च सङ्कटमहावटतो विमोच्याऽसत्यात्प्रभीतमधुना परिपाहि तूर्णम्
॥ ९९ ॥

राजा पुरा हि निजदत्तवरद्वयेन निर्वासनं च भवतो भरताभिषेकम्
नेच्छत्ययं कृतिगतं तत एव जाततापोऽद्य तापयति मामिव तप्तलोहः
॥ १०० ॥

एवं प्रलप्य सरुषं पतिमीक्षमाणां सास्रेक्षणं च विलपन्तमुपेक्षमाणाम्।
स्वार्थाय हेयमपि कर्तुमपेक्षमाणामालोक्य दीर्णहृदयोऽपि जगाद रामः
॥ १०१ ॥

सानन्दमेव वनमेमि यथाप्रतिज्ञं सन्देहबिन्दुरपि नात्र तवास्तु मातः।
नातः परं पितरमार्ततरं च हिंसीरित्यर्थये सनतिसाञ्जलिबन्ध दैन्यम्
॥ १०२ ॥

तातेन मे जननि दित्सितयौवराज्यं सन्तोषतोऽद्य भरतस्य समर्पयामि।
कान्तारवासमभिवांच्छसि तत्करोमि मातः प्रसीद पितरं कुरु चार्तिहीनम्
॥ १०३ ॥

सर्वज्ञ मौलिमणिविष्णववताररामभद्रोदितं वचनजातमभद्रभावा।
क्षुद्रान्तरा कलिसखी विमुखी विवेकात् हासोन्मुखाम्बुजमुखी सुखिता विमाता
॥ १०४ ॥

तातस्य सन्निधिमवाप्य शुचा गलद्भिर्बाष्पैर्बतान्धनयनस्य च तादृशस्सन्।
पादाब्जयोर्नरपतेः प्रणिपत्य मूर्ध्ना दुःखात्स्खलद्वचनमाह महात्मरामः
॥ १०५ ॥

मत्तोपि धार्मिकतमो भरतो महात्मा वत्सस्स्वमातृजनवत्सलतैकपात्रम्।
प्रीणाति भक्तिभरतः परिचर्यया त्वां विस्मारयिष्यति च मां सुगुणैरगण्यैः
॥ १०६ ॥

मा चिन्तया धरणिकान्त नितान्ततान्तं स्वान्तं तनुष्व चरमे वयसीह तात।
खिन्ने भवत्यतितरां सकलोऽपि लोकः खिद्यत्यशेषजननीररपि सान्त्वयेत्कः
॥ १०७ ॥

वत्साभिषेचनमहोत्सवतो महीयान्मोदो मदीयमनसो भविता हि सत्यम्।
प्रीतिर्ममास्ति भरते सुगुणैकसिन्धौ स्वाभाविकी प्रकृतितस्सरलेऽमले च
॥ १०८ ॥

प्राक् पावने कुशिकजन्मभृतो महर्षेर्वासेन तुष्टिरजनिष्ट तपोवने मे।
तामाप्तुमेव पितरद्य चिरादभीष्टां मोदेन तापसहितं विपिनं प्रयामि
॥ १०९ ॥

तत्तात तुष्टमनसाऽनुमनुष्व साशीर्वाङ्मङ्गलामितसुखावहपुष्पवर्षम्।
दुर्गाण्यतीत्य सकलानि च तत्प्रभावादागत्य ते पुनरहं परिचारकस्याम्
॥ ११० ॥

मत्प्रार्थनां पुनरिमां सफलां विधाय वात्सल्यमुत्सुकहृदा प्रकटीकुरुष्व।
माऽरुन्तुदैर्वचनतीक्ष्णशरैर्मदीयक्षेमेच्छुकैकयसुतां कुरु तात खिन्नाम्
॥ १११ ॥

क्षेमार्थमेव बहुशो जगतीत्रयस्य वत्सल्यमूर्तिरपि केकयनन्दिनीयम्
मातेरिता भगवता कमलाप्रियेण मामादिशद्विपिनयानमितीह मन्ये
॥ ११२ ॥

प्राक्कौशिकर्षिसवनोन्मथनैकलीनरक्षोगणक्षपणदर्शितविक्रमस्य।
कस्मादपि व्यसनसम्भवकल्पनाऽपि नैवोचिता न च भयं मम चापपाणेः
॥ ११३ ॥

एतैरुदारसुविचारपरिप्लुतैस्स्वसूनोर्वचोभिरमृतोपमितैरथाऽपि।
राजा हृदि द्विगुणितातिशयार्तिभुग्नो भग्नाशयःक्षितिशयस्स शनैरवादीत्
॥ ११४ ॥

हा वत्स राम विपिनं नय मामपि त्वं त्वत्सन्निधौ सुखमयं मम जीवनं स्यात्।
नूनं त्वया विरहिते नरकायमाने स्थातुं क्षमे क्षणमपीह विशालसौधे
॥ ११५ ॥

हृद्रावकं वचनमेवमुदीरयन्तं सम्राट्पदस्थितमनाथमिवोद्विजन्तम्।
तातं पुनः पुनरपि प्रणिपत्य दुःखादामंत्र्य सोऽश्रुनयनो निरगादगारात्
॥ ११६ ॥

प्रासादमात्मन उपेत्य सतीं ददर्श सीतां सितांशुवदनां रघुपोऽर्चयन्तीम्।
सीमन्तिनीः कनकमौक्तिकभूषणाद्यैः क्षोमैस्सकुङ्कुमहरिद्रसुमैस्समोदम्
॥ ११७ ॥

एतां सुखाम्बुधिनिमग्नहृदं विषाददावानलाहुतिमहं कथमद्य कुर्याम्।
इत्याकुलोऽपि कथमप्यवलम्ब्य धैर्यं सर्वं स वृत्तमनिवार्यतयाऽऽचचक्षे
॥ ११८ ॥

आकर्ण्य तद्भयकराशनिपातघोरवाचं क्षणं स्तिमितधीर्जनकात्मजाऽऽह।
श्वश्रूरनेन यदि तुष्यति मे तृतीया का वा गतिस्तव तु वृद्धपितुश्च मातुः
॥ ११९ ॥

आस्तामिदं प्रियतम प्रियया सहैव सद्यो मया विपिनमाश्रय निर्विचारम्।
साध्वीजनस्य पतिसन्निधितस्सुपर्वाऽऽरामायते गहनभूरपि घोरसत्वा
॥ १२० ॥

प्रेम्णाऽब्रवीद्रघुवरो वरवर्णिनीं तां गाढाग्रहां विनयतो विनिवेदयन्तीम्।
कान्तारमाशु जननीवचसा यियासोः स्वस्यानुयानविषये सुमकोमलाङ्गीम्
॥ १२१ ॥

काष्ठां परामुपगतां तव भर्तृनिष्ठां त्रैलोक्यपावनतमां च सतीप्रशस्याम्।
जानाम्यहं जनकनन्दिनि जन्मशुद्धे नाहं तथापि लषितं दयितेऽनुमन्ये
॥ १२२ ॥

मृद्वी तनुस्तनुलता वनवासदुःखवाताहतिं तव किल क्षमते न सोढुम्।
छायाश्रया सुमनसां सुषुमा मृदूनां चण्डातपं न सहते क्षणमंशतोऽपि
॥ १२३ ॥

हर्म्याङ्गणेप्यनिहिताङ्घ्रितलाह्यसूर्यम्पश्या सुकार्श्यगुणतोऽलमदृश्यमध्या।
मध्यान्ह सूर्यकिरणावलितीव्रतापं कान्ते कथं नु सहसे विपिने सुहासे
॥ १२४ ॥

सञ्चारतोऽपि मणिकुट्टिमसौधभागे प्राप्तव्यथा द्विगुणितारुणिमेतपादौ।
तीक्ष्णाग्रकण्टक शिलाशकलप्रदेशे यातुं कथं प्रभवतो मृदुलौ भवत्याः
॥ १२५ ॥

हम्बारवश्रवणतस्सदनेऽपि धेनोस्त्रस्ता स्वयं नु परिरम्भणसौख्यदा मे।
कान्तारवाससमये हरिगर्जितानि संश्रोष्यसि त्वमयि घोरतमानि भीरु
॥ १२६ ॥

भारायते शिरसि ते नवमल्लिकास्रृक् तूलादपि मृदिमभागतुलंकिलेयम्।
रुक्षे वनावनितले शयनेऽविषह्य क्लेशे शयिष्यसि कथं सुखलेशहीना

॥ १२७॥

सद्योघृतं दधि समस्तु पयस्सुगंधिशाल्योदनं प्रतिदिनं रुचितोऽश्नुवत्याः।
कन्दानि कुन्दरदने बदरीफलानि तृप्तिं कथं नु जनयेयुरिलेशकन्ये

॥ १२८॥

नानाविधाभिरपि साधु विचार्यमाणे वासो वने तव न वासु समर्थनीयः।
नैवार्थनीय इति ते हितमादिशामि तत्सूनृतं मम मनीषिणि मानय त्वम्

॥ १२९॥

इत्यालपन्तमभिरामवचांसि रामं रामा रमा सपरमादरमीक्षमाणा।
ज्योत्स्नावनेऽपि न जहाति पतिंसुधांशुं छाया च वृक्षमिति साऽऽशयमाह सूक्ष्मम्

॥ १३०॥

आनन्दमिश्रितविषादयुतं वनान्तं यान्तं निजाग्रजमनुव्रजनोत्सुकात्मा।
सौमित्रिराह पितृधर्मविहीनभूपं नेच्छामि सेवितुमहं तव पादसेवी

॥ १३१॥

स्नेहप्रणीतबलवत्तरयाचनातो दत्वा तयोस्स दयितानुजयोरनुज्ञाम्।
आत्मप्रसूसदनमागतवान् पदाब्जविन्यस्तमस्तकतलो(टो) विनतोऽनमत्ताम्

॥ १३२॥

अज्ञातसूनुवनयानकथा महेच्छा वात्सल्यसम्भृतहृदा जननी समोदा।
राज्यं चिरं त्वमनुभुङ्क्ष्व सुखी प्रजाश्च रक्षानुजांश्च परितोषय सर्वमातृः

॥ १३३॥

इत्याशिषश्शिवतमा ददतीं सहर्षां खेदाद्विवर्णवदनो निजगाद रामः।
राजा भविष्यति चिरं भरतो हि वत्सो यास्यामि लक्ष्मणयुतोऽद्य वनं ससीतः

॥ १३४॥

आकर्णितात्मजवचो विषमूर्च्छितेव स्थब्धा क्षणं रघुपतेर्जननी सबाष्पा।
उत्तुंगभूमिधरश्रृङ्गतटादपाराकूपारमध्यपतितेव भृशं शुशोच

॥ १३५॥

हा राम वत्स जठरान्मम दुर्भगाया जातः कुतोऽसि वनसञ्चरणार्तिलब्ध्यै।
सिंहासनं समधिरोढुमलब्धवांस्त्वं हंताधिवेक्ष्यसि शिला विपिने कथं वा
॥ १३६ ॥

कैकय्यधीनहृदयोऽस्तदयो मदीयो भर्ता न मे नयनगोचरतामुपैति।
वत्सः प्रियस्त्वमपि हा विपिनं गतश्चेत् दृष्ट्वा नु कं सुखमयं समयं नयामि
॥ १३७ ॥

द्रक्ष्यामि सूनुमिह राजपदाधिरूढं श्रोष्यामि तुष्टजनतास्तुतकीर्तिगाथाः।
स्पर्क्ष्यामि कोमलकराङ्गुलिभिः कपोलं निर्हेतुहासपरिफुल्लमहं स्वनप्तुः
॥ १३८ ॥

इत्याद्यनल्पसुखसारमनोरथा मे कालाद्बहोस्समुदिता मुदितान्तरायाः।
भग्नास्समूलमधुना विधिना हताया निश्शेषमेव बत किं करवाणि राम
॥ १३९ ॥

जन्मान्तरेहि जननी-सुतयोर्वियोगं प्रायेण मूढधिषणाऽतनवं ततोऽहम्।
शापात्तयोर्व्यथितमानसयोर्दुरन्तं भोक्ष्यामि तत्कटुफलं विफलाभिलाषा
॥ १४० ॥

शापप्रतापभवतापदपापलोपकामा कुमार सुकुमार कुमारकल्प।
राम त्वया सममहं विपिनोपयाता निष्कल्मषं निरशनव्रतमाचरिष्ये
॥ १४१ ॥

इत्थं निगीर्य हृदये क्वथमानदुःखं शोकावरुद्धवचना सहसा बभूव।
तां सांत्वयन्स्वयमशान्तमना अपि स्वं संस्तभ्य मातरमुवाच निरुद्धबाष्पः
॥ १४२ ॥

अम्ब स्थिरीकुरु मनोऽशुचिभावनाया मा भूर्वशा शुभविचारपरम्पराभिः।
वात्सल्यतश्शृणु सुतस्य कृतावधाना मुग्धं वचो मम समाहितमानसा त्वम्
॥ १४३ ॥

सत्यव्रतच्युतिकरादहितप्रसङ्गात्तातं वियोजयितुमेव वनं व्रजामि।
नास्मिन् प्रवित्रतरकर्मणि मेऽन्तरायपापे मनागपि मनः कुरु माननीये
॥ १४४ ॥

कैकेय्यनिष्टवचनाशुगविद्धचेता नूनं पिता तव निकेतनमेष्यतीति।
प्रत्येमि गाढमहमम्ब ततस्त्वमेव शुश्रूषयाऽऽदरभरेण च तोषयैनं
॥ १४५ ॥

सेवैव पत्युरनिशं परमो हि धर्मो साध्व्या उपोषणतपश्चरणव्रतेभ्यः।
वेत्त्येव साधु भवतीदमुदात्ततत्वं बाल्योचिता चपलता मुखरीकरोति
॥ १४६ ॥

वर्षीयसस्सुकृतशालिवरीयसश्च भक्त्या निषेवणतपः पतिदैवतस्य।
कल्पेत भाविनि मनुष्यजनुष्यवन्यां स्वर्गेऽप्यनुत्तमसुखातिशयाय सत्याः
॥ १४७ ॥

एवं विधैर्हृदयहारिवचोभिरम्बामाश्वास्य सान्त्वनपरैर्विनयार्थनैश्च।
कृच्छ्रादवाप्तसदयानुमतिः पदाब्जं नत्वा पुनः पुनरसौ निरगादगारात्
॥ १४८ ॥

सौमित्रिरेत्य तरसा सरसां सवित्रीं विज्ञापिताखिलदुरन्तकथो व्यथातः।
सेवाकृतेऽनुगमनाय वनेऽग्रजस्यानुज्ञामयाचत हृदा प्रणिपातपूर्वम्
॥ १४९ ॥

प्रावोचदात्मजनुषं सुमतिस्सुमित्रा नाहं तव व्यवसितं सुजनप्रशस्यम्।
रोद्धुं लषामि रघुपत्यनुयायिनोऽहं स्वार्थान्धताकलुषधीर्न कदाऽप्यथाऽपि
॥ १५० ॥

तत्ते हिताय मयका विहितोपदेशं कालत्रयेऽपि परिपालय निष्प्रमादम्।
रामं समं दशरथेन हि विद्धि पित्रा सीतां सतीं च जननीजननिर्विशेषाम्
॥ १५१ ॥

मातुर्महोच्छ्रितविचारवचो निशम्य विस्मेरतस्तिमितमानसलक्ष्मणोऽथो।
सौधं निजं समुपगत्य ददर्श हर्षाद्धास्योर्मिलास्यमधुरं दयितोर्मिलास्यम्
॥ १५२ ॥

नावैषि किंनु नगरे प्रसृतां प्रवृत्तिं येन त्वमुत्सुकतयोल्लसितासि मुग्धे।
कैकेयिकाकुटिलतन्त्रवशादटव्या रामोऽतिथीभवति तेन सहैव चाहम्
॥ १५३ ॥

उत्साहपूर्णनवयौवनसौख्यधाराविच्छेद्यवग्रहवचोनिचयैरकस्मात्।
उद्भ्रान्ततान्तहृदया नितराममीभिर्निस्सारितेव शफरी सलिलान्मुमूर्च्छ
॥ १५४ ॥

उद्बोधिता प्रणयसम्भृतलक्ष्मणेन व्यत्यस्तकेशरचना विमनायमाना।
दिङ्मूढतामुपगता क्षणमूकभावा क्षीणस्वराऽथ निजगाद मृगेक्षणा सा
॥ १५५ ॥

सल्लक्ष्मणान्वितमुखी नयनाभिरामा रामानुजं रमणलक्ष्मणमश्रुपूरैः।
संस्नापितस्तनयुगा विनयानताङ्गी कण्ठे समर्पितसुकोमलबाहुपाशा
॥ १५६ ॥

श्वश्रूस्स्वभावमृदुला समुदासिता च राज्ञा धवेन परिणीतवधूशतेन।
आलम्बनेन भवता च वियुज्यमाना प्राणान् बिभर्तु कथमेकसुता सतीड्या
॥ १५७ ॥

चिन्तानिलीनमनसा सततं नितान्तं देव्या तया व्यथितयाह्यनवेक्षमाणा।
भर्त्रा त्वया विरहिता रहिता सुखेन प्राणेश जीवतु जनो हि कयाऽऽशयाऽयम्
॥ १५८ ॥

एकाकिनी तु युवती भवता विनाऽहं शक्नोमि न क्षणमपि क्षणलेशहीना।
रामो यथा निजसतीं प्रणयेन सीतां नेष्यत्यरण्यमपि नाथ तथा कुरु त्वम्
॥ १५९ ॥

रामस्य पुण्यचरितस्य निषेवया त्वं सम्पादयिष्यसि महत्तरपुण्यराशिम्।
साध्वीजनस्तुतपवित्रचरित्रसारश्रीजानकीं परिचरेयमहं सुधन्या
॥ १६० ॥

निश्चेतना कमलिनी रविणा करेणास्पृष्टा विसृष्टसुषुमा निशि ताम्यतीव।
क्रोशत्यलं किल तिरश्च्यपि चक्रवाकी रात्रौ त्रियामसमयं प्रिय विप्रयोगम्
॥ १६१ ॥

दीर्घाश्चतुर्दशसमाः प्रियविप्रलम्भं का वा सती कुलवती युवती सहेत।
उक्त्वेति विह्वलहृदा विरहासहिष्णुः पर्यष्वजत्प्रियतमं प्रणयेन गाढम्
॥ १६२ ॥

तद्बाहुबन्धनविमोचनसाहसे च सोऽनिच्छया प्रयतनाद्विफलीबभूव।
आमृश्य कोमलकपोलयुगं करेण प्रेम्णा बभाण रमणीमणिमार्तराव:
॥ १६३ ॥

जानामि मानिनि तव प्रणयं विशुद्धं सीमातिगं मनसि चोल्बणवेदनां च।
तर्ह्यप्ययं त्वदभिकाङ्क्षितपूरणेऽहं शक्नोमि नेति गदितुं व्यथया त्रपेऽहं
॥ १६४ ॥

तत्कारणं श्रुणु विचारय चेतसा त्वं नो भावनापरवशं कुरु मानसं ते।
साकं त्वया वनगतप्रणयप्रसङ्गे लीलाविलीनहृदयौ ललने भवेव
॥ १६५ ॥

श्रीरामचारुचरणाम्बुजसेवनेन पुण्योदयोऽभिलषितो मम नैव सिध्येत्।
लभ्येत नाऽवनिसुतापरिचारिकात्वभाग्यं त्वयापि तदपूर्वमपूर्वगम्यम्
॥ १६६ ॥

कान्ताभिकर्षति मनो पुरुषस्य चायस्कान्तोऽहि लोहमिव मोहिनि सन्निकृष्टा।
ज्वालानलो हि नवनीतमिवातिशीघ्रं द्राग्द्रावयत्यपि मन: किल पूरुषस्य
॥ १६७ ॥

अत्र स्थितैव भवने भुवनेरुहाक्षि सान्निध्यभाजनतया भुवनाधिपस्य।
श्वश्रू-गुरु-श्वशुरसद्वरिवस्ययाप्तपुण्या विचिन्तय सदा हृदि मङ्गलं न:
॥ १६८ ॥

सामोपपत्तिहितसारसरस्वतीभिरेवं प्रियां गुणमणोन्द्रसरस्वदाभाम्।
सम्बोधयन्मुहुरनुत्तर मौनमुद्रासंसूचितानुमतिमीक्ष्य स निर्जगाम
॥ १६९ ॥

सम्प्रस्थितं विपिनवासकृते सुमित्रापुत्रेण साकमवनीतनयासमेतम्।
रामं निरीक्ष्य पथि पौरजनास्सवृद्धबालाऽबलाश्च रुरुदुर्भृशमार्तनादा:
॥ १७० ॥

गावस्तृणं न जघसुस्तुरगा गजेन्द्रा: प्राचीकशन् निजशुचं गलदश्रुभिश्च।
स्तब्धो बभूव पवनस्तरवश्च दु:खात्तारस्वरेण विहगा बत चुक्रुशुश्च
॥ १७१ ॥

हाहेति पौरजनदीर्घतरार्तनादो वैहायसे पथि विमानचरामराणाम्।
बाष्पाकुलानि विदधुश्च विलोचनानि तद्वर्णयन्नपि मुमूर्च्छ कविः किलाऽऽद्यः
॥ १७२ ॥

स्वस्यानुगान्पुरजनान्विनिवर्त्य कृच्छ्राद्रामो गुहस्य सुहृदःकिल नाविकस्य।
आतिथ्यतृप्तहृदयो दयितानुजाभ्यां विश्रान्तिमाप वटपादपमूल एव
॥ १७३ ॥

प्रातः पुनः समुदये तरणेस्तरण्या कारुण्यमूर्तिरमृताशतरङ्गिणीं सः।
तीर्त्वा गुहं समनुगृह्य ततश्च भारद्वाजाश्रमं श्रमहरं समुपाजगाम
॥ १७४ ॥

आसन्नमृत्युमपि रामदिदृक्षयैव सन्धारितासुमचिराच्छरभङ्गसंज्ञम्।
भक्तं मुनिं च निजदर्शनधूतपापं पूतं द्युलोकनिलयं व्यतनोदशोकम्
॥ १७५ ॥

आदर्शभूतविमलाचरिता सतीनां सम्माननीयमुनिपुङ्गवमानिनीस्सा।
आनर्च गन्धकुसुमैर्वसनैर्हरिद्रायुक्कुङ्कुमैर्मणिहिरण्यविभूषणैश्च
॥ १७६ ॥

ता आशिषस्सपरितोषविशेषमूचुरज्ञातपद्मनिलयामहितावताराः।
देव्यै विधातृशिवपूर्वसुरार्चितायै पत्न्यै परात्परतरस्य रघूत्तमस्य
॥ १७७ ॥

सुपर्णवाहनस्वर्णगर्भापर्णेशवर्णितः। पूर्णानन्दः पर्णकुट्यामुवास स गुणार्णवः।
॥ १७८ ॥

दृप्तप्रचण्डरिपुमण्डलदण्डनाय यातो वनं सदवनाय च दण्डकाख्यम्।
साधुप्रपञ्चहितपञ्चवटीप्रदेशेऽवात्सीत्स लक्ष्मणकृतोचितपर्णकुटयाम्
॥ १७९ ॥

सस्वागतं मुनिवरेण हि सत्कृतोऽसौ क्रूरात्मरात्रिचरनाशकृतप्रतिज्ञः।
आश्वासयन्सकलतापसवृन्दमाप्तानुज्ञो जगाम भगवानुटजं शबर्याः
॥ १८० ॥

सामोदभक्तिवशया बदरीफलानि दष्टानि नीचकुलयाऽपि समर्पितानि।
आस्वाद्य तृप्तहृदयस्सदयस्तदैव भाग्योदयेन लषितां सुगतिं दिदेश
॥ १८१ ॥

(सीतापहारादि उत्तर श्लोकाः नोपलभ्यंते न लिखिताः वा)

*॥ इति यदुवंशमहाकाव्ये श्रीरामचरितो नाम नवमः सर्गः ॥*

## *॥ दशमः सर्गः ॥*

## श्रीकृष्ण पुष्णीहि माम्

क्षीराम्भोधिशयस्सतां भवमहाकारान्धकारापहः
कारागारजनुस्सनन्दतनुजाकारो जगत्कारणम्।
क्रूराशेषसुरारिवीरदमनोऽक्रूरादिभक्तेष्टदोङ्
कारार्थः करुणाकरोऽस्तु शरणं श्रीराधिकाराधितः ॥ १ ॥

एवं चतुर्मुखमुखाखिललेखवर्यैर्भूभूरिभारपरिहारकृते विनम्रैः।
सम्प्रार्थितस्सकरुणस्सुरवर्त्मचारी वाचं सुधारसमुचं भगवानुवाच ॥ २ ॥

ज्ञातो मयैष विषयो विषमो विषादोद्रिक्तो विषादनसमो नितरां तथापि।
तद्वारणे समुचितं समयं प्रतीक्षेऽ कालेकृतं प्रयतनं विफलत्वमीयात्
॥ ३ ॥

उप्तानि योग्यसमये प्रभवन्ति बीजान्यद्धाङ्कुरप्रजनने हलकृष्टभूमौ।
ग्रीष्मे शिलोच्चयतटे तु शतप्रयत्नैः सस्यं न रोहति परं वरबीजहानिः
॥ ४ ॥

पक्वेतराम्लफलमर्दनतः कराभ्यामाम्लो रसस्स्रवति भोक्तृजनानभीष्टः।
प्राभातकालमथितं दधि सान्द्रमस्तु पर्याप्तमुद्भ्रमयितुं नवनीतमीष्टे ॥ ५ ॥

मत्प्रीतिभाजनधरासुर-सौरभेयी-हिंसादिहेयकृतितोऽधमदानवानाम्।
पूर्णेषु पापकलशेषु धरातलेऽस्मिन् शिष्टावनाय भविता हि ममावतारः
॥ ६ ॥

प्रादुर्भविष्यत इलावलये तदा मे सेवाभिलभ्यसुकृतोत्सुकचेतसो याः।
ता देवता अवतरन्तु नरेषु पूर्वं तत्रापि यादवकुले विमले सयोषाः
॥७॥

बालेक्षुदण्डनिवहो बहुवारयन्त्रनिष्पीडितोऽपि न समृद्धरसं व्यनक्ति।
एवं च सर्वविधकाङ्क्षित कार्यजातं कालानुकूल्यकलितं हि फलेग्रहि स्यात्
॥८॥

पीत्वा रमाप्रणयिनो वदनारविन्दनिष्यन्दिवाङ्मयमरन्दरसं सुरेशाः।
आनन्दतुन्दिलमनोमधुपा बभूवुः को नाम तृप्यति पुमान्न निजेष्टपूर्त्या
॥९॥

यस्यामलोरुतपसो महसः प्रभावात् भूः काश्यपीति भुवने प्रथिताभिधाना।
तत्कश्यपो मुनिवरो वसुदेवनाम्ना ख्यातो बभूव यदुवंशकुलावतंसः
॥१०॥

भर्तैव देव इति भावनया सपर्यापुण्येन कश्यपमुनेर्दयिताऽदितिःसा।
देवोत्तमस्य जननीपदभव्यभाग्या जन्माऽऽप देवकनृपाद्भुवि देवकीति
॥११॥

पातिव्रती परमभाग्यपदं पुरन्ध्र्या इत्यात्मदिव्यचरितेन निदर्शयन्ती।
सर्वाप्तबन्धुजनताऽदृतबाल्यलीला ज्योतिष्मतीव ववृधे पितृमन्दिरे सा
॥१२॥

पापात्मशासनकठोरकृतेर्निवृत्तिमिच्छन्शमे च शमनो मन आदधानः।
स्वं धर्मराजपदमर्थयुतं विधित्सु स्तन्नामकोऽजनि स पाण्डुकलत्रकुन्त्याः
॥१३॥

आदेशतो भगवतः पवमानदेवो भीमात्मना भुवनपावनभव्यभूम्नः।
भूमाविहाविरभवद्भवतापहर्तुः भीमो रणेष्वनुजनुस्स युधिष्ठिरस्य
॥१४॥

श्रीधामवामनतनोः प्रथमोऽग्रजन्मा शिष्यत्वतस्तदुपदेशसुधां पिपासुः॥
भोगैकसाधनसुधामवधीर्य मान्यभीमानुजोऽभवदसौ मघवाऽर्जुनाख्यः
॥१५॥

त्रैविष्टपौ च भिषजावपि मानवानां संसाररोगपरिहारकृतेऽसमर्थौ।
तत्प्राप्तयेऽजनिषतां किल पाण्डुपत्नीमाद्र्यां सुरूपनकुलससहदेवकश्च
॥ १६ ॥

पार्थप्रिया-भवितुमुत्सुकतां दधाना भाग्यास्पदद्रुपदपार्थिवलब्धजन्मा।
श्रीद्रौपदीप्रथिमभाक् प्रथमा सतीनां पाथोजजस्य महिला ननु भाविनस्सा
॥ १७ ॥

श्रीकृष्णपादसरसीरुहलीनचित्ता सा कृष्णवर्त्मरुचिरार्चिष उद्गमेन।
कृष्णाभिधाऽपि चपलोज्ज्वलकान्तिरस्या कृष्णालकाः कुटिलकौरवकालपाशाः
॥ १८ ॥

पाञ्चालराजतनया महिलाप्रपञ्चे संचारिणी सकलसद्गुणमूर्तिरेका।
पञ्चास्यकल्पपतिपञ्चक कोमलोरुमञ्चाधिरोहसुभगोज्ज्वलकाञ्चनाङ्गी
॥ १९ ॥

शापादवाप्तपरपूरुषसङ्गपापभीता निजोत्तममरुत्सहवासकामाः।
वैवस्वताश्विपुरुहूतशुभात्मदारा अंशैर्मुदैव विविशुर्द्रुपदात्मजायाम्
॥ २० ॥

त्रस्ता अपीह परपूरुषसङ्गपापात् पूतास्तथैव परपूरुषवायुसङ्गात्।
अत्यन्तपावनतया पवनाभिधस्य सम्पर्कतस्सकलशुद्धिरलं हि सिद्धा
॥ २१ ॥

श्रीविश्वतोमुखरमासखवाग्विलासविद्वच्चतुर्मुखसदासुखसन्निदेशात्।
गन्धर्वगीष्पतिवसुप्रमुखास्तथान्ये हासोन्मुखा मखभुजोऽप्यवतेरुरुर्व्याम्
॥ २२ ॥

आज्ञप्तदैवतगणे वसुधावतीर्णे नारायणः स्वरमणः कमलास्वरूपाम्।
अन्यैस्सुदुष्करकृतौ कुशलाममलापीत् दुर्गां जगत्कुशलकामनया स्मितास्यः
॥ २३ ॥

रम्ये विहारसमये सुमकोमलाङ्गीं प्रेमप्रफुल्लकमलां कलयामि पार्श्वे।
भूदेवता तु नितरां मृदुलस्वभावा त्वं सायुधाष्टकभुजा बलकार्ययोग्या
॥ २४ ॥

तत्तत्स्वभावमनुसृत्य तदर्हकार्ये विश्वासपात्रजनतां प्रणयोपपन्नाम्।
युञ्ज्यात्पुमानभिलषन्निजकार्यसिद्धिं भीरुः प्रतापिसमरे न कदापि योज्यः
॥ २५ ॥

दुर्गेऽष्टमावतरणं भविताऽचिरेण भूमौ ममार्ततमभक्तजनावनाय।
गर्भोऽष्टमस्समुचितो नृपदेवकस्य पुत्र्यां नभोऽष्टमदिने शुभकृष्णपक्षे
॥ २६ ॥

त्वं देवकीजठरसप्तमगर्भमाशु शेषाभिविष्टमुदरे वसुदेव पत्न्याः।
या रोहिणीति विदिता जगतीह तस्याःकुक्षौ निधेहि हरिपाद इवाच्छपद्मम्
॥ २७ ॥

किञ्च व्रजाधिपतिनन्दगृहे यशोदागर्भाद्भवत्यवतरत्त्वथ सत्वरेण।
तद्वंशपावनयशः प्रसराय लोके मुक्तेव वंशजनिता रुचिराच्छरोचिः
॥ २८ ॥

आज्ञां प्रियेण विहितां प्रणयेन मूर्ध्ना भर्गादिसर्वसुरवर्गनताङ्घ्रिदुर्गा।
कार्यं समर्पकतया विदधे यथोक्तं सत्या धवोक्ति परिपालनमेव धर्मः
॥ २९ ॥

व्याप्तो हि विष्णुपदभाग्वसुदेवकान्ताश्रीदेवकीविमलगर्भमवीविशत्सः।
तारापथो घटमिवाल्पतमं रमेशो भक्तावनाय कृपया न करोति किं वा
॥ ३० ॥

क्षुद्रोऽभवज्जलचरोऽखिललोकमान्यः पृष्ठे दधार च गिरिं पतगेन्द्रवाहः।
सौन्दर्यशेवधिरहो वनगो वराहस्तीक्ष्णोग्र दंष्ट्रवदनो नरसिंहवेषः
॥ ३१ ॥

ब्रह्माण्डभेदकनखाग्रमणोरणीयान् त्रैविक्रमं वपुरधान्महतो महीयान्।
श्रीभूधवोपि पटुवाग्बटुवामनः सन् भूमिं पदत्रयमितामसुरं ययाचे
॥ ३२ ॥

शान्तोप्यथो सकरुणोऽपि शितं कठोरं पाणौ कुठारमविषह्यतरप्रहारम्।
धृत्वा समस्तनरपालकुलं समूलं चिच्छेद चाच्छशुभकृच्चरितो यथेच्छम्
॥ ३३ ॥

नित्यावियोगि कमलासुदृढोपगूढः कन्दाशन स्स्वरमणीविरहातुरात्मा।
रक्षोगणाश्रयवने गहने चचार भ्रात्रा समं चिरमसौ बत चीरवासाः
॥ ३४ ॥

क्षीराब्धि मन्दिरगतोऽपि च नित्यतृप्तो लक्ष्मीप्रियोऽपि सुहृदे विपुलार्थदोऽपि।
वृन्दावने सदवने नवनीतचोरो बद्धश्च रज्जुभिरयं ललनेष्टजारः
॥ ३५ ॥

पीताम्बरोऽप्यकपटस्वजनेष्टदाता मुग्धानवञ्चयदलं स दिगम्बरस्सन्।
अक्रूर भक्तवरदोऽपि च लोकभर्ता लोकान्निकृन्तति कलेरवसानकाले
॥ ३६ ॥

त्रैविष्टपप्रवरसादरपूजनीयं वक्षोजपङ्कजरजःकण पिञ्जराभम्।
पादाम्बुजं कुसुमकोमलमेष लोष्ठे विन्यस्य तिष्ठति मुदा निजभक्ततुष्ट्यै
॥ ३७ ॥

श्रीलक्ष्मशोभिनि सदा कमलानिवासे वक्षस्थले सरभसं विहितप्रहारं।
पादं कदुष्णसलिलैर्विमलैर्द्विजस्य प्रक्षाल्य मूर्धनि दधार तदम्बु नम्रः
॥ ३८ ॥

गोरक्षणाय परशोः प्रखरप्रहारं गोपालकेन निजमूर्ध्नि कृतं विषेहे।
आत्मेप्सितप्रणयिनीं परिणेतुमिच्छन् दध्रे पुलिन्दजरतीवरवेषमेषः
॥ ३९ ॥

सन्ताडितो मृदुकपोलतले स्वदासवर्येण वारिकलशानयने विलम्बात्।
अश्वाननो मुनिशिरस्थितभक्ष्यमाश्नात् पृष्ठे तदंसनिहितात्मपुरोङ्घ्रियुग्मः
॥ ४० ॥

भक्त्याऽर्पिते प्रणतभक्तबुधेन तुष्टोऽसौ प्रादुरास वरपायसपूर्णपात्रे।
एवं विधानि चरितानि सुपावनानि संख्यातिगानि विलसन्ति कृपाम्बुराशेः
॥ ४१ ॥

*इति दशम सर्गः*

□□

# ३५. अश्वधाटी श्रीगुरुसार्वभौमस्तवनाष्टकम्

१

श्रीरामपादकमलाराधनेऽमलसमीरागमार्थविवृतौ
श्रीराज्यवित्तिधनदारादिसर्वसुखसारार्थितोषणविधौ ॥
घोरापदालिपरिहारादिकर्मणि च पारानवाप्त महिमा
धीराभिनुत्यगुणवारान्निधिर्मम मुदे राघवेंद्र गुरुराट् ॥

२

तुंगासमुन्नततरंगाख्यचारुतररंगावनीतटमरु
त्संगातिपावनगतिं गाहमानदुरितांगारमंत्रसदने ॥
व्यंगादिदुःखभरभंगायपुण्यचयतुंगाय मंगलरमा-
शृंगारलोलपदभृंगाय भक्तकरुणांगाय मेऽस्तु नमनम् ॥

३

वंदारुभक्तजनवृंदाभिवांछितदवृंदारकावनिरुहं
वृंदावनार्भकमुकुंदांध्रिभास्वदरविंदार्चनैकनियमम् ॥
निंदाऽनभिज्ञनवकुंदाभकीर्तिभरमंदान्यपुण्यचरितम्
वन्दामहे विबुधवृंदावनं (रकं) विमल वृंदावनालय गुरुम् ॥

४

आनम्रभक्तजनतानंददो गुरुवरानंदतीर्थसमय-
ज्ञानं प्रशस्यतरमानंददाति धनदानं तनोति कृपया ॥
श्रीनंदसूनुगुणगानं करोति भुवि दीनं जनं भवरुजा
दूनं सुधारसनिपानं प्रसाध्य मतिपीनं पुनाति गुरुराट् ॥

५

श्रीदारनंदसुतपादारविंद भजनोदारता न मनसो
वेदांतवेत्तुरपि मे दारकार्थपशुकेदारपूर्वविषये ॥

नोदासभाव उदितो दानकर्मकरणादावपीह न मतिः
को दास्यतीड्यगुरुपादान्विना परममोदावहां मम गतिम् ॥

६

सीमातिगामिमहिमा माननीय गरिमाऽमानवीयचरितः
श्रीमाधवेष्टतरधामांतरो रूचिरधामावधीरितविधुः ॥
क्षामान्यदिव्यतपसामालयो जगदसामान्यसद्गुणनिधिः
क्षेमाय मे भवतु कामान् ददातु जित कामादिवैरिविसरः ॥

७

सेवाविनम्रशुचिभावार्द्रचित्तजन देवांगणक्षितिरुहः
श्रीवासवीसुतदयावाप्तदिव्यधिषणाऽवाङ्मुखीकृतगुरुः ॥
जैवातृकामलयशावादिदुर्मतिजशैवादिदुर्मतवनी
दावानलो मम तमोवारणाय गुरुरेवायमस्तु शरणम् ॥

८

सीतासहायमुखशीतांशुदर्शनजपूतांतरो भववने
भीतात्मभक्तजनतातापहो विमलवातागमेन सुखदः ॥
त्राता सतां लषितदाता सदा विबुधगीताब्धिपावनयशाः
शाताय मेऽस्तु मुनि नेता गुरुस्समुपनीताखिलर्द्धिरचिरात् ॥

९

सद्योगालवपुण्यश्रीगालवक्षेत्रवासिना
रामेणरचिताभक्त्या गुरुराजदयार्थिना ॥ १० ॥
अश्वधाटीवृत्तरूढपरिपाटी गुरुस्तुतिः
आटीकतां सतां चित्ते प्रसादनपटीयसी ॥ ११ ॥

*श्री राघवेन्द्रगुरुसार्वभौमाणां वृन्दावन प्रवेश*
*त्रिशतमानोत्सवप्रसंगे रचितम् ॥*

□□

# ३७. ॥ श्री धीरेंद्रस्तोत्रम् ॥

श्रीराघवेन्द्रमुनिराट्गुरुसार्वभौम
पीठाधिरोहणमहोन्नतभाग्यशालिन् ॥
तत्सन्निधानमहसा सकलेष्टदायिन्
धीरेन्द्रतीर्थ गुरुराट् परिपूरयेष्टम् ॥ १ ॥

पूर्वाश्रमीयजयरामसुनामधेय
टीकाकृदर्चितलसज्जयरामपूज ॥
वादाहवे विजयलब्धदिगन्तकीर्ते ।
धीरेन्द्रतीर्थगुरुराट् करुणां कुरुष्व ॥ २ ॥

धाराप्रवाहिकरुणामसृणान्तरङ्ग
धौरेयविश्रुततपस्विधुरन्धराणाम् ।
सार्थाभिधाधर धरातलकामधेनो
धीरेन्द्रतीर्थगुरुराट् दिश धीरतां मे ॥ ३ ॥

भक्ताखिलेष्टवरदः प्रवरो बुधानां
तीरे पवित्रवरदासरितो निवासिन् ॥
वाराशिशायिचरणाब्जरतो विरागी
धीरेन्द्रतीर्थमुनिराट् दिशताद्दृशं मे ॥ ४ ॥

सूरीडितो गुरुगुणस्तवनप्रबन्ध
व्याख्यानकौशलनिदर्शितधीप्रभाव ॥
दूरीकृताघ पवनागमपावनात्मन्
धीरेन्द्रतीर्थगुरुराट् दिशमङ्गलानि ॥ ५ ॥

❑❑

# ३६. श्री सत्यध्यानगुरुगुणस्मरणम्

निस्सीमा सुविरक्तता, निरुपमा चोदारतौत्सर्गिकी
विद्वद्वत्सलता गतच्छलकथा स्वच्छा सदोद्रेकिणी ॥
ज्ञानज्योतिरथोज्ज्वलं च विततं यस्मिन्सदोज्जृम्भितं
सत्यध्यानगुरुं स्मरामि तमहं भास्वद्गुणाम्भोनिधिम् ॥ १ ॥

शाटीं यश्श्लथतन्तुसंततिशतच्छिद्रां वसानो वशी
कौशेयैर्वसनैस्सुधीसमुदयं सूर्णाभ्वरैर्भूषयन् ॥
स्वीयं शैत्यनिवारणं स्म मनुते संशोभितं स्वं सदा
सत्यध्यानगुरुं स्मरामि विबुधस्वर्द्रुं विरक्ताग्रगम् ॥ २ ॥

रोटीं नीरसयावनालरचितां स्थूलैः कृतं तण्डुलै
रर्धपक्वमनाज्यमन्नमदधि प्रीत्यैव भुञ्जन्हसन् ॥
शाल्यन्नैर्घृतकुल्यया स्म सुधियस्संतर्प्य यो मोदते
सत्यध्यानगुरुं स्मरामि तमहं वैराग्यवारांनिधिम् ॥ ३ ॥

भार्याबन्धुजनान्निरस्य विदुषो यस्साधिकारे पदे
संयोज्य व्यवहार-नीतिनिपुणान्वेदान्तराज्यं न्वशात् ॥
मुक्तद्वारमथाकरोन्मतिमतां द्राक्षादिखाद्यालयं
सत्यध्यानगुरुं स्मरामि तमहं पुत्रीकृतप्राज्ञकम् ॥ ४ ॥

यो गोपालपुरं हि राजपद भाक्सत्र्यम्बरिग्रामकं
क्रीत्वा लक्षधनैश्शताधिकबुधव्रातैकरक्षाकृते ॥
ब्रह्मस्वाहरणौघकारणतया तस्योपभोगं जहौ
सत्यध्यानगुरुं स्मरामि तमहं विद्वत्कुटुम्बं सदा ॥ ५ ॥

चातुर्मास्यमहाव्रतं सफलतां धत्ते न सुज्ञैर्विने-
त्येवं तान्सकलान्कुटुम्बसहितानाकार्य सात्याग्रहम् ॥
तत्त्वज्ञानमयामृतेन सरसाभीष्टाशनैस्तृप्तिकृ-
त्सत्यध्यानगुरुं स्मरामि सततं पुण्यात्मचूडामणिम् ॥ ६ ॥

चातुर्मास्यमहाव्रतं बहुधरादेवे महापत्तने
स्याच्चेत्तर्हि महान्व्ययो हि भवितेत्युक्ते किलाप्तैर्जनैः ॥
भूयोब्राह्मणभुक्तिरेव हि मठोत्कर्षावहेत्याह यः
सत्यध्यानगुरुं स्मरामि तमहं ब्रह्मण्यवर्यं सदा ॥७॥

अन्यत्रापि विलोकितं यदवदत्सा "द्वा सुपर्णा" श्रुति-
र्विद्वच्छिष्य-गुरू मठद्रुमगतावन्योन्यसख्यौ खगौ ।
एकस्स्वादुफलं भुनक्त्यनशनोऽन्यश्चाकसीति प्रभुः
सत्यध्यानगुरुं स्मरामि तमहं वेदार्थमर्मग्रहम् ॥८॥

तीर्थे दानमकुर्वतो बुधजनान्बन्धूनिवारक्षतः
लोभात्संग्रहकारिणश्श्रुतिशिरःपाठादि सर्वं तपः ॥
नातिप्रीतिकरं हरेरिति सदा सत्पात्रदानोद्यतं
सत्यध्यानगुरुं स्मरामि सुतपस्तत्त्वप्रणालीविदम् ॥९॥

तर्के संगदितात्मलक्षणसदव्याप्तेर्महार्हस्थलं
नाप्तत्वेन पुरस्करोति कमपि ज्ञानैकलुब्धान्तरः ॥
निस्स्वान्नैव तिरस्करोति विबुधानस्वीयबुध्या स्म यः ॥
सत्यध्यानगुरुं स्मरामि तमहं ज्ञानिप्रियेशप्रियम् ॥१०॥

दोषज्ञार्थमसंविभाज्य रुचिकृत्खाद्यस्य यद्भक्षणं
हेयं तीक्ष्णविषाशनोपममथो मेने स्म पापावहम् ॥
तस्मान्नित्यकदन्नभुग्बुधजनान्संभोज्य मिष्टौदनं
यस्सद्ध्यानगुरुं स्मरामि तमहं ज्ञानामृतैकप्रियम् ॥११॥

ग्राम-क्षेत्रसमागतं धनमहो दत्तं च भक्तैर्जनै
र्योनैवास्पृशदेनसां जनिभिया दानेतरानेहसि ॥
दूरे तद्गणनाधिसंचयकथा स्वप्नेऽपि नो भोगधीः
सत्यध्यानगुरुं स्मरामि तमहं वैराग्यभाग्योदयम् ॥१२॥

तादृक्षैर्गुणसौरभैः प्रसृमरैस्संतर्प्यमाणाखिल-
प्राज्ञालिव्रजमप्यपास्तवृजिनं दूरीकृतासज्जनम् ॥
सत्यध्यानगुरूत्तमस्य महितस्यान्यावतारत्वतो
विख्यातं मुनिसार्वभौममनिशं सत्यप्रमोदं श्रये ॥१३॥

# ३८. श्री श्रीसत्यध्यानतीर्थ जीवनगाथा

यस्य ज्ञानमयो निरामयतमो यद्ध्यानगम्यो हरिः
सत्यज्ञानमुनीश्वरो जगति यत्सन्यासदीक्षागुरुः ॥
सत्यं ज्ञानमगाधमुज्ज्वलतमं यस्यास लोकोत्तरं
सत्यध्यानगुरुर्महामहिमभाक् स श्रेयसे भूयसे ॥१॥

श्रीकण्ठस्तुतदिव्यकौस्तुभमणिश्रीकण्ठवैकुण्ठसद्
भक्त्युद्रिक्तमना अवाप्तजननः श्रीकण्ठपल्लीकुले ॥
निर्मायाद्यवगुण्ठनश्च भजतां पापव्रजोल्लुण्ठनः
निष्कुण्ठां धिषणां गुरुः प्रदिशताद् दुर्वादकण्ठीरवः ॥२॥

बुद्ध्या प्रगल्भचतुराध्यापकान् हृदयशुध्या युतान् बुधजनान् ।
अध्यापयन् सचतुरध्यायसूत्रगणमध्यात्मशास्त्रमनिशम् ॥
मध्यान्हसूर्यसदृशोऽध्यासभाष्यतमसो ध्यातरामचरणो ।
मेध्यां दृशं दिशतु वृध्या युतां महितसद्ध्यानतीर्थगुरुराट् ॥३॥

कर्नाटकान्ध्रसुकृतद्रवसारतुङ्गा ।
त्वङ्गत्तरङ्गपवनैः कृतपापभङ्गा ॥
तुङ्गानदी वहति चोभयदेशमध्ये
दंष्ट्राच्छतासहजनुः किरिचारुमूर्तेः ॥४॥

तस्यास्तटे द्विजकुलं द्विजराजभास्वत्
कीर्त्युज्ज्वलं ज्वलनभासुरनिष्कलङ्कम् ॥
आचारपूततनु चारुविचारचित्तं
विद्यावदातचरितं सुचिरं न्यवात्सीत् ॥५॥

तद्वंशजाः कुसुमवन्मृदुलाः प्रकृत्या
सर्वेऽप्युदारचरिता अनुदारभावाः ॥
बुध्या निरस्तगुरवो गुरवो बुधानां
मायाधवांघ्रिशरणाः समपास्तमोहाः ॥ ६ ॥

संसारिणोऽपि विषये समुदासभावाः
कंसारिपादकमले कृतदासभावाः ॥
हंसाः सुतीर्थविहृतौ सुतपःप्रभावाः
संसाधितोरुसुकृताश्च महानुभावाः ॥ ७ ॥

भावी दिग्विजयस्सुनिश्चित इति प्रख्यापयन्नञ्जसा
विद्वद्वर्यजयार्यभूसुरवराज्जैवातृकाभो रुचा ॥
जीवोद्धारकरश्च जीवसदृशः प्रज्ञाभरेणोदभूत्
टीकाकृज्जयतीर्थनिर्मितसुधास्वादप्रमोदाप्तये ॥ ८ ॥

कृष्णासंस्मृतिदायिनी शुभगुणैः कृष्णाङ्घ्रिसेवारता
कृष्णानाम सिता हृदा तनुरुचा तृष्णादि दोषोज्झिता ॥
साध्वी यं सुषुवे जयार्य दयिता साध्वीडिता साधुभिः
साध्वीं वाक्श्रियमुज्वलां स विदधे माध्वीकमध्वाश्रयाम् ॥ ९ ॥

संसाराम्बुनिधेर्जनस्य तरणे हेतुस्ससेतुर्यतः
सद्भक्तान् रमयन्स्वयं च रमते श्रीरामपूजादिभिः ॥
तेनान्वर्थक 'सेतुराम' विलसन्नाम्ना धरामण्डले
विख्यातोऽभवदत्युदारचरितः पूर्वाश्रमेऽपूर्वधीः ॥ १० ॥

श्रीकण्ठेन चतुर्मुखेन विनुते सोत्कण्ठमालिङ्गित–
श्रीकण्ठेऽलमकुण्ठभक्तिभरितो वैकुण्ठ ओजोनिधिः
पापाल्लुण्ठतु बुद्धिकुण्ठनकरान् श्रीकण्ठपल्लीकुला–
लङ्कारः परवादिवारणघटानिर्भेदकण्ठीरवः ॥ ११ ॥

कौमारे कवि-काव्य-भव्यधिषणः काव्ये कविः कौशलं
प्राप्तो न्यायपथानुगोऽतिपटुतां न्याये नये यौवने ॥
पाणिन्यागमनैपुणीमपि परां पाणिं च पुण्यापणं
कुर्वाणो बहुदक्षिणावितरणाद्रेजे सतां दक्षिणः ॥१२॥

मीमांसाभिधशासनेऽपि धिषणासीमान्तगां वैदुषीं
भास्वन्मांसलतामवाप विबुधोत्तंसैर्भृशं शंसिताम् ॥
पारम्यान्तपरीसरे प्रसृमरां वेदान्तविच्चातुरीं
विद्वत्वं ननु विश्वतोमुखमभूदेवं हि यूनो गुरोः ॥१३॥

सीतानाम सती सतीगुणशती सार्थाभिधाना सती
सीतां स्मारयतीव रामदयितां शीताद्रिपुत्रीमपि ॥
छात्राणां जननीव पोषणरता वात्सल्यमूर्तिस्सदा
नित्याध्यापनसत्कृतौ सहचरी पत्युः प्रसत्त्युत्सुका ॥१४॥

यस्यालं सरला सुबोधनकला विद्वज्जने दुर्लभा
मस्तिष्कं सहसा प्रविश्य जडतां बुद्धे र्हरन्ती भृशम् ॥
विस्फूर्जत्प्रतिभाभृतो विदधती छात्रान्कृपाछत्रत–
स्त्रातानातनुते स्म विश्रुतबुधोत्तंसान्स भूत्यै गुरुः ॥१५॥

ताते चित्तजये यशस्विनि जयाचार्ये तपश्चर्यया
सर्वज्ञप्रमुखोत्तरादिमठसत्पीठाधिरूढे सति ॥
श्रीपादात्मजताप्रतीतिविषयः श्रीसेतुरामो गुरुः
सर्वज्ञागमबोधनोरुसवने द्राग् दक्षदीक्षां दधौ ॥१६॥

दारापत्यमुखेषु सत्स्वपि परीवारेषु लक्षाधिकं
सर्वस्वं प्रदिशन् मठाय धृतिमान्सन्यासदीक्षाग्रहः ॥
प्राज्ञान् शिष्यगणान्निजात्मजधिया संपोषयन्निस्तुलं
वैराग्यं दधदन्यसर्वयमिनामादर्शतामाप्तवान् ॥१७॥

मृष्टान्नैर्दधिमण्डतो घनघृतासारेण विद्वज्जनान्
सद्योजान्नवनीततोऽपि नितरां सन्तर्पयन्नित्यशः ॥
रोटीमाज्यविवर्जितां स्वयमहो भुङ्क्ते स्म मोदान्वितो
वैराग्यैकनिधिर्बलिप्रतिनिधिर्दाने गुरुः प्रीयताम् ॥१८॥

आसन्ने निधने निजैकदुहितुश्श्रुत्वाऽपि शोकाकुला –
क्रोशं बन्धुजनस्य यस्य तु मनो नाभूद्विकारास्पदम् ॥
खेदात्पाठमनिच्छतोऽपि बलतो व्याख्यन् स्वशिष्यान्सुधां
सोऽयं वज्रकठोरहृद् गुरुवरो लोकोत्तरो मे दृशे ॥१९॥

शिष्यस्य प्रतिभावतः प्रलयदुर्वार्तां समाकर्णय –
न्नैवान्नग्रहणे मनागपि मनो दध्रे दिनानां त्रयम् ॥
नैवं वाचमुवाच किञ्चिदपि वा बाष्पाम्बुपूरेक्षणः
सोऽयं मे सुमकोमलामलमना मोदाय भूयाद्गुरुः ॥२०॥

श्रीरामामतदुर्मताविलमना आदौ च तन्नामधृत्
सुब्बाशास्त्रिहिरण्यपूर्वकशिपोर्ग्रन्थोदरं दारयन् ॥
कारुण्यार्द्रमना मनीषिजनताप्रल्हादमाल्हादयन्
सत्यध्यानमुनीश्वराख्यनृहरिर्भूयान्ममाभीतिदः ॥२१॥

वादे येन पराजितो बुधवरश्चानन्तकृष्णाभिध –
श्शास्त्री खिन्नमना विशुष्कवदनेनानन्तकृष्णोऽभवत् ॥
हाराणो हरिणान् पलायनविधौ जिग्ये जितोप्यञ्जसा
शास्त्रे श्रीगुरुणा सुपर्वतरुणा भक्तेष्टसंपूरणे ॥२२॥

वादाजौ वरकुम्भकोणनगरे यः कुम्भकर्णायितं
तीक्ष्णैर्युक्तिशरैश्च कुम्भिसदृशं तस्तम्भ वादिव्रजम् ॥
अम्भोजासनपाणिपूजितपदश्रीमूलरामार्चको
दुर्वादार्णवकुम्भसम्भवमुनिर्दद्यान्मनीषां शुभाम् ॥२३॥

सत्यध्यानगुरौ परात्परहरेर्जीवाद्भिदां साधय –
त्यैक्यं नूतनदम्पतीदृढपरीरम्भे विलीनं क्षणात् ॥
मिथ्यात्वं जगतो पलाय्य शरणं यातं च वन्ध्यासुतं
मायासत्वरमैन्द्रजालिककलामेवान्वधावद्भयात् ॥ २४ ॥

कारुण्यादिगुणाकरो हितकरो दाने सदोद्यत्करो
मायावाद्यविभीकरोग्रमकरो दोषज्ञदोषाकरः ॥
दोषाङ्कूरमरुः श्रितामरतरुर्दुर्वादिकण्ठत्सरु –
स्सत्यध्यानगुरुर्धिया जितगुरुः पुष्ट्यै गुरुश्रेयसाम् ॥ २५ ॥

पूर्वं संयमनीपुरे प्रचलितेऽपूर्वाभियोगे चिरं
द्वैत्यद्वैतिजनस्य वादसरणिं साक्षिप्रमाणानि च ॥
न्यायाधीशयमेन संविमृशता मायाविनां शासनं
घोरं दत्तममंस्त यस्सुरकलाव्यक्ति र्गुरुस्तं भजे ॥ २६ ॥

वैदैश्च स्मृतिभिः पुराणनिकरैस्सब्रह्मसूत्रैस्तथा
बाढैकस्वरतश्च निश्चिततमं सर्वोत्तमत्वं हरेः ॥
सत्यत्वं जगतस्ततः परभिदां धिक्कुर्वतो मायिनो
घोरान्धं तम उत्कटाघकुटिलान्वैवस्वतः प्रापयत् ॥ २७ ॥

इत्येतद्विषयं जनैरविदितं स्वेनापरोक्षीकृतं
स्पष्टं बोधयितुं बुधाबुधजनान्कारुण्यवारांनिधिः ॥
ग्रन्थान् प्राकृतभाषया व्यरचयत्तत्वावबोधक्षमान्
सत्यध्यानमुनीश्वरो मम दृशे भूयाद्गुरूणां गुरुः ॥ २८ ॥

स्नानार्थं विधृतं करेण गुरुणा कौपीनमार्द्रं पुरा –
राते विठ्ठलमूर्ध्नि लिङ्गमिति ह श्रुत्वा दुरात्मोदितम् ॥
सद्यः खण्डनपारवश्यरभसात् कृत्वा स्वदिग्वस्त्रता
शिष्याणां हसितं च विष्णुपरतालक्ष्येण नो लक्षितम् ॥ २९ ॥

रागो नो विषयेषु किन्तु तदतित्यागे धनोत्सर्जने
भोगो नेन्द्रियसौख्यदार्थनिचयस्यासीत्परं सर्वदा ॥
सुज्ञानामृतसंचयस्य च तथा योगोऽपि नो बान्धवैः
किन्तु श्रीहरिचिन्तने च सततं स श्रीगुरुः श्रेयसे ॥ ३० ॥

प्राणा एव बहिश्चरा धनमिति ख्यातं क्षितौ यत्कृते
प्राणानेव समर्पयन्ति वणिजो दुस्साहसास्तस्कराः ॥
तादृक्प्रेमपदं सुपात्रबुधसात्कारी मुदाऽब्जाधिकं
कोऽन्यो धन्यतमो विनाऽमुतो गुरुवरान्मान्यो वदान्योत्तमः ॥ ३१ ॥

हातुं हीतरबान्धवेषु सुदृढस्स्नेहो नरैश्शक्यते
हर्षग्रन्थिरिति श्रुतौ निगदितेऽपत्ये नितान्तं प्रिये ॥
मर्मस्पृग्दृढमूलरूढविततां प्रीतिं परां दुस्त्यजां
कश्छेत्तुं प्रभवेत्सुरांशमहितान्सद्ध्यानतीर्थान्विना ॥ ३२ ॥

मन्वानस्स्वसुतानिव प्रणयतः शिष्यान्सहस्राधिकान्
धुन्वानश्च तदीयदैन्यमखिलं वित्तादिवृष्ट्या सदा ॥
तन्वानोऽखिलशास्त्रसारविदुषः प्रेम्णा सदाध्यापनात्
हिन्वानस्सकलापदश्च जयतात्सध्यानतीर्थो गुरुः ॥ ३३ ॥

कोपः पापिजने न सूरिषु परं भूयोऽपराधेष्वपि
दुर्वादिद्विषदावलेश्च दमनं स्वीयेन्द्रियाणामपि ॥
किन्तु प्राज्ञजनस्य नैव विहितं सान्द्रानुकम्पात्मना
येनामेयगुणाकरेण तमहं सेवे धियश्शुद्धये ॥ ३४ ॥

नित्यं सत्यमभूद्धि यस्य भगवद्ध्यानं तथाऽध्यापिते
शास्त्रे चावितथैव चित्तवपुषोर्यत्तीर्थता सन्नुता ॥
तैनान्वर्थशुभाभिधेयमहितो मह्यां महोद्यन्महाः
सत्यध्यानमुनिर्हताघनिवहो मोहापहस्स्यान्मम ॥ ३५ ॥

□□

# ३९. पंडित मळगी वेदव्यासाचार्यस्तुति :

विद्यावत्कुलचक्रवर्तियशसो देवांशभाजो गुरोः।
सत्यध्यानमुनेः सुशिष्यविबुधव्राताग्रगण्यः श्रुतः ॥
प्राज्ञच्छात्रशतस्य यः प्रसवभूर्भास्वद्यशोभासुरो।
वेदव्यासबुधाग्रणीस्सुकृतिनामग्रेसरः श्रेयसे ॥१॥

सुप्तोपाख्यकुलोद्भवोऽपि सततं जाग्रद्धरेः सेवने ।
सिद्धार्यात्मभवः प्रसिद्धविततप्रज्ञानसिद्धिं गतः ॥
पंकग्रामवरं गतोऽपि विमलस्तन्वा गिरा चेतसा ।
वेदव्यासविदग्रणीर्बुधशिरोभ्राजन्मणिः श्रेयसे ॥२॥

स्वावासेन कपाटकोटिनगरीं सुक्षेत्रतां प्रापयन् ।
ज्ञानावर्जितपुण्यकोटिपटलो द्राक् पाटिताघव्रजः ॥
मुक्तिद्वार कपाटयोः पटुहरिप्रीत्याप्तिरुद्घाटने ।
कोटिं प्राप परां परापजयदां शास्त्रार्थकोटिक्रमे ॥३॥

आकृत्या ननु वामनोऽपिच चतुश्शास्त्रेष्वगाधोज्वलद्
वैदुष्यातिशयोपलब्धयशसा व्याप्तश्चतुर्विक्रमः ॥
एकास्योऽपि कुवादिकुम्भदलने पञ्चाननो योऽभवत्।
स श्रीव्याससुधीर्वशीकृतमना मेधाविमूर्धामणिः ॥४॥

तर्कः कर्कशवाक् सुबोधनवशाद्यस्याननेऽभून्मृदुः ।
श्रुत्यन्तायतसन्मुखान्व्यधित यच्छ्रुत्यन्तपाठो बुधान् ॥
मीमांसाऽपि सुमांसलत्वमभजद्यस्यानुवादोज्वला ।
श्रीव्यासश्चतुरस्रधीश्चतुरवाक्चञ्चुश्चतुस्तन्त्रवित् ॥५॥

वेदान्मध्वगुरूदितार्थसरसान् यो वेद विद्वज्जन
　　व्रातायापि निवेदयन् अलभत व्यासप्रसादं परम् ॥
यः सार्थीकृतवान्निजायुरखिलं नाम्ना सहैवामलं
　　वेदव्यास सुधीश्वरोऽवनितले धन्यश्च मान्यससताम् ॥ ६ ॥

सद्धर्माचरणाच्छरीरममलं ध्यानाद्धरेर्मानसं
　　सच्छास्त्रस्य निरन्तरप्रवचनाद्वाणी सुधास्राविणी ॥
सर्वां निर्मलतां वहन्नपि मुधैवाऽसूयिनामातनोत्
　　यश्चेतो मलिनं दिवाकर इव व्यासो दिवान्धावले: ॥ ७ ॥

बाले निष्कपटस्वभावसरलीभावेन भावार्द्रधी:
　　सच्छास्त्रस्य निरर्गलप्रवचने यो यौवनोत्साहभाक् ॥
वृद्धो यो वयसा भृशं परिणतप्रज्ञाप्रकर्षेण सत्-
　　कीर्त्या चामरतां गतः सुकृतिराट् व्यासो गुणावासभूः ॥ ८ ॥

दम्भो यत्र हि नोदजृम्भत तथा लोभो न लेभे पदं
　　कोपो लोपमवाप नित्यमकरोन्नाहंकृतिर्हुङ्कृतिम् ॥
उत्सन्नः किल मत्सरोऽपि नितरां दूराद्दुराशा द्रुता
　　विद्वत्तातिशयेऽपि तत्सहजनुर्दोषानुषङ्गोज्झितः ॥ ९ ॥

सच्छास्त्राध्ययनस्य मन्दिरमभूत् छात्रावलीनां चिरात्
　　अन्नच्छत्रमथागतातिथिजनव्रातस्य चाहर्निशम् ॥
यस्यागारमपारसारसुकृतासारप्रसारं बभौ
　　वेदव्यास उदारधीरचरितः सद्भिस्तुतस्सादरम् ॥ १० ॥

संसारे मुनिवत्सरोजदलवन्निर्लिप्ततामावहन्
　　प्राज्ञैः व्यासमुनिर्ह्यसाविति मुदा सम्बोधितः सादरम् ॥
पीठाधीशमुनीश्वरैश्च पदवीदानेन सम्मानितः
　　वेदव्याससुधीमणिर्गुणमणिश्रेणीलसद्भूषणः ॥ ११ ॥

निर्याञ्चश्शुभपञ्चसप्ततिवया विद्वत्सु पञ्चाननः
पञ्चत्वं वपुषा गतोऽपि विलसत्कीर्तिप्रपञ्चोज्ज्वलः ॥
पाञ्चालीप्रियसारथेर्मधुजितः पादावमुञ्चन्हृदा
विस्फूर्जन् समुदञ्चितप्रतिभया व्यासस्य निर्वञ्चनः ॥१२॥

भक्त्या श्रीशस्मरणसततताभ्यासयोगप्रभावात्
स्वीय प्राणोत्क्रमणसमये सच्चिदानन्द आत्मा ॥
इत्थं प्रोच्चैर्मुकुलितकरं व्याहरन्निर्विकारं
वेदव्यासो हरिपदगतिं सूचयन्नात्मनोऽगात् ॥१३॥

पुष्णन्तः स्वकुटुम्बमेव सुजनान्निन्दन्त उच्छृङ्खलाः
जीवन्तोऽपि मृतास्त उच्छ्रितमदा लोकेऽयशोदूषिताः ॥
छात्रान्साधुजनातिथीनपि मुदा पाठेन चान्नेन ये
वेदव्याससमा मृता अपि सदा जीवन्ति ते कीर्तिताः ॥१४॥

विद्योल्लास कृपाविलास सरसोपन्यास शास्त्रावलेः
त्रासायासविदूर सर्वविषयोदास स्वभावाद् दृढम् ॥
भासा भासुर चिद्विसारतरणेरंहोनिरासामल
वेदव्यास मुकुन्ददास सुगुणावासाय तुभ्यं नमः ॥१५॥

नमो विद्वत्प्रेमिन् बुधजनशिरोभूषण नमः
सदा प्राज्ञच्छात्रप्रणयनपरैकव्रत नमः ॥
नमस्ते सत्कीर्ते सुकृतमयसज्जीवन मुहु
र्नमो वेदव्यास प्रवर सुगुणावास महित ॥१६॥

□□



Photo taken at the felicitation of Pandit Galagali Ramacharya at Bangalore on 13th July 1968 at the hands of the then Karnatak Governer the Late G. S. Pathak. Smt. Padmawatibai Ramacharya Galagali, Shri R. R. Diwakar, Prof. K. T. Panduringi, Shri Govardhanacharya Galagali and Shri Pandharinathacharya Galagali are also seen.